सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ॥२२३॥

अष्टाङ्गधूपः।

पुरध्यामवचासर्जनिम्बार्कागुरुदारुभिः।
सर्वज्वरहरो धूपः कार्य्योऽयमपराजितः॥२२४॥
वैडालं वा शकृद्योज्यं वेपमानस्य धूपने।
अपामार्गजटा कट्यां लोहितैः सप्ततन्तुभिः॥२२५॥
बद्धा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम्।
काकजङ्घा बला श्यामा ब्रह्मदण्डी कृताञ्जलिः॥२२६॥
पृश्निपर्णी त्वपामार्गस्तथा भृङ्गरजोऽष्टमः।
एषामन्यतमं मूलं पुष्ये णोद्धृत्य यत्नतः॥ २२७ ॥
रक्तसूत्रेण संवेष्ट्य बद्धमैकाहिकं जयेत्।
मूलं जयन्त्याः शिरसा धृतं सर्वज्वरापहम्॥२२८॥
कर्मसाधारणं जह्यात् तृतीयकचतुर्थकौ।
आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे॥२२९॥
गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः।
तस्मै तिलोदकं दद्यान्मुच्यत्येकाहिको ज्वरः॥२३०॥
एतन्मन्त्रेण चाश्वत्थपत्रहस्तः प्रतर्पयेत्।
सोमं सानुचरं देवं समातृगणमीश्वरम्॥२३१॥
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात्।
विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम्॥ २३२ ॥
स्तुवन्नामसहस्रेण ज्वरान् सर्वान् व्यपोहति।
ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः॥२३३॥
रूक्षस्य येन शाम्यन्ति सर्पिस्तेषां भिगग्जितम्।
निर्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम्॥२३४॥

न सर्पिः पाययेत् प्राज्ञः शमनैस्तमुपाचरेत्।
यावल्लघुत्वादशनं दद्यान्मांसरसेन तु॥ २३५॥
मांसार्थमेणलावादीन् युक्त्या दद्याद्विचक्षणः।
कुक्कुटांश्च मयूरांश्च तित्तिरिं क्रौञ्चमेव च॥२३६॥
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः।
लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत्॥२३७॥
भिषङ्मात्राविकल्पज्ञो दद्यात् तानपि कालवित्।
पिप्पल्यश्चन्दनं मुस्तम् उशीरं कटुरोहिणी॥२३८॥
कलिङ्गकास्तामलकी शारिवातिविषे स्थिरा।
द्राक्षामलकबिल्वानि त्रायमाणा निदिग्धिका॥२३९॥
सिद्धमेतैर्घृतं सद्यो ज्वरं जीर्णमपोहति।
क्षयं कासं शिरःशूलं पार्श्वशूलं हलीमकम्॥२४०॥
अङ्गाभितापमग्निञ्च विषमं सन्नियच्छति।
पिप्पल्याद्यमिदं क्वापि तन्त्रे क्षीरेण पच्यते॥२४१॥
यत्राधिकरणेनोक्तिर्गणे स्यात् स्नेहसंविधौ।
तत्रैव कल्कनिर्यूहाविष्येते स्नेहवेदिना॥२४२॥
एतद्वाक्यबलेनैव कल्कसाध्यपरं घृतम्।
अतस्तु ह्यौषधानान्तु प्रमाणं यत्र नेरितम्॥२४३॥
तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम्।
अनुक्ते द्रवकार्य्ये तु सर्वत्र सलिलं मतम्॥२४४॥
घृततैलगुडादींश्च नैकाह्नादवतारयेत्।
व्युषितास्तु प्रकुर्वन्ति विशेषेण गुणान् यतः॥२४५॥
स्नेहकल्को यदाङ्गुल्यावर्त्तितो वर्त्तिवद्भवेत्।
वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धिं विनिर्दिशेत्॥२४६॥

मन्देऽग्नौ परमे प्राप्ते फेनस्योपरमे तथा ।
गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत् ॥२४७॥
पञ्चकोलैः ससिन्धूत्थैः पलिकैः पयसा समम् ।
सर्पिःप्रस्थं शृतं प्लीहविषमज्वरगुल्मनुत् ॥२४८॥

क्षीरषट्पलकं घृतम् ।

अत्र द्रवान्तरानुक्तौ क्षीरमेव चतुर्गुणम् ।
द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत् ॥२४९॥
दशमूलीरसे सर्पिः सक्षीरे पञ्चकोलकैः ।
सक्षारैर्हन्ति तत् सर्वं ज्वरकासाग्निमन्दताः ।
वातपित्तकफव्याधीन् प्लीहानं चापि पाण्डुताम् ॥२५०॥

दशमूलषट्पलकं घृतम् ।

क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् ।
स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः ॥२५१॥
चतुर्गुणत्वष्टगुणं द्रवद्वैगुण्यतो भवेत् ।
पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ ॥२५२॥
तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम् ।
वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम् ॥२५३॥
पक्त्वा तेन कषायेण पयसा द्विगुणेन च ।
पिप्पलीमलमृद्वीका चन्दनोत्पलनागरैः ।
कल्कीकृतैश्च विपचेत् घृतं जीर्णज्वरापहम् ॥२५४॥

वासाद्यं घृतम् ।

गुडूच्याः क्वाथकल्काभ्यां त्रिफलाया वृषस्य च ।
मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः ॥२५५॥

गुडूच्यादिघृतानि ।

ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम् ।
षडहे षडहे देयं कालं वीक्ष्यामयस्य च ॥२५६॥
जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् ।
तदेव तरुणे पीतं विषवद्धन्ति मानवम् ॥२५७॥
कासाच्छ्वासात् शिरःशूलात् पार्श्वशूलात् सपीनसात् ।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥२५८॥
द्रव्यादष्टगुणं क्षीरं क्षीरात् तोयं चतुर्गुणम् ।
क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥२५९॥
त्रिकण्टकबलाबिल्वगुडनागरसाधितम् ।
वर्च्चोमूत्रविबन्धघ्नं शोथज्वरहरं पयः ॥२६०॥
वृक्षीरबिल्ववर्षाभूपयसोदकमेव च ।
पचेत् क्षीरावशिष्टन्तु तद्धि सर्व्वज्वरापहम् ॥२६१॥
शीतं कोष्णं ज्वरे क्षीरं यथा स्वैरौषधैर्युतम् ।
एरण्डमूलसिद्धं वा ज्वरे सपरिकर्त्तिके ॥२६२॥
ज्वरिभ्यो बहुदोषेभ्य ऊर्द्ध्वाधश्च बुद्धिमान् ।
दद्यात् संशोधनं काले कल्पे यदुपदेक्ष्यते ॥२६३॥
मदनं पिप्पलीभिर्वा कलिङ्गैर्मधुकेन वा ।
युक्तमुष्णाम्बुना पीतं वमनं ज्वरशान्तये ॥२६४॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा ।
त्रिवृतां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥२६५॥
ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ।
कामन्तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥२६६॥
प्रयोजयेज्ज्वरहरान् निरूहान् सानुवासनान् ।
पक्वाशयगते दोषे वक्ष्यन्ते ये च सिद्धिषु ॥२६७॥

गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च ।
जीर्णज्वरे रुचिकरं दद्याच्छीर्षविरेचनम् ॥२६८॥
अभ्यङ्गांश्च प्रदेहांश्च सस्नेहान् सानुवासनान् ।
विभज्य शीतोष्णकृतान् दद्याज्जीर्णज्वरे भिषक् ॥२६९॥
तैराशु प्रशमं याति बहिर्मार्गगतो ज्वरः ।
लभन्ते सुखमङ्गानि बलं वर्णश्च वर्द्धते ॥२७०॥
सुवर्चिकानागरकुष्ठमूर्वा-
लाक्षानिशालोहितयष्टिकाभिः ।
तैलं ज्वरे षड्गुणतक्रसिद्ध-
मभ्यञ्जनाच्छीतविदाहनुत् स्यात् ॥२७१॥
दध्नः ससारकस्यात्र तक्रं कट्वरमिष्यते ।
घृतवत्तैलपाकोऽपि तैले फेनोऽधिकः परः ॥२७२॥

षट्कट्वरं तैलम् ।

मूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी ।
बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी ॥२७३॥
आरनालाढकेनैव तैलप्रस्थं विपाचयेत् ।
तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम् ॥२७४॥

अङ्गारकं तैलम् ।

लाक्षाहरिद्रामञ्जिष्ठाकल्कैस्तैलं विपाचयेत् ।
षड्गुणेनारनालेन दाहशीतज्वरापहम् ॥२७५॥

लाक्षादितैलम् ।

यवचूर्णार्द्धकुडवं मञ्जिष्ठार्द्धपलेन तु ।
तैलप्रस्थं शतगुणे काञ्जिके साधितं जयेत् ॥२७६॥
ज्वरं दाहं महावेगमङ्गानाञ्च प्रहर्षनुत् ।

सर्जकाञ्जिकसंसिद्धं तैलं शीताम्बुमर्दितम् ॥२७७॥
ज्वरदाहापहं लेपात् सद्योवातास्रदाहनुत्।
चन्दनाद्यमगुर्वाद्यं तैलं चरककीर्त्तितम् ॥२७८॥
तथा नारायणं तैलं जीर्णज्वरहरं परम्।
अभिघातो ज्वरो न स्यात् पानाभ्यङ्गेन सर्पिषः ॥२७९॥
क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया।
ओषधीगन्धविषजौ विषपीतप्रबाधनैः ॥२८०॥
जयेत् कषायैर्मतिमान् सर्वगन्धकृतैस्तथा।
अभिचाराभिशापोत्थौ ज्वरौ होमादिना जयेत् ॥२८१॥
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीड़जौ।
क्रोधजे पित्तजित् काम्या अर्थाः सद्वाक्यमेव च ॥२८२॥
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च।
हर्षणैश्च शमं यान्ति कामक्रोधभयज्वराः ॥२८३॥
कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः।
याति ताभ्यामुभाभ्याञ्च भयशोकसमुद्भवः ॥२८४॥
भूतविद्यासमुद्दिष्टैर्बन्धावेशनताड़नैः।
जयेत् भूताभिषङ्गोत्थं मनः शान्त्यैव मानसम् ॥२८५॥
व्ययामञ्च व्यवायञ्च स्नानं चंक्रमणानि च।
ज्वरमुक्तो न सेवेत यावन्नो बलवान् भवेत् ॥२८६॥
देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम्।
स्वेदः क्षवः प्रकृतिगामि मनोऽन्नलिप्सा
कण्डुश्च मूर्ध्नि विगतज्वरलक्षणानि ॥२८७॥

इति ज्वरचिकित्सा।

## अथ ज्वरातीसाराधिकारः ।

ज्वरातिसारे पेयादिक्रमः स्याल्लङ्घिते हितः ।
ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः ।
पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ॥१॥

उत्पलषट्कम् ।

पाठेन्द्रयवभूनिम्बमुस्तपर्पटकामृताः ।
जयन्त्यामामतीसारं सज्वरं समहौषधाः ॥२॥
नागरातिविषामुस्तभूनिम्बामृतवत्सकैः ।
सर्वज्वरहरः क्वाथः सर्वातिसारनाशनः ॥३॥
ह्रीवेरातिविषामुस्तबिल्वधान्यकनागरैः ।
पिबेत् पिच्छाविबन्धघ्नं शूलदोषामपाचनम् ।
सरक्तं हन्त्यतीसारं सज्वरं वाथ विज्वरम् ॥४॥

ह्रीवेरादिः ।

गुडूच्यतिविषाधान्यशुण्ठीबिल्वाब्दबालकैः ।
पाठाभूनिम्बकुटजचन्दनोशीरपद्मकैः ॥५॥
कषायः शीतलः पेयो ज्वरातीसारशान्तये ।
हृल्लासारोचकच्छर्दिपिपासादाहनाशनः ॥६॥

गुडूच्यादिः ।

उशीरं बालकं मुस्तं धन्याकं विश्वभेषजम् ।
समङ्गाधातकीलोध्रं बिल्वं दीपनपाचनम् ॥७॥
हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम् ।
सशोणितमतीसारं सज्वरं वाथ विज्वरम् ॥८॥

उशीरादिः ।

पञ्चमूलीबलाबिल्वगुडूचीमुस्तनागरैः ।

पाठाभूनिम्बह्रीबेरकुटजलक्फलैः शृतम् ॥९॥
हन्ति सर्वानतीसारान् ज्वरदोषं वमिं तथा ।
सशूलोपद्रवं श्वासं कासं हन्यात् सुदारुणम् ॥१०॥

पञ्चमूल्यादिः ।

कलिङ्गातिविषाशुण्ठीकिराताम्बुयवासकम् ।
ज्वरातीसारसन्तापं नाशयेदविकल्पतः ॥११॥
वत्सकं कट्फलं दारु रोहिणी गजपिप्पली ।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यमानिका ॥१२॥
द्वावप्येतौ सिद्धियोगौ श्लोकार्द्धेनाभिभाषितौ ।
ज्वरातीसारशमनौ विशेषाद्दाहनाशनौ ॥ १३ ॥
नागरामृतभूनिम्बबिल्वबालकवत्सकैः ।
समुस्तातिविषोशीरैर्ज्वरातिसारहृज्जलम् ॥१४॥
मुस्तकबिल्वातिविषापाठाभूनिम्बवत्सकैः क्वाथः ।
मकरन्दगर्भयुक्तो ज्वरातिसारौ जयेद् घोरौ ॥१५॥
घनजलपाठातिविषापथ्योत्पलधान्यरोहिणीबिल्वैः ।
सेन्द्रयवैः कृतमम्भः सातीसारं ज्वरं जयति ॥१६॥
कलिङ्गबिल्वजम्ब्वाम्रकपित्थं सरसाञ्जनम् ।
लाक्षाहरिद्रे ह्रीबेरं कट्फलं शुकनासिकाम् ॥१७॥
लोध्रं मोचरसं शङ्खं धातकीवटशुङ्गकम् ।
पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान् ॥१८॥
छायाशुष्कान् पिबेच्छीघ्रं ज्वरातिसारशान्तये ।
रक्तप्रसादनाश्चैते शूलातिसारनाशनाः ॥ १९ ॥

कलिङ्गाद्यगुड़िका ।

उत्पलं दाड़िम्बत्वक् च पद्मकेशरमेव च ।

पिबेत्तण्डुलतोयेन ज्वरातिसारनाशनम् ॥२०॥
व्योषं वत्सकवीजञ्च निम्बभूनिम्बमार्कवम् ।
चित्रकं रोहिणीं पाठां दार्वीमतिविषां समाम् ॥२१॥
श्लक्ष्णचूर्णीकृतान् सर्वांस्तत्तुल्यां वत्सकत्वचम् ।
सर्वमेकत्र संयुज्य प्रपिबेत्तण्डुलाम्बुना २२॥
सक्षौद्रं वा लिहेदेतत् पाचनं ग्राहिभेषजम् ।
तृष्णारुचिप्रशमनं ज्वरातीसारनाशनम् ॥२३॥
कामलां ग्रहणीदोषान् गुल्मं प्लीहानमेव च ।
प्रमेहं पाण्डुरोगञ्च श्वयथुञ्च विनाशयेत् । २४ ॥

व्योषाद्यं चूर्णम् ।

दशमूलीकषायेण विश्वमक्षसमं पिबेत् ।
ज्वरे च वातिसारे च सशोथे ग्रहणीगदे ॥ २५ ॥
विडङ्गातिविषा मुस्तं दारु पाठा कलिङ्गकम् ।
मरीचेन समायुक्तं शोथातिसारनाशनम् ॥ २६ ॥
किराताब्दामृताविश्वचन्दनोदीच्यवत्सकैः ।
शोथातिसारशमनं विशेषाज्ज्वरनाशनम् ॥ २७ ॥
किराताब्दामृतोदीच्यमुस्तचन्दनधान्यकैः ।
शोथातिसारतृड्दाहशमनो ज्वरनाशनः ॥२८॥

इति ज्वरातीसारचिकित्सा ।

## अथातीसाराधिकारः ।

आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः ।
अतः सर्वातिसारेषु ज्ञेयं पक्वामलक्षणम् ॥ १ ॥
मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले ।

विमातिद्रवसंघातशैत्यश्लेष्मप्रदूषणात्॥ २॥
शकृद् दुर्गन्धिसाटोपविष्टम्भार्त्तिप्रसेकिनः।
विपरीतं निरामन्तु कफात् पक्वञ्च मज्जति॥ ३॥
आमे विलङ्घनं शस्तमादौ पाचनमेव च।
कार्य्यञ्चानशनस्यान्ते प्रद्रवं लघुभोजनम्॥ ४॥
लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः।
समुदीर्णं दोषचयं शमयति तत् पाचयत्यपि च॥५॥
ह्रीवेरशृङ्गवेराभ्यां मुस्तपर्प्पटकेन वा।
मुस्तोदीच्यशृतं तोयं देयं वापि पिपासवे॥ ६॥
भुक्तोऽन्नकाले क्षुत्क्षामं लघून्यन्नानि भोजयेत्॥७॥
औषधसिद्धाः पेया लाजानां शक्तवोऽतिसारहिताः।
वस्त्रप्रस्रुतमण्डः पेयश्च मसूरयूषश्च॥८॥
गुर्वी पिण्डी खरात्यर्थं लघ्वी सैव विपर्य्ययात्।
शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका॥ ९॥
शालपर्णी पृश्निपर्णी बृहती कण्टकारिका।
बलाश्वदंष्ट्रा विल्वानि पाठा नागरधान्यकम्।
एतदाहारसंयोगे हितं सर्व्वातिसारिणाम्॥ १०॥

बृहच्छालपर्ण्यादिः।

शालपर्णीबलाविल्वैः पृश्निपर्ण्या च साधिता।
दाड़िमाम्ला हिताः पेयाः पित्तश्लेष्मातिसारिणाम्॥११

शालपर्ण्यादिः।

यवागूमुपभुञ्जानो ननु व्यञ्जनमाचरेत्।
शाकमांसफलैर्युक्ता यवाग्वोऽम्लाश्च दुर्जराः॥ १२॥
धान्यपञ्चकसंसिद्धो धान्यविश्वकृतोऽथवा।

आहारो भिषजा योज्यो वातघ्नो ह्यातिसारिणाम् ॥१३॥
वातपित्ते पञ्चमूल्या कफे वा पञ्चकोलकैः।
धान्योदीच्यशृतं तोयं तृष्णादाहातिसारनुत्॥
आभ्यामेव सपाठाभ्यां सिद्धमाहारमाचरेत्॥ १४॥
दोषाः संनिचया यस्य विदग्धाहारमूर्च्छिताः।
अतिसाराय कल्पन्ते भूयस्तान् संप्रवर्त्तयेत्॥१५॥
न तु संग्रहणं दद्यात् पूर्वमामातिसारिणे।
दोषा ह्यादौ बध्यमाना जनयन्त्यामयान् बहून् ॥१६॥
शोथपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान्।
दण्डकालसकाध्मानान् ग्रहण्यर्शोगदांस्तथा॥ १७॥
क्षीणधातुबलार्त्तस्य बहुदोषोऽतिनिस्रुतः।
आमोऽपि स्तम्भनीयः स्यात् पाचनान्मरणं भवेत् ॥१८॥
स्तोकं स्तोकं विबन्धं वा सशूलं योऽतिसार्य्यते।
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥१९॥
धन्याकं नागरं मुस्तं बालकं विल्वमेव च।
आमशूलविबन्धघ्नं पाचनं वह्निदीपनम्॥ २०॥

धान्यपञ्चकम्।

इदं धान्यचतुष्कं स्यात् पित्ते शुण्ठीं विना पुनः।
पिप्पलीं नागरं धान्यं भूतिकञ्चाभयां वचाम्॥ २१॥
ह्रीवेरभद्रमुस्तानि विल्वं नागरधान्यकम्।
पृश्निपर्ण्यश्वदंष्ट्रा च समङ्गा कण्टकारिका॥२२॥
तिस्रः प्रमथ्या विहिताः श्लोकार्द्धैरतिसारिणाम्।
कफपित्ते च वाते च क्रमादेताः प्रकीर्त्तिताः॥२३॥
संज्ञा प्रमथ्या ज्ञातव्या योगे पाचनदीपने।

ह्रुवचातिविषाहिङ्गुबलासौवर्चलाभयाः ॥ २४ ॥
शीतोष्णेनाम्भसा हन्यादामातिसारमुद्धतम् ।
अथवा पिप्पलीमूलपिप्पलीद्वयचित्रकान् ॥ २५ ॥
सौवर्चलवचाव्योषहिङ्गुप्रतिविषाभयाः ।
पिबेत् श्लेष्मातिसारार्त्तश्चूर्णिताश्चोष्णवारिणा ॥२६॥
हरिद्रादिं वचादिं वा पिबेदामेषु बुद्धिमान् ।
खड्यूषयवागूषु पिप्पल्यादिं प्रयोजयेत् ॥ २७ ॥
तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः ।
सुपक्वः खड्यूषोऽयमयं काम्बलिकोऽपरः ॥२८॥
दध्यम्लो लवणस्नेहतिलमाषसमन्वितः ।
नागरातिविषामुस्तैरथवा धान्यनागरैः ॥ २९ ॥
तृष्णातीसारशूलघ्नं पाचनं दीपनं लघु ।
पाठावत्सकबीजानि हरीतक्यो महौषधम् ॥ ३० ॥
एतदामसमुत्थानमतीसारं सवेदनम् ।
कफात्मकं सपित्तञ्च वर्चो बध्नाति च ध्रुवम् ॥ ३१ ॥
पयस्युत्क्वाथ्य मुस्तां वा विंशतिं भद्रकाह्वयाः ।
क्षीरावशिष्टं तत् पीतं हन्यादामं सवेदनम् ॥३२॥
पक्वोऽसकृदतीसारो ग्रहणीमार्द्दवाद्यदा ।
प्रवर्त्तते तदा कार्य्यः क्षिप्रं सांग्राहिको विधिः ॥३३॥
पञ्चमूलीबलाबिल्वधान्यकोत्पलविश्वकाः ।
वातातिसारिणे देयास्तक्रे चान्यतमेन वा ॥३४॥
कच्छटजम्बुदाडिमशृङ्गाटकपत्रबिल्वह्रीवेरम् ।
जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात् ॥३५॥

कच्छटादिः ।

कृत्वालवालं सुदृढ़ं पिष्टैरामलकैर्भिषक् ।
आर्द्रकस्वरसेनाशु पूरयेन्नाभिमण्डलम् ।
नदीवेगोपमं घोरमतीसारं निरोधयेत् ॥ ३६ ॥
किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम् ।
पिबेत् पित्तातिसारघ्नं सक्षौद्रं वेदनापहम् ॥ ३७ ॥
पलं वत्सकबीजस्य श्रपयित्वा जलं पिबेत् ।
यो रसाशी जयेच्छीघ्रं सपैत्तं जठरामयम् ॥ ३८ ॥
मधुकं कट्फलं लोध्रं दाड़िमस्य फलत्वचम् ।
पित्तातिसारे मध्वाक्तं पाययेत् तण्डुलाम्बुना ॥ ३९ ॥
कुटजातिविषा मुस्तं हरिद्रा पर्णिनीद्वयम् ।
सक्षौद्रशर्करं शस्तं पित्तश्लेष्मातिसारिणाम् ॥ ४० ॥
कुटजत्वक्फलं मुस्तं क्वाथयित्वा जलं पिबेत् ।
अतीसारं जयत्याशु शर्करामधुयोजितम् ॥ ४१ ॥
बिल्वचूतास्थिनिर्य्यूहः पीतः सक्षौद्रशर्करः ।
निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ ४२ ॥
पटोलयवधन्याकक्वाथः पेयः सुशीतलः ।
शर्करामधुसंयुक्तश्छर्द्यतीसारनाशनः ॥ ४३ ॥
प्रियङ्ग्वञ्जनमुस्ताख्यं पाययेत् तु यथाबलम् ।
तृष्णातिसारच्छर्दिघ्नं सक्षौद्रं तण्डुलाम्बुना ॥ ४४ ॥
कलिङ्गकवचामुस्तं दारु सातिविषं समम् ।
कल्कं तण्डुलतोयेन पिबेत् पित्तानिलामयी ॥ ४५ ॥
कुटजं दाड़िमं मुस्तं धातकीविल्वबालकम् ।
लोध्रचन्दनपाठाश्च कषायं मधुना पिबेत् ॥ ४६ ॥
सामे सशूले रक्तेऽपि पिच्छास्रावेषु शस्यते ।

कुटजादिरिति ख्यातः सर्वातिसारनाशनः ॥४७॥
समङ्गातिविषा मुस्तं विल्वं ह्रीवेरधातकी।
कुटजत्वक्फलं विल्वं क्वाथः सर्वातिसारनुत् ॥४८॥
दलोत्थः स्वरसः पेयो हिज्जलस्य समाक्षिकः।
जयत्याममतीसारं क्वाथो वा कुटजत्वचः ॥४९॥
वटारोहन्तु संपिष्य श्लक्ष्णं तण्डुलवारिणा।
तं पिवेत् तक्रसंयुक्तमतीसाररुजापहम् ॥५०॥
तण्डुलजलपिष्टाङ्कोठमूलकर्षार्द्धपानमपहरति।
सर्वातिसारग्रहणीरोगसमूहं महाघोरम् ॥५१॥
कल्कः कोमलवव्वोलदलात् पीतोऽतिसारहा ॥५२॥
कुटजत्वक्कृतः क्वाथो घनीभूतः सुशीतलः।
लोहितोऽतिविषायुक्तः सर्वातीसारनुद्भवेत् ॥५३॥
वदन्त्यवाष्टमांशेन क्वाथादतिविसारजः।
प्रक्षिप्यत्वात पादिकन्तु लेहादिति च नो मतिः॥५४॥
सदाव्यङ्कोठपाठानां मूलं त्वक् कुटजस्य च।
शाल्मलीशालनिर्य्यासधातकीलोध्रदाड़िमम् ॥५५॥
पिष्टाक्षसम्मितान् कृत्वा वटकांस्तण्डुलाम्बुना।
तेनैव मधुसंयुक्तानेकैकान् प्रातरुत्थितः ॥५६॥
पिवेदत्ययमापन्नः विड्विसर्गेण मानवः।
अङ्कोठवटको नाम्ना सर्वातीसारनाशनः ॥५७॥

अङ्कोठवटकः।

पयस्यर्द्धोदके छागे ह्रीवेरोत्पलनागरैः।
पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता ॥५८॥
रसाञ्जनं सातिविषं कुटजस्य फलं त्वचम्।

स्वरसस्य गुरुत्वेन पुटपाकपलं पिबेत् ।
पुटपाकस्य पाकोऽयं वहिरारक्तवर्णता ॥८०॥
त्वक् पिण्डं दीर्घवृन्तस्य काश्मरीपत्रवेष्टितम् ।
मृदावलिप्तं सुकृतमङ्गारेष्ववकूलयेत् ॥८१॥
स्विन्नमुद्धृत्य निष्पीड्य रसमादाय यत्नतः ।
शीतीकृतं मधुयुतं पाययेदुदरामये ॥८२॥
शतं कुटजमूलस्य चुर्णं तोयार्मणे पचेत् ।
क्वाथे पादावशेषेऽस्मिन् लेहं पूते पुनः पचेत् ॥८३॥
सौवर्चलयवक्षारविड़सैन्धवपिप्पली ।
धातकीन्द्रयवाजाजीचूर्णं दत्त्वा पलद्वयम् ॥८४॥
लिह्याद्बदरमात्रं तत् शृतं क्षौद्रेण संयुतम् ।
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ।
दुर्वारं ग्रहणीरोगं जयेच्चैव प्रवाहिकाम् ॥८५॥

कुटजलेहः ।

तुलामथार्द्रां गिरिमल्लिकायाः
संक्षुद्य पक्त्वा रसमाददीत ।
तस्मिन् सुपूते पलसम्मितानि
श्लक्ष्णानि पिष्ट्वा सह शाल्मलेन ॥८६॥
पाठां समङ्गातिविषां समुस्तां
विल्वं च पुष्पाणि च धातकीनाम् ।
प्रक्षिप्य भूयो विपचेत् तु तावत्
दर्वीप्रलेपः स्वरसस्तु यावत् ॥८७॥
पीतस्त्वसौ कालविदा जलेन
मण्डेन वाजापयसाऽथवाऽपि ।

निहन्ति सर्वं त्वतिसारमुग्रं
कृष्णं सितं लोहितपीतकं वा ॥८८॥
दोषं ग्रहण्यां विविधं च रक्तं
शूलं तथार्शांसि सशोणितानि।
असृग्दरञ्चैवमसाध्यरूपं
निहन्त्यवश्यं कुटजाष्टकोऽयम् ॥८९॥

कुटजाष्टकः।

तुला द्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता।
वत्सकस्य च बीजानि दार्व्याश्च त्वच उत्तमाः ॥९०॥
पिप्पली शृङ्गवेरञ्च लाक्षा कटुकरोहिणी।
षड्भिरेभिर्घृतं सिद्धं पेयं मण्डावचारितम्।
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥९१॥

षडङ्गघृतम्।

क्षीरिद्रुमाभिरवे विपक्वं
तत्कैश्च कल्कैः पयसा च सर्पिः।
सितोपलार्द्धं मधुपादयुक्तं
रक्तातिसारं शमयत्युदीर्णम् ॥९२॥

क्षीरिद्रुमाद्यं घृतम्।

जीर्णेऽमृतोपमं क्षीरमतीसारे विशेषतः।
छागन्तु भेषजैः सिद्धं देयं वा वारिसाधितम् ॥९३॥
बालं विल्वं गुडं तैलं पिप्पलीविश्वभेषजम्।
लिह्याद्वाते प्रतिहते सशूले सप्रवाहिके ॥९४॥
पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः।
त्र्यहात् प्रवाहिकां हन्ति चिरकालानुबन्धिनीम् ॥९५॥

कल्कः स्याद् बालविल्वानां तिलकल्कश्च तत्समः ।
दध्नः सारोम्लः स्नेहाढ्यः खड़ो हन्यात् प्रवाहिकाम्॥८६॥
बिल्वोषणं गुड़ं लोध्रं तैलं लिह्यात् प्रवाहणे ॥८७॥
दध्ना ससारेण समाच्चिकेण
भुञ्जीत निश्वारकपीड़ितस्तु ।
सुतप्तकुप्यक्कथितेन वापि
चीरेण शीतेन मधुप्लुतेन ॥८८॥
दीप्ताग्निर्निष्पुरीषो यः सार्य्यते फेनिलं शकृत् ।
स पिबेत् फाणितं शुण्ठीदधितैलपयोघृतम् ।८९॥
शोथं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम् ।
छर्दिं मूर्च्छाञ्च हिक्काञ्च दृष्ट्वातिसारिणं त्यजेत् ॥१००॥
बहुमेही नरो यस्तु भिन्नविट्को न जीवति ।
स्नानाभ्यङ्गावगाहांश्च गुरुस्निग्धातिभोजनम् ।
व्यायाममग्निसन्तापमतिसारी विवर्जयेत् ॥१०१॥

इत्यतीसारचिकित्सा ।

# अथ ग्रहण्यधिकारः ।

---

ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् ।
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत् ॥१॥
शरीरानुगते सामे रसे लङ्घनपाचनम् ।
विशुद्धामाशयायास्मै पञ्चकोलादिभिर्युतम् ।
दद्यात् पेयादिलघ्वन्नं पुनर्योगांश्च दीपकान् ॥२॥
कपित्थविल्वचाङ्गेरी तक्रदाड़िमसाधिता ।
पाचनी ग्रहणी पेया सवाते पाञ्चमूलिकी ॥ ३ ॥
ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवात् ।
पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपनम् ॥४॥
कषायोष्णविकाशित्वात् रौच्याच्चैव कफे हितम् ।
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहितम् ॥॥५॥
शुण्ठीं समुस्तातिविषां गुडूचीं
पिबेज्जलेन क्वथितां समांशाम् ।
मन्दानलत्वे सततामताया-
मामानुबन्धे ग्रहणीगदे च । ६ ॥
धन्याकातिविषोदीच्यशमानीमुस्तनागरम् ।
बलाद्विपर्णी विल्वञ्च दद्याद्दीपनपाचनम् ॥ ७ ॥
चित्रकं पिप्पलीमूलं द्वौ चारौ लवणानि च ।

व्योषहिङ्ग्वजमोदाश्च चव्यश्चैकत्र चूर्णयेत् ।८॥
गुड़िका मातुलुङ्गस्य दाड़िमाम्लरसेन वा ।
कृता विपाचयत्यामं दीपयत्याशु चानलम् ॥९॥
सौवर्चलं सैन्धवञ्च विड़मौद्भिदमेव च ।
सामुद्रेण समं पञ्च लवणान्यत्र योजयेत् ॥१०॥

चित्रगुड़िका ।

---

श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुड़ः ।
ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति ।
जम्बूदाड़िमशृङ्गाटपाठाकश्चटपल्लवैः ॥११॥
पक्कं पर्य्युषितं बालविल्वं सगुड़नागरम् ।
हन्ति सर्वानतीसारान् ग्रहणीमतिदुस्तराम् ॥१२॥
नागरातिविषामुस्तक्काथः स्यादामपाचनः ।
चूर्णं हिङ्ग्वष्टकं वातग्रहण्यान्तु घृतानि च ॥१३॥
नागरातिविषामुस्तं धातकीं सरसाञ्जनम् ।
वत्सकत्वक्फलं विल्वं पाठां कटुकरोहिणीम् ॥१४॥
पिबेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना ।
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते ॥१५॥
अर्शांस्यथ गुदे शूलं जयेच्चैव प्रवाहिकाम् ।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥१६॥
शीतकषायमानेन तण्डुलोदककल्पना ।

केऽप्यष्टगुणतोयेन प्राहुस्तण्डुलभावनाम् ॥१७॥

नागराद्यं चूर्णम् ।

भूनिम्बकटुकाव्योषमुस्तकेन्द्रयवान् समान् ।
द्वौ चित्रकात् वत्सकत्वग्भागान् षोडश चूर्णयेत् ॥१८॥
गुड़शीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् ॥१९॥
कामलाज्वरपाण्डुत्वमेहारुच्यतिसारनुत् ।
गुड़योगाद् गुड़ाम्बु स्याद् गुड़वर्णरसान्वितम् ॥२०॥

भूनिम्बाद्यं चूर्णम् ।

ग्रहण्यां श्लेषदुष्टायां वमितस्य यथाविधि ।
कट्वम्ललवणक्षारैस्तीक्ष्णैश्चाग्निं विवर्द्धयेत् ॥२१॥
समूलां पिप्पलीं क्षारौ द्वौ पञ्च लवणानि च ।
मातुलुङ्गाभयारास्नाशटीमरिचनागरम् ॥२२॥
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना ।
श्लैष्मिके ग्रहणीदोषे बलवर्णाग्निवर्द्धनम् ॥२३॥
एतैरेवौषधैः सिद्धं सर्पिः पेयं समारुते ।
भल्लातकं त्रिकटुकं त्रिफला लवणत्रयम् ॥२४॥
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ।
सक्षारः सर्पिषा पेयो भोज्ये वाप्यवचारितः ॥२५॥
हृत्पाण्डुग्रहणीदोषगुल्मोदावर्त्तशूलनुत् ।
सर्वजायां ग्रहिण्यां तु सामान्यो विधिरिष्यते ॥२६॥
चूर्णं मरिचमहौषधकुटजत्वग्भवं क्रमाद् द्विगुणम् ।
गुड़मिश्रमथितपीतं ग्रहणीदोषापहं ख्यातम् ॥२७॥
पाठाबिल्वानलव्योषजम्बूदाड़िमधातकी ।
कटुकातिविषामुस्तदार्वीभूनिम्बवत्सकैः ॥२८॥

सर्वैरेतैः समं चूर्णं कौटजं तण्डुलाम्बुना ।
सक्षौद्रञ्च पिबेच्छर्दिज्वरातिसारशूलवान् ।
तृड्दाहग्रहणीदोषा रोचकानलसादजित् ॥२९॥

पाठाद्यं चूर्णम् ।

यमानीपिप्पलीमूलचतुर्जातकनागरैः ।
मरिचाग्निजलाजाजीधान्यसौवर्च्चलैः समैः ॥३०॥
वृक्षाम्लधातकीकृष्णाबिल्वदाड़िमतिन्दुकैः ।
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः ॥३१॥
चूर्णोऽतिसारग्रहणीक्षयगुल्मगलामयान् ।
कासं श्वासारुचिं हिक्कां कपित्थाष्टमिदं जयेत् ॥३२॥

कपित्थाष्टकचूर्णम् ।

कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम् ।
यमानीधान्यकाजाजीग्रन्थिव्योषं पलांशिकम् ॥३३॥
पलानि दाड़िमादष्टौ सितायाश्चैकतः कृतः ।
गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाड़िमाष्टकः ॥३४॥

दाड़िमाष्टकः ।

चतुःपलं सुधाकाण्डात् त्रिपलं लवणत्रयात् ।
वार्त्ताकुकुड़वश्चार्कादष्टौ द्वे चित्रकात्पले ॥३५॥
दग्धानि वार्त्ताकुरसे गुड़िकाभोजनोत्तराः ।
भुक्तं भुक्तं पचन्त्याशु कासश्वासार्शसां हिताः ।
विसूचिकाप्रतिश्यायहृद्रोगघ्नाश्च ता हिताः ॥३६॥

वार्त्ताकुगुड़िका ।

त्र्यूषणत्रिफलाकल्के बिल्वमात्रे गुड़ात्पले ।

सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत् ॥३७॥

अष्टपलं घृतम् ।

मसूरस्य कषायेण विल्वगर्भं पचेद् घृतम् ।
हन्ति कुक्ष्यामयान् सर्वान् ग्रहणीपाण्डुकामलाः ॥३८॥
केवलं व्रीहिप्राण्यङ्गक्काथो व्युष्टस्तु दोषलः ।
विश्वौषधस्य गर्भेण दशमूलजले शृतम् ।
घृतं निहन्याच्छ्वयथुं ग्रहणीसामतामयम् ॥३९॥

शुण्ठीघृतम् ।

घृतं नागरकल्केन सिद्धं वातानुलोमनम् ।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥४०॥
चित्रकक्काथकल्काभ्यां ग्रहणीघ्नं शृतं हविः ।
गुल्मशोथोदरप्लीहशूलार्शोघ्नं प्रदीपनम् ॥४१॥

चित्रकघृतम् ।

विल्वाग्निचव्यार्द्रकशृङ्गवेरक्काथेन कल्केन च सिद्धमाज्यम् ।
सच्छागदुग्धे ग्रहणीगदोत्थे शोथाग्निमान्द्यारुचिनुद्वरिष्ठम्॥४२

विल्वाद्यं घृतम् ।

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
श्वदंष्ट्रा पिप्पलीधान्यं विल्व पाठा यमानिका ॥४३॥
चाङ्गेरी स्वरसे सर्पिः कल्कैरेतैर्विपाचितम् ।
चतुर्गुणे च दध्ना च तद् घृतं कफवातनुत् ॥४४॥
अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम् ।
गुदभ्रंशार्त्तिमानाहं घृतमेतद् व्यपोहति ॥४५॥

चाङ्गेरीघृतम ।

मरिचं पिप्पलीमूलं नागरं पिप्पली तथा ।

भल्लातकं यमानी च विड़ङ्गं हस्तिपिप्पली ॥४६॥
हिङ्गु सौवर्च्चलं चैव विड़सैन्धवदार्व्यथ ।
सामुद्रं सयवक्षारं चित्रको वचया सह ॥४७॥
एतैरर्द्धपलैर्भागैर्घृतप्रस्थं विपाचयेत् ।
दशमूलीरसे सिद्धं पयसा द्विगुणेन च ॥४८॥
मन्दाग्नीनां हितं सिद्धं ग्रहणीदोषनाशनम् ॥४९॥
विष्टम्भमामं दौर्बल्यं प्लीहानमपकर्षति ।
कासं श्वासं क्षयश्चैव दुर्नाम सभगन्दरम् ॥५०॥
कफजान् हन्ति रोगांश्च वातजान् क्रिमिसम्भवान् ।
तान् सर्वान् नाशयत्याशु शुष्कं दार्व्यनलो यथा ॥५१॥

मरिचाद्यं घृतम् ।

सौवर्च्चलं पञ्चकोलं सैन्धवं हवुषां वचाम् ।
अजमोदां यवक्षारं हिङ्गु जीरकमौङ्गिदम् ॥५२॥
कृष्णाजाजी सभूतीकं कल्कीकृत्य पलार्द्धकम् ।
आर्द्रकस्य रसं चुक्रं क्षीरं मस्त्वम्लकाञ्जिकम् ॥५३॥
दशमूलकषायेण घृतप्रस्थं विपाचयेत् ।
भक्तेन सह दातव्यं निर्भक्तं वा विचक्षणैः ॥५४॥
क्रिमिप्लीहोदराजीर्णज्वरकुष्ठप्रवाहिकाम् ।
वातरोगान् कफव्याधीन् हन्याच्छूलमरोचकम् ॥५५॥
पाण्डुरोगं क्षयं कासं दौर्बल्यं ग्रहणीगदम् ।
महाषट्पलकं नाम वज्रमिन्द्राशनिर्यथा ॥५६॥

महाषट्पलकं घृतम् ।

शम्मस्त्वादि शुची भाण्डे सगुड़क्षौद्रकाञ्जिकम् ।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ।

लवणं गुडमध्वारणालमस्तु क्रमादिह ॥५७॥

स्वल्पशुक्तम्।

प्रस्थं तण्डुलतोयतस्तुषजलात् प्रस्थत्रयं चाम्लतः
प्रस्थार्द्धं दधितोऽम्लमूलकपलान्यष्टौ गुडान्मानिके।
माध्वी शोधितश्रृङ्गवेरसकलात् द्वे सिन्धुजाज्योः पले
द्वे कृष्णोषणयोर्निशापलयुगं निक्षिप्य भाण्डे दृढ़े ॥५८॥
स्निग्धे धान्ययवादिराशिनिहितं त्रीन् वासरान् स्थापयेत्
शीते तोयधरात्यये च चतुरो वर्षासु पुष्पागमे।
षट् शीतेऽष्टदिनान्यतः परमिदं विस्राव्य सञ्चूर्णयेत्
चातुर्जातपलेन संहितमिदं शुक्तञ्च शुक्तञ्च तत् ॥५९॥
हन्याद्वातकफामदोषजनितान्नानाविधानामयान्।
दुर्नामानिलगुल्मशूलजठरान् हत्वानलं दीपयेत् ॥६०॥

वृहच्छुक्तसन्धानम्।

यमान्यामलकं पथ्या मरिचं त्रिपलांशिकम्।
लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत् ॥६१॥
तत्र कंसासुतं जातं तक्रारिष्टं पिबेन्नरः।
दीपनं शोथगुल्मार्शःक्रिमिमेहोदरापहम् ॥ ६२ ॥

तक्रारिष्टम्।

चाव्यस्य दद्याद् यवशूकानां
पृथक पृथक् त्वाढ़कसंमितञ्च।
मध्यप्रमाणानि च मूलकानि
दद्याच्चतुःषष्टिसुकल्पितानि ॥ ६३ ॥
द्रोणेऽम्भसः प्राप्यघटे सुधौते
दद्यादिदं भेषजजातयुक्तम्।

चारद्वयं तुम्बुरुवस्तगन्धा-
धनीयकं स्याद्विड़सैन्धवञ्च ॥ ६४ ॥
सौवर्चलं हिङ्गु शिराटिकाञ्च
चव्यञ्च दद्याद् द्विपलप्रमाणम् ।
इमानि चान्यानि पलोन्मितानि
विजर्जरीकृत्य घटे क्षिपेच्च ॥ ६५ ॥
कृष्णामजाजीमुपकुञ्चिकाञ्च
तथासुरीं कारविचित्रकञ्च ।
पचस्थितोऽयं बलवर्णदेह-
वयःकरोऽतीवबलप्रदश्च ॥ ६६ ॥
कान् जीवयामीति यतः प्रवृत्त-
स्तत्काञ्जिकेति प्रवदन्ति तज्ज्ञाः ।
आयामकालाज्जरयेच्च भक्त-
मायामकेति प्रवदन्ति चैनम् ॥ ६७ ॥
दकोदरं गुल्ममथ प्लीहानं
हृद्रोगमानाहमरोचकञ्च ।
मन्दाग्नितां कोष्ठगतञ्च शूल-
मर्शोविकारान् सभगन्दरांश्च ॥ ६८ ॥
वातामयानाशु निहन्ति सर्वान्
संसेव्यमानं विविधान्नराणाम् ॥ ६९ ॥

आयामकाञ्जिकम् ।

प्रस्थत्रयेणामलकीरसस्य
शुद्धस्य दत्त्वार्द्धतुलां गुड़स्य ।
चूर्णीकृतैर्ग्रन्थिकजीरचव्य-

शोषेभकृष्णा: हवुषाजमोदैः ॥७०॥
विडङ्गसिन्धुत्रिफलायमानी-
पाठाग्निधान्यैश्च पलप्रमाणैः ।
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टा-
वष्टौ च तैलस्य पचेद्यथावत् ॥७१॥
तं भक्षयेदक्षफलप्रमाणं
यथेष्टचेष्टं त्रिसुगन्धियुक्तम् ।
अनेन सर्वे ग्रहणीविकारा:
सश्वासकासस्वरभेदशोथा: ॥७२॥
शाम्यन्ति चायं चिरमन्थराग्ने-
र्हतस्य पुंस्त्वस्य च वृद्धिहेतु: ।
स्त्रीणाञ्च वन्ध्यामयनाशनोऽयं
कल्याणको नाम गुड: प्रदिष्ट: ॥७३॥
तैले मनाक् भर्जयन्ति त्रिवृदत्र चिकित्सका: ।
अतोऽत्रमानसाधर्म्यात् त्रिसुगन्धं पलं पृथक् ॥७४॥

कल्याणगुड: ।

कुष्माण्डकानां रूढानां सुस्विन्नं निष्कुलत्वचाम् ।
सर्पि:प्रस्थे पलशतं ताम्रभाण्डे शनैः पचेत् ॥७५॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
धान्यकानि विडङ्गानि यमानीमरिचानि च ॥७६॥
त्रिफला चाजमोदा च कलिङ्गाजाजी सैन्धवम् ।
एकैकस्य पलञ्चैव त्रिवृदष्टपलं भवेत् ॥७७॥
तैलस्य च पलान्यष्टौ गुडपञ्चाशदेव तु ।
प्रस्थैस्त्रिभि: समेतन्तु रसेनामलकस्य तु ॥७८॥

यदा दार्व्वीप्रलेपस्तु तदैनमवतारयेत् ।
यथाशक्ति गुड़ान् कुर्य्यात् कर्षकर्षार्द्धमानकान् ॥७९॥
अनेन विधिना चैव प्रयुक्तस्तु जयेदिमान् ।
प्रसह्य ग्रहणीरोगान् कुष्ठान्यर्शोभगन्दरान् ॥८०॥
ज्वरमानाहहृद्रोगगुल्मोदरविसूचिकाः ।
कामलापाण्डुरोगांश्च प्रमेहांश्चैव विंशतिम् ॥८१॥
वातशोणितवीसर्पान् दद्रुचर्म्महलीमकान् ।
कफपित्तानिलान् सर्वान् प्ररूढ़ांश्च व्यपोहति ॥८२॥
व्याधिक्षीणा वयःक्षीणाः स्त्रीषु क्षीणाश्च ये नराः ।
तेषां वृष्यश्च बल्यश्च वयःस्थापनमेव च ।
गुड़कल्याणकं नाम बन्ध्यानां गर्भदं परम् ॥८३॥

कुष्माण्डगुड़कल्याणकम् ।

याऽग्निपित्ते विधातव्या गुड़िका च सुधावती ।
तत्र प्रोक्तविधा शुद्धौ समानौ रसगन्धकौ ॥८४॥
संमर्द्य कज्जलाभन्तु कुर्य्यात् पात्रे दृढ़ाश्रये ।
ततो वादरवह्निस्थलौहपात्रे द्रवीकृतम् ॥८५॥
गोमयोपरि विन्यस्तकदलीपत्रपातनात् ।
कुर्य्यात् पर्पटिकाकारमस्य रक्तिद्वयं क्रमात् ॥८६॥
द्वादशरक्तिकां यावत् प्रयोगः प्रहरार्द्धतः ।
तदूर्द्ध्वं बहुपूगस्य भक्षणं दिवसे पुनः ॥८७॥
तृतीय एवमांसाज्य दुग्धान्यत्र विधीयते ।
वर्ज्यं विदाहिस्त्रीरम्भामूलं तैलञ्च सार्षपम् ॥८८॥
चुद्रमत्स्याम्बुजखगांस्यक्तनिद्रः पयः पिबेत् ।
ग्रहणीक्षयकुष्ठार्शःशोथाजीर्णविनाशिनी ।

रसपर्पटिका ख्याता निबद्धा चक्रपाणिना ॥८९॥

रसपर्पटिका ।

स्थाल्यां संमर्द्य दातव्यौ माषिकौ रसगन्धकौ ।
नखचूर्णं तदुपरि तण्डुलीयं द्विमाषिकम् ॥९०॥
ततो नेपालताम्रादि पिधाय सुकरालितम् ।
पांशुना पूरयेदूर्द्ध्वं सर्वां स्थालीं ततोऽनलः ॥९१॥
स्थाल्यधो नालिकां यावद्देयस्तेन मृतस्य च ।
ताम्री ताम्रस्य रक्त्येका त्रिफलाचूर्णरक्तिका ॥९२॥
त्र्यूषणस्य च रक्त्येका विडङ्गस्य च तन्मधु ।
घृतेनालोड्य लेढव्यं प्रथमे दिवसे ततः ॥९३॥
रक्तिवृद्धिः प्रतिदिनं कार्य्या ताम्रादिषु त्रिषु ।
स्थिरा विडङ्गरक्तिस्तु यदा भेदो विवर्जितः ॥९४॥
तदा विडङ्गन्त्वधिकं दद्याद्रक्तिद्वयं पुनः ।
द्वादशाहं योगवृद्धिस्ततो ह्रासक्रमोऽप्ययम् ॥९५॥
ग्रहणीमम्लपित्तञ्च क्षयं शूलञ्च सर्वदा ।
ताम्रयोगो जयत्येष बलवर्णाग्निवर्द्धनः ॥९६॥

ताम्रयोगः ।

इति ग्रहणीचिकित्सा ।

---

## अथार्शोऽधिकारः ।

दुर्नाम्नां साधनोपायश्चतुर्धा परिकीर्त्तितः ।
भेषजक्षारशस्त्राग्निसाध्यत्वादाद्य उच्यते ॥१॥
वातयोरानुलोम्याय यदग्निबलवृद्धये ।

अनुपानौषधद्रव्यं तत् सेव्यं नित्यमर्शसैः ॥२॥
शुष्कार्शसां प्रलेपादिक्रिया तीक्ष्णा विधीयते।
स्राविणां रक्तमालोक्य क्रिया कार्य्यास्रपैत्तिकी ॥३॥
स्नुक्क्षीरं रजनीयुक्तं लेपाद् दुर्नामनाशनम्।
कोषातकीरजोघर्षान्निपतन्ति गुदोद्भवाः ॥४॥
अर्कक्षीरं सुधाक्षीरं तिक्ततुम्ब्याश्च पल्लवाः।
करञ्जोवस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम् ॥५॥
अर्शोघ्नी गुदगावर्त्तिर्गुड़घोषाफलोद्भवा।
ज्योत्स्निकामूलकल्केन लेपो रक्तार्शसां हितः ॥६॥
तुम्बीवीजं सौद्भिदन्तु काञ्जीपिष्टं गुडीत्रयम्।
अर्शोहरं गुदस्थं स्याद्दधि माहिषमश्नतः ॥७॥
अपामार्गाङ्घ्रिजः क्षारो हरितालेन संयुतः।
लेपनं लिङ्गसम्भूतमर्शो नाशयति ध्रुवम् ॥८॥
मल्लारोधिप्रदेशस्य पथ्याकोषातकीरजः।
कफेन लेपतो हन्ति लिङ्गवर्त्तिमसंशयम् ॥९॥
वातातीसारवद्भिन्नवर्च्चांस्यर्शांस्युपाचरेत्।
उदावर्त्तविधानेन गाढ़विट्कानि चासकृत् ॥१०॥
विड्विबद्धे हितं तक्रं यमानीविड़संयुतम्।
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम् ॥११॥
तत् प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा।
न विरोहन्ति गुदजाः पुनस्तक्रसमाहताः ॥१२॥
त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत्।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥१३॥
पित्तश्लेष्मप्रशमनी कच्छूकण्डूरुजापहा।

गुदजान्नाशयत्याशु योजिता सगुड़ाभया ॥१४॥
सगुड़ां पिप्पलीयुक्तामभयां घृतभर्जिताम् ।
त्रिवृद्दन्तियुतां वापि भक्षयेदानुलोमिकीम् ॥१५॥
तिलारुष्करसंयोगं भक्षयेदग्निवर्द्धनम् ।
कुष्ठरोगहरं श्रेष्ठमर्शसां नाशनं परम् ॥१६॥
तिलभल्लातकं पथ्या गुड़श्चेति समांशिकम् ।
दुर्नामकासश्वासघ्नं प्लीहपाण्डुज्वरापहम् ॥१७॥
गोमूत्रव्युषितां दद्यात् सगुड़ां वा हरीतकीम् ।
पञ्चकोलकयुक्तं वा तक्रमस्मै प्रदापयेत् ॥१८॥
मृल्लिप्तं शूरणं कन्दं पक्त्वाग्नौ पुटपाकवत् ।
अद्यात् सतैललवणं दुर्नामविनिवृत्तये ॥१९॥
स्विन्नं वार्त्ताकुफलं घोषायाः क्षारजेन सलिलेन ।
तद् घृतभृष्टं युक्तं गुड़ेनाशितो योऽत्ति ॥२०॥
पिबति च तक्रं नूनं तस्याश्वेवातिवृद्धगुदजानि ।
यान्ति विनाशं पुंसां सहजान्यपि सप्तरात्रेण ॥२१॥
असितानां तिलानां प्राक् प्रकुञ्चं शीतवार्य्यनु ।
खादतोऽर्शांसि नश्यन्ति द्विजदार्ढ्याङ्गपुष्टिदम् ॥२२॥
दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः ।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत् ॥२३॥
त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत् ।
तुलां गुड़स्य तत्तिष्ठेन्मासार्द्धं घृतभाजने ॥२४॥
तन्मात्रया पिबेन्नित्यमर्शोभ्यो विप्रमुच्यते ।
ग्रहणीपाण्डुरोगघ्नं वातवर्च्चोऽनुलोमनम् ॥२५॥
दीपनञ्चारुचिघ्नञ्च दन्त्यरिष्टमिदं विदुः ।

पाने ऽरिष्टादिसन्धानं धातकीलोध्रलेपिते ॥२६॥

दन्त्यरिष्टम् ।

समागरावष्करहृद्दारकं
गुडेन यो मोदकमत्तुदारकम् ।
अशेषदुर्नामकरोगदारकं
करोति वृद्धं सहसैव दारकम् ॥२७॥
चूर्णे चूर्णसमो ज्ञेयो मोदके द्विगुणो गुडः ।
त्रिपलं शृङ्गवेरस्य चतुर्थं मरिचस्य च ॥२८॥
पिप्पल्याः कुडवार्द्धञ्च चव्यायाः पलमेव च ।
तालीशपत्रस्य पलं पलार्द्धं केशरस्य च ॥२९॥
द्वे पले पिप्पलीमूलादर्द्धकर्षञ्च पत्रकात् ।
सूक्ष्मैलाकर्षमेकन्तु कर्षं त्वगमृणालयोः ॥३०॥
गुडात् पलानि तु त्रिंशच्चूर्णमेकत्र कारयेत् ।
अक्षप्रमाणा गुडिका प्राणदेति च सा स्मृता ॥३१॥
पूर्वं भवेत्तु पश्चात्तु भोजनस्य यथाबलम् ।
मद्यं मांसरसं यूषं क्षीरं तोयं पिबेत् तथा ॥३२॥
हन्यादर्शांसि सर्वाणि सहजान्यस्रजानि च ।
वातपित्तकफोत्थानि सन्निपातोद्भवानि च ॥३३॥
पानात्यये मूत्रकृच्छ्रे वातरोगगलग्रहे ।
विषमज्वरे च मन्देऽग्नौ पाण्डुरोगे तथैव च ॥३४॥
क्रिमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिनां तथा ।
श्वासकासपरीतानामेषा स्यादमृतोपमा ॥३५॥
शुण्ठ्याः स्थानेऽभया देया विड्ग्रहे पित्तपायुजे ।
प्राणदेयं सितां दत्त्वा चूर्णमानाच्चतुर्गुणाम् ॥३६॥

अम्लपित्ताग्निमान्द्यादौ प्रयोज्या गुदजातुरे ॥३७॥
अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ।
पलद्वयन्त्वनिलजे पित्तजे तु पलत्रयम् ॥३८॥

प्राणदा गुडिका ।

पथ्यापञ्चपलान्येकमजाज्या मरिचस्य च ।
पिप्पलीपिप्पलीमूलचव्यचित्रकनागराः ॥३९॥
पलाभिवृद्धाः क्रमशो यवक्षारपलद्वयम् ।
भल्लातकपलान्यष्टौ कन्दस्तु द्विगुणो मतः ॥४०॥
द्विगुणेन गुडेनैषां वटकानक्षसम्मितान् ।
खल्वैनं भक्षयेत् प्रातस्तक्रमम्भोऽनु वा पिबेत् ॥४१॥
मन्दाग्निं दीपयत्येष ग्रहणीपाण्डुरोगनुत् ।
काङ्कायनेन शिष्येभ्यः शस्त्रक्षाराग्निभिर्विना ।
भिषग्जितमिति प्रोक्तं श्रेष्ठमर्शोविकारिणाम् ॥४२॥

काङ्कायनो मोदकः ।

विडङ्गसारामलकाभयानां
पलं पलं स्यात् त्रिवृतस्त्रयञ्च ।
गुडस्य षड्द्वादशभागयुक्ता
मासेन त्रिंशद्गुडिका विधेयाः ॥४३॥
निवारणं यक्ष्मवरेण च दृष्टः
समानिभद्रः किल शाक्यभिक्षवे ।
अयं हि कासक्षयकुष्ठनाशनो
भगन्दरप्लीहजलोदरार्शसाम् ॥४४॥
यथेष्टचेष्टान्नविहारसेवी

अनेन हृदस्तरुणो भवेच्च ॥४५॥

माणिभद्रो मोदकः।

मरिचमहौषधचित्रकस्य
शूरणभागा यथोत्तरं द्विगुणाः।
सर्वसमो गुडभागः
सेव्योऽयं मोदकः प्रसिद्धफलः ॥४६॥
ज्वलनं ज्वलयति जाठर-
मुन्मूलयति शूलगुल्मगदान्।
निःशेषयति श्लीपद-
मर्शांसि नाशयत्याशु ॥४७॥

स्वल्पशूरणमोदकः।

शूरणषोड़शभागा वह्नेरष्टौ महौषधस्यातः।
अर्द्धेन भागयुक्तिर्मरिचस्य ततोऽपि चार्द्धेन ॥४८॥
त्रिफलाकणासमूलातालीशारुष्करक्रिमिघ्नानाम्।
भागा महौषधसमा दहनांशा तालमूली च ॥४९॥
भागः शूरणतुल्यो दातव्यो वृद्धदारकस्यापि।
भृङ्गेले मरिचांशे सर्वाण्येकत्र संचूर्ण्य ॥५०॥
द्विगुणेन गुड़ेन युतः सेव्योऽयं मोदकः प्रकामघनैः।
गुरुवृष्यभोज्यरहितैस्त्वितरेषूपद्रवं कुर्यात् ॥५१॥
भस्मकमनेन जनितं पूर्वमगस्त्यस्य योगराजेन।
भीमस्य मारुतेरपि येन तौ महाशनौ जातौ ॥५२॥
अग्निबलबुद्धिहेतुर्न केवलं शूरणो महावीर्य्यः।
प्रभवति शस्त्रक्षाराग्निभिर्विनाप्यर्शसामेषः ॥५३॥
श्वयथुश्लीपदजित् ग्रहणीमपि कफवातसम्भूताम्।

नाशयति वलीपलितं मेधां कुरुते वृषत्वञ्च ॥५४॥
हिक्काश्वासकासं सराजयक्ष्मप्रमेहांश्च ।
प्लीहानञ्चाथोग्रं हन्ति च रसायनं पुंसाम् ॥५५॥

### वृहच्छूरणमोदकः ।

चूर्णीकृताः षोड़श शूरणस्य
भागास्ततोऽर्द्धेन च चित्रकस्य ।
महौषधाद्दौ मरिचस्य चैको
गुड़ेन दुर्नामजयाय पिण्डी ॥५६॥
पिण्ड्यां गुड़ो मोदकवत्पिण्डत्वापत्तिकारकः ॥५७॥

### शूरणपिण्डी ।

व्योषाग्न्यरुष्करविड़ङ्गतिलाभयानां
चूर्णं गुड़ेन सहितन्तु सदोपयोज्यम् ।
दुर्नामकुष्ठगरशोथशकृद्विबन्धा-
नग्नेर्जयत्यबलतां क्रिमिपाण्डुताञ्च ॥५८॥

### व्योषाद्यं चूर्णम् ।

शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्द्धितमूर्द्ध्वमन्त्यात् ।
खादेदिदं समसितं गुदजाग्निमान्द्य-
कासारुचिश्वसनकण्ठहृदामयेषु ॥५९॥

### समशर्करं चूर्णम् ।

लवणोत्तमवह्निकलिङ्गयवान्
चिरबिल्वमहापिचुमर्दयुतान् ।
पिब सप्तदिनं मथितालुलितान्

यदि मर्दितुमिच्छति पायुरुहान् ॥६०॥

लवणोत्तमाद्यं चूर्णम् ।

त्रिफला पञ्च लवणं कुष्ठं कटुकरोहिणी ।
देवदारुविडङ्गानि पिचुमर्दफलानि च ॥६१॥
बला चातिबला चैव हरिद्रे द्वे सुवर्चला ।
एतत् सम्भृत्य सम्भारं करञ्जत्रयमेव च ॥६२॥
पिष्ट्वा च गुडिकां कृत्वा बदरास्थिसमां बुधः ।
एकैकां तां समुद्धृत्य रोगे रोगे पृथक् पृथक् ॥६३॥
उष्णेन वारिणा पीता शान्तमग्निं प्रदीपयेत् ।
अर्शांसि हन्ति तक्रेण गुल्ममम्लेन निर्हरेत् ॥६४॥
जन्तुं हन्ति तोयेन त्वग्दोषं खदिराम्बुना ।
मूत्रकृच्छ्रन्तु तोयेन हृद्रोगं तैलसंयुता ॥६५॥
इन्द्रस्वरससंयुक्ता सर्वज्वरविनाशिनी ।
मातुलुङ्गरसेनाथ सद्यः शूलहरी स्मृता ॥६६॥
कपित्थतिन्दुकानान्तु रसेन सह मिश्रिता ।
विषाणि हन्ति सर्वाणि पानाशनप्रयोगतः ॥६७॥
गोमूत्रद्रवसंयुक्ता हन्यात् कुष्ठानि सर्वशः ।
श्यामा क्वाथसहिता जलोदरविनाशिनी ॥६८॥
भक्तच्छन्दं जनयति भुक्तस्योपरि भक्षिता ।
अक्षिरोगेषु सर्वेषु मधुना घृष्यताञ्जयेत् ॥६९॥
लेहमात्रेण नारीणां सद्यः प्रदरनाशिनी ।
व्यवहारे तथा द्यूते संग्रामे मृगयादिषु ।
समालभ्य नरो ह्येनां क्षिप्रं विजयमाप्नुयात् ॥७०॥

नागार्जुनो योगः ।

त्रिकत्रयवचाहिङ्गुपाठाचारनिशाद्वयम्।
चव्यतिक्ताकलिङ्गाग्निश्वताह्वावचानि च ॥७१॥
ग्रन्थिविल्वाजमोदा च गणोऽष्टाविंशतिर्मतः।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥७२॥
ततो विड़ालपदकं पिबेदुष्णेन वारिणा।
एरण्डतैलयुक्तन्तु सदा लिह्यात् ततो नरः ॥७३॥
कासं हन्यात् तथा शोथमर्शांसि च भगन्दरम्।
हृच्छूलं पार्श्वशूलञ्च वातगुल्मं तथोदरम् ॥ ७४ ॥
हिक्काश्वासप्रमेहांश्च कामलां पाण्डुरोगताम्।
आमान्वयमुदावर्त्तमन्त्रवृद्धिं गुदं क्रिमीन् ॥७५॥
अन्ये च ग्रहणीदोषा ये मया परिकीर्त्तिताः।
महाज्वरोपसृष्टानां भूतोपहतचेतसाम् ॥ ७६ ॥
अप्रजानान्तु नारीणां प्रजावर्द्धनमेव च।
विजयो नाम चूर्णोऽयं कृष्णात्रेयेण पूजितः ॥७७॥

विजयचूर्णम्।

त्रिवृत्तेजोवती दन्ती श्वदंष्ट्रा चित्रकं शटी।
गवाक्षिमुस्तविश्वाह्वविड़ङ्गानि हरीतकी ॥७८॥
पलोन्मितानि चैतानि पलान्यष्टावरुष्करात्।
षट्पलं वृद्धदारस्य शूरणस्य तु षोड़श ॥७९॥
जलद्रोणद्वये क्वाथ्यं चतुर्भागावशेषितम्।
पूतन्तु तं रसं भूयः क्वाथ्येभ्यस्त्रिगुणो गुड़ः ॥८०॥
लेहं पचेत् तु तं तावद्यावद्दर्वीप्रलेपनम्।
अवतार्य्य ततः पश्चाच्चूर्णानीमानि दापयेत् ॥८१॥
त्रिवृत्तेजोवतीकन्दचित्रकान् द्विपलांशिकान्।

एलात्वङ्मरिचञ्चापि गजाह्वाञ्चापि षट्पलम् ॥८२॥
द्वात्रिंशतं पलान्येवं चूर्णं दत्त्वा निधापयेत् ।
ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशनः ॥८३॥
पञ्च गुल्मान् प्रमेहांश्च पाण्डुरोगं हलीमकम् ।
जयेदर्शांसि सर्वाणि तथा सर्वोदराणि च ॥८४॥
दीपयेद् ग्रहणीं मन्दां यक्ष्माणञ्चापकर्षति ।
पीनसे च प्रतिश्याये आढ्यवाते तथैव च ॥ ८५ ॥
अयं सर्वगदेष्वेव कल्याणो लेह उत्तमः ।
दुर्नामारिरयञ्चाशु दृष्टो वारसहस्रशः ॥ ८६ ॥
भवन्त्येनं प्रयुञ्जानाः शतवर्षं निरामयाः ।
आयुषो दैर्घ्यजननो वलीपलितनाशनः ॥ ८७ ॥
रसायनवरश्चैष मेधाजनन उत्तमः ।
गुड़ः श्रीबाहुशालोऽयं दुर्नामारिः प्रकीर्त्तितः ॥८८॥

बाहुशालो गुड़ः ।

तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुड़ः ।
क्षिप्तश्च निश्चलस्तिष्ठेत् पतितस्तु न शीर्य्यते ॥८९॥
यदा दर्वीप्रलेपः स्यात्तावद्यातन्तुलीभवत् ।
एष पाको गुड़ादीनां सर्वेषां परिकीर्त्तितः ॥९०॥
सुखमर्दः सुखस्पर्शो गुड़ः पाकमुपागतः ।
पीड़ितो भजते मुद्रां गन्धवर्णरसान्वितः ॥९१॥
भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत् ।
पादशेषे रसे तस्मिन् पचेद् गुड़तुलां भिषक् ॥९२॥
भल्लातकसहस्रार्द्धं छित्त्वा तत्रैव दापयेत् ।
सिद्धेऽस्मिंस्त्रिफलाव्योषयमानीमुस्तसैन्धवम् ॥९३॥

कर्षांशसम्मितं दद्यात् त्वगेलापत्रकेशरम्।
खादेदग्निबलापेक्षी प्रातरुत्थाय मानवः ॥९४॥
कुष्ठार्शःकामलामेहग्रहणीगुल्मपाण्डुताः।
हन्यात् प्लीहोदरं कासक्रिमिरोगभगन्दरान्।
गुड़भल्लातको ह्येष श्रेष्ठश्चार्शोविकारिणाम् ॥९५॥

गुड़भल्लातकः।

दशमूल्यमृता भार्गी श्वदंष्ट्रा चित्रकं शठी।
भल्लातकसहस्रञ्च पलांशं क्वाथयेद् बुधः ॥९६॥
पादशेषे जलद्रोणे रसे तस्मिन् विपाचयेत्।
दत्त्वा गुड़तुलामेकां लेहीभूतं समुद्धरेत् ॥९७॥
माक्षिकं पिप्पलीतैलमौरवूकञ्च दापयेत्।
कुड़वं कुड़वञ्चात्र त्वगेलामरिचन्तथा ॥ ९८ ॥
अर्शःकासमुदावर्त्तं पाण्डुत्वं शोथमेव च।
नाशयेदग्निसादञ्च गुड़भल्लातकः स्मृतः ॥९९॥

भल्लातको गुड़ः।

चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च।
यमानीपिप्पलीमूलमुभे च विड़सैन्धवे ॥१००॥
चित्रकं विल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे ॥१०१॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्।
गुदवङ्क्षणशूलञ्च घृतमेतद् व्यपोहति ॥१०२॥

चव्याद्यं घृतम्।

व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि।

साधितं पिबतः सर्पिः पतन्त्यर्शांस्यसंशयम् ॥१०३॥

व्योषाद्यं घृतम् ।

सक्षारैः पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके ।
समक्षीरं घृतप्रस्थं ज्वरार्शःप्लीहकासनुत् ॥१०४॥

उदकषट्पलं घृतम् ।

पचेद्वारिचतुर्द्रोणे कण्टकार्य्यमृताशतम् ।
तत्राग्नित्रिफलाव्योषपूतिकत्वक्कलिङ्गकैः ॥१०५॥
सकाश्मर्य्यविडङ्गैस्तु सिद्धं दुर्नामनेहनुत् ।
घृतं सिंह्यमृतं नाम बोधिसत्त्वेन भाषितम् ॥१०६॥

सिंह्यमृतं घृतम् ।

पिप्पलीमधुकं विल्वं शताह्वां मदनं वचाम् ।
कुष्ठं शटीपुष्कराख्यं चित्रकं देवदारु च ॥१०७॥
पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम् ।
अर्शसां मूढ़वातानां तच्छ्रेष्ठमनुवासनम् ॥१०८॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ।
कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम् ॥१०९॥
पिच्छास्रावं गुदे शोथं वातवर्चोविनिग्रहम् ।
उत्थानं बहुदोषञ्च जयेच्चैवानुवासनात् ॥११०॥

पिप्पल्याद्यं तैलम् ।

रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक् ।
दुष्टास्रे निर्हृते तु शूलानाहावसृग्गदाः ॥१११॥
लाजैः पेया पीता चुक्रिकाकेशरोत्पलैः सिद्धा ।
हन्त्यस्रस्रावं तथा बलापृश्निपर्णीभ्याम् ॥११२॥
शक्राथः सविश्वो वा किं वा विल्वशलाटवः ।

योज्या रक्तार्शसैस्तद्वत् ज्योत्स्निकामूललेपनम् ॥११३॥
नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात्।
दधिसरमथिताभ्यासात् गुदजाः शाम्यन्ति रक्तवहाः ॥११४॥
समङ्गोत्पलमोचाह्वतिरीटतिलचन्दनैः।
छागक्षीरं प्रयोक्तव्यं गुदजे शोणितापहम् ॥११५॥
कुटजत्वक्पलशतं जलद्रोणे विपाचयेत्।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥११६॥
वस्त्रपूतं पुनः क्वाथं पचेल्लेहत्वमागतम्।
भल्लातकं विडङ्गानि त्रिकटु त्रिफलान्तथा ॥११७॥
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च।
वचामतिविषां विल्वं प्रत्येकञ्च पलं पलम् ॥ ११८ ॥
त्रिंशत्पलानि गुडस्य चूर्णीकृत्य निधापयेत्।
मधुनः कुडवं दद्याद् घृतस्य कुडवन्तथा ॥ ११९ ॥
एष लेहः शमयति चार्शो रक्तसमुद्भवम्।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥१२०॥
ये च दुर्नामजा रोगास्तान् सर्वान् नाशयत्यपि।
अम्लपित्तमतीसारं पाण्डुरोगमरोचकम्।
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि ॥ १२१ ॥
अनुपानं घृतं दद्यात् मधु तक्रं जलं पयः।
रोमानीकविनाशाय कौटजो लेह उच्यते ॥ १२२ ॥

कुटजलेहः।

कुटजत्वचो विपाच्यं शतपलमार्द्रं महेन्द्रसलिलेन।
यावत् स्यादरसं तद्द्रव्यं स्वरसस्ततो ग्राह्यः ॥ १२३ ॥
मोचरसः समङ्गा फलिनी पलांशिभिस्त्रिभिस्तैश्च।

वत्सकबीजं तुल्यं चूर्णीकृतमत्र दातव्यम् ॥ १२४ ॥
पूतोत्क्वथितः सान्द्रः सरसो दर्वीप्रलेपनो ग्राह्यः ।
मात्राकालोपहिता रसक्रियैषा जयत्यसृक्स्रावम् ॥१२५॥
छागलीपयसा युक्ता पेया मण्डेनाथवा यथाग्निबलम् ।
जीर्णौषधश्च शालीन् पयसा छागेन भुञ्जीत ॥ १२६ ॥
रक्तगुदजातीसारं शूलं सासृग्रुजो निहन्त्याशु ।
बलवच्च रक्तपित्तं रसक्रियैषा ह्युभयभागम् ॥ १२७ ॥

कुटजरसक्रिया ।

कुटजफलवल्कलकेशरनीलोत्पललोध्रधातकीकल्कैः ।
सिद्धं घृतं विधेयं शूलरक्तार्शसां भिषजा ॥ १२८ ॥

कुटजाद्यं घृतम् ।

अवाक्पुष्पीबलादार्वीपृश्निपर्णीत्रिकण्टकम् ।
न्यग्रोधोडुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ॥ १२९ ॥
कषाय एष पेष्यस्तु जीवन्ती कटुरोहिणी ।
पिप्पलीपिप्पलीमूलं मरिचं देवदारु च ॥ १३० ॥
कलिङ्गं शाल्मलीपुष्पं वीराचन्दनमञ्जनम् ।
कट्फलं चित्रकं मुस्तं प्रियङ्ग्वतिविषे स्थिता ॥ १३१ ॥
पद्मोत्पलानां किञ्जल्कः समङ्गा सनिदिग्धिका ।
विल्वं मोचरसं पाठा भागाः स्युः कार्षिकाः पृथक् ॥१३२॥
चतुःप्रस्थमृतं प्रस्थं कषायमवतारयेत् ।
त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः ॥१३३॥
सुनिषण्णकचाङ्गेर्य्याः प्रस्थौ द्वौ स्वरसस्य च ।
सर्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥ १३४ ॥
एतदर्शःस्वतीसारे त्रिदोषे रुधिरस्रुतौ ।

प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥ १३५ ॥
उत्थाने चातिबहुशः शोथशूलगुदामये ।
अन्नग्रहे गूढ़वाते मन्दाग्नावरुचावपि ॥ १३६ ॥
प्रयोज्यं विधिवत् सर्पिर्बलवर्णाग्निवर्द्धनम् ।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम् ॥ १३७ ॥
सुनिषण्णकचाङ्गेरीघृतम् ।
प्रशस्तेऽहनि नक्षत्रे कृतमङ्गलपूर्वकम् ।
कालमुष्ककमाहृत्य दग्ध्वा भस्म समाहरेत् ॥ १३८ ॥
आढ़कन्त्वेकमादाय जलद्रोणे पचेद्भिषक् ।
चतुर्भागावशिष्टेन वस्त्रपूतेन वारिणा ॥ १३९ ॥
शङ्खचूर्णस्य कुड़वं प्रक्षिप्य विपचेत् पुनः ।
शनैः शनैर्मृदावग्नौ तु यावत् सान्द्रतनुर्भवेत् ॥ १४० ॥
सर्जिकायवशूकाभ्यां शुण्ठी मरिचपिप्पली ।
वचा चातिविषा चैव हिङ्गुचित्रकयोस्तथा ॥ १४१ ॥
एषां चूर्णानि निक्षिप्य पृथक्कोनाष्टमाषकम् ।
दर्व्या संघट्टितञ्चापि स्थापयेदायसे घटे ।
एष वह्निसमः क्षारः कीर्त्तितः काश्यपादिभिः ॥१४२॥
तोये कालकमुष्कस्य विपचेद्भस्माढ़कं षड्गुणे
पात्रे लोहमये दृढ़े विपुलधीर्दर्व्या शनैर्घट्टयन् ।
दग्ध्वाग्नौ बहुशङ्खनाभिशकलान् पूतावशेषे क्षिपेत्
यद्येरण्डजनालमेष दहति क्षारो वरो वाक्शतात् ॥१४३॥
प्रायस्त्रिभागशिष्टेऽस्मिन्नच्छपैच्छिल्यरक्तता ।
सञ्जायते तदा ग्राह्यं क्षाराम्भो शास्त्रमिष्यते ॥१४४॥
तुर्य्येणाष्टमकेन षोड़शभवेनांशेन संमूर्च्छितो

मध्यः श्रेष्ठ इति क्रमेण विहितः क्षारोदकाच्छुकः ॥१४५
नातिसान्द्रो नातितनुः क्षारपाक उदाहृतः।
दुर्नामकादौ निर्दिष्टः क्षारोऽयं प्रतिसारणः ॥ १४६ ॥
पानीयो यस्तु गुल्मादौ तं वारानेकविंशतिम्।
स्रावयेत् षड्गुणे तोये केचिदाहुश्चतुर्गुणे ॥ १४७ ॥

क्षारः।

भावितं रजनीचूर्णैः स्नुहीक्षीरे पुनः पुनः।
बन्धनात् सुदृढं सूत्रं भिनत्त्यर्शो भगन्दरम् ॥ १४८ ॥

क्षारसूत्रम्।

प्राग्दक्षिणं ततो वामं पृष्ठजं चाग्रजं क्रमात्।
पश्चतिक्तेन संलिख्य दहेत् क्षारेण वह्निना ॥ १४९ ॥
वातजं श्लेष्मजं चार्शः क्षारेणास्रजपित्तजे।
महान्ति तनुमूलानि छित्त्वैव बलिनो दहेत् ॥ १५०॥
चर्मकीलं तथा छित्त्वा दहेदन्यतरेण वा।
पक्वजम्बूपमो वर्णः क्षारदग्धः प्रशस्यते ॥ १५१ ॥
गोजीशेफालिकापत्रैरर्शः संलिख्य लेपयेत्।
क्षारेण वाक्शतं तिष्ठेत् यन्त्रद्वारं पिधाय च ॥ १५२ ॥
तन्नापनीय वीक्षेत पक्वजम्बूफलोपमम्।
यदि च स्यात् ततो भद्रं नो चेल्लिम्पेत् तथा पुनः ॥१५३॥
तत् तुषाम्बुप्लुतं साज्यं यष्टीकल्केन लेपयेत्।
न निम्नं तालवर्णाभं वह्निदग्धे स्थितासृजम् ॥१५४॥
निर्वाप्य मधुसर्पिर्भ्यां वह्निसंजातवेदनाम्।
सम्यग्दग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः ॥१५५॥
साम्मृतैः सर्पिषा युक्तैरालेपं कारयेद्भिषक्।

भुक्तवन्तमुपवेश्याऽसौ तोयपूर्णेऽथ भाजने ॥१५६॥
क्षारमुष्णाम्बुना पाय्यं विबन्धे मूत्रवर्चसोः।
दाहे वस्त्यादिजे लेपः शतधौतेन सर्पिषा ॥१५७॥
नवान्नं माषतक्रादि सेव्यं पाकाय जातना।
पिवेद् व्रणविशुद्धार्थं वराक्वाथं सगुग्गुलुम् ॥१५८॥
जीर्णे शाल्यन्नमुद्गादि पथ्यं तिलाज्यसैन्धवम्।
रूढसर्वव्रणं वैद्यः क्षारं दत्त्वानुवासयेत् ॥१५९॥
पिप्पल्याद्येन तैलेन सेवेद्दीपनपाचनम्।
त्रिवृच्चित्रकनिर्गुण्डीस्नुहीमुण्डतिकाजटाः ॥१६०॥
प्रत्येकशोऽष्टपलिकां जलद्रोणे विपाचयेत्।
पलत्रयं विडङ्गस्य व्योषात्कर्षत्रयं पृथक् ॥१६१॥
त्रिफलायाः पञ्च पलं शिलाजतुपलं न्यसेत्।
दिव्यौषधिहतस्यापि वैकङ्कतहतस्य वा ॥१६२॥
पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम्।
पलैश्चतुर्विंशतिभिर्मधुशर्करयोर्युतम् ॥१६३॥
घनीभूते सुशीते च दापयेद्दवतारिते।
एतदग्निमुखं नाम दुर्नामान्तकरं परम् ॥१६४॥
सममग्निं करोत्याशु कालाग्निसमतेजसम्।
पर्वता अपि जीर्यन्ति प्राशनादस्य देहिनः ॥१६५॥
गुरुवृष्यान्नपानानि पयोमांसरसो हितः।
दुर्नामपाण्डुश्वयथुकुष्ठप्लीहोदरापहम् ॥१६६॥
अकालपलितघ्नं तदामवातगुदामयम्।
न स रोगोऽस्ति यञ्चापि न निहन्यादिदं क्षणात् ॥१६७
करीरकाञ्जिकादीनि ककारादीनि वर्जयेत्।

स्रवत्यतोऽन्यथा लौहं देहात् किट्टञ्च दुर्जरम् ॥१६७॥

अग्निमुखं लौहम्।

चित्रकं त्रिफला मुस्तं ग्रन्थिकं चविकाऽमृता।
हस्तिपिप्पल्यपामार्गदण्डोत्पलकुठेरकाः ॥१६८॥
एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत्।
भल्लातकसहस्रे द्वे छित्वा तत्रैव दापयेत् ॥१७०॥
तेन पादावशेषेण लौहपात्रे पचेद्भिषक्।
तुलार्द्धं तीक्ष्णलौहस्य घृतस्य कुड़वद्वयम् ॥१७१॥
त्र्यूषणं त्रिफलावह्निसैन्धवं विड़मौद्भिदम्।
सौवर्च्चलविड़ङ्गानि पलिकांशानि कल्पयेत् ॥१७२॥
कुड़वं वृद्धदारस्य तालमूल्यास्तथैव च।
शूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिक्षिपेत् ॥१७३॥
सिद्धे शीते प्रदातव्यं मधुनः कुड़वद्वयम्।
प्रातर्भोजनकाले च ततः खादेद्यथाबलम् ॥१७४॥
अर्शांसि ग्रहणीदोषं पाण्डुरोगमरोचकम्।
क्रिमिगुल्माश्मरीमेहान् शूलञ्चाशु व्यपोहति ॥१७५॥
करोति शुक्रोपचयं बलीपलितनाशनम्।
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम् ॥ १७६ ॥

भल्लातकलौहम्।

रसस्तु पादिकस्तुल्या विड़ङ्गमरिचाभ्रकाः।
गङ्गापालङ्कजरसे खल्वयित्वा पुनः पुनः ॥ १७७ ॥
रक्तिमात्रा गुदार्शोघ्नी वह्नेरत्यर्थदीपनी।
वेगावरोधस्त्रीपृष्ठयानमुत्कटकासनम्।

यथास्वं दोषलं चान्नमर्शसः परिवर्जयेत्। १७८॥

इत्यर्शश्चिकित्सा।

## अथाग्निमान्द्याधिकारः।

समस्य रक्षणं कार्य्यं विषमे वातनिग्रहः।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम्॥१॥
त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणघृतानामष्टमो हिङ्गुभागः।
प्रथमकवलभुक्तं सर्पिषा चूर्णमेत-
ज्जनयति जठराग्निं वातरोगांश्च हन्यात्॥ २॥

हिङ्ग्वष्टकं चूर्णम्।

समयवशूकमहौषधचूर्णं लीढं घृतेन गोसर्गे।
कुरुते क्षुधां सुखोदकं पीतं महौषधं वैकम्॥ ३॥
अन्नमण्डं पिबेदुष्णं हिङ्गुसौवर्च्चलान्वितम्।
विषमोऽपि समस्तेन मन्दो दीप्येत पावकः॥ ४॥
क्षुद्बोधनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च।
ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः॥५॥
नारीक्षीरेण संयुक्तां पिबेदौदुम्बरीं त्वचम्।
आभ्यां वा पायसं सिद्धं पिबेदत्यग्निशान्तये॥ ६॥
यत् किञ्चिद् गुरुमेध्यञ्च श्लेष्मकारि च भेषजम्।
सर्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा॥ ७॥
मुहुर्मुहुरजीर्णेऽपि भोज्यमस्योपकल्पयेत्।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न निपातयेत्॥ ८॥
विश्वाभयागुडूचीनां कषायेण षडूषणम्।

पिबेत् स्त्री मधि मन्देऽग्नौ त्वक्पत्त्रसुरभीकृतम् ॥९॥
पञ्चकोलं समरिचं षडूषणमुदाहृतम् ।
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ १० ॥
सिन्धूत्थपथ्यमगधोद्भववह्निचूर्ण-
मुष्णाम्बुना पिबति यः खलु नष्टवह्निः ।
तस्यामिषेण सघृतेन वरं नवान्नं
भस्मीभवत्यशितमात्रमिह क्षणेन ॥ ११ ॥
सिन्धूत्थहिङ्गु त्रिफलायमानी-
व्योषैर्गुडांशैर्गुडकान् प्रकुर्य्यात् ।
तैर्भक्षितैस्तृप्तिमवाप्नुवन्ना
भुञ्जीत मन्दाग्निरपि प्रभूतम् ॥ १२ ॥
विडङ्गभल्लातकचित्रकामृता:
सनागरास्तुल्यगुडेन सर्पिषा ।
निहन्ति ये मन्दहुताशना नरा
भवन्ति ते वाड़वतुल्यवह्नयः ॥ १३ ॥
गुड़ेन शुण्ठीमथवोपकुल्यां
पथ्यां तृतीयामथ दाड़िमं वा ।
आमेष्वजीर्णेषु गुदामयेषु
वर्चोविबन्धेषु च नित्यमद्यात् ॥१४॥
भोजनाग्रे हितं हृद्यं दीपनं लवणार्द्रकम् ।
कपित्थविल्वचाङ्गेरीमरिचाजाजीचित्रकैः ॥१५॥
कफवातहरो ग्राही खड़ो दीपनपाचनः ।
पिप्पलीशृङ्गवेरञ्च देवदारु सचित्रकम् ।१६॥

चविकां बिल्वपेशीञ्चाजमोदाञ्च हरीतकीम्।
महौषधं यमानीञ्च धान्यकं मरिचन्तथा॥१७॥
जीरकञ्चापि हिङ्गुञ्च काञ्जिकं साधयेद्भिषक्।
एष शार्दूलको नाम काञ्जिकोऽग्निबलप्रदः॥१८॥
सिद्धार्थतैलसंभृष्टो दश रोगान् व्यपोहति।
कासं श्वासमतीसारं पाण्डुरोगं सकामलम्॥१९॥
आमञ्च गुल्मशूलञ्च वातगुल्मं सवेदनम्।
अर्शांसि श्वयथुञ्चैव भुक्ते पीते च सात्म्यतः।
क्षीरपाकविधानेन काञ्जिकस्यापि साधनम्॥२०॥

शार्दूलकाञ्जिकः।

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत्।
पिप्पली त्रिगुणा चैव शृङ्गवेरं चतुर्गुणम्॥२१॥
यमानिका पञ्चगुणा षड्गुणा च हरीतकी।
चित्रकं सप्तगुणितं कुष्ठञ्चाष्टगुणं भवेत्॥२२॥
एतद्वातहरं चूर्णं पीतमात्रं प्रसन्नया।
पिबेद्दध्ना मस्तुना वा सुरया कोष्णवारिणा॥२३॥
सोदावर्त्तमजीर्णञ्च प्लीहानमुदरन्तथा।
अङ्गानि यस्य शीर्य्यन्ते विषं वा येन भक्षितम्॥२४॥
अर्शोहरं दीपनञ्च श्लेष्मघ्नं गुल्मनाशनम्।
कासं श्वासं निहन्त्याशु तथैव यक्ष्मनाशनम्।
चूर्णमग्निमुखं नाम न क्वचित् प्रतिहन्यते॥२५॥

अग्निमुखं चूर्णम्।

रसोऽर्द्धभागिकस्तुल्याविडङ्गमरिचाभ्रकाः।
भक्तोदकेन संमर्द्य कुर्य्याद् गुञ्जासमां गुडीम्॥२६॥

भक्तोदकानुपानैका सेव्या वह्निप्रदीपनी ।
वार्य्यन्नभोजनञ्चात्र प्रयोगे साम्यमिष्यते ॥२७॥

पानीयभक्तगुड़िका ।

द्वौ क्षारौ चित्रकं पाठाकरञ्जलवणानि च ।
सूक्ष्मैलापत्रकं भार्गी क्रिमिघ्नं हिङ्गुपौष्करम् ॥२८॥
शटी दार्व्वी त्रिवृन्मुस्तं वचा वैन्द्रयवा तथा ।
धात्रीजीरकवृक्षाम्लं श्रेयसी चोपकुञ्चिका ॥२९॥
अम्लवेतसमम्लिका यमानी सुरदारु च ।
अभयातिविषाश्यामाहवुषारग्वधं समम् ॥३०॥
तिलमुष्कशिग्रूणां कोकिलाक्षपलाशयोः ।
क्षाराणि लौहकिट्टञ्च तप्तं गोमूत्रसेचितम् ॥३१॥
समभागानि सर्वाणि सूक्ष्मचूर्णानि कारयेत् ।
मातुलुङ्गरसेनैव भावयेच्च दिनत्रयम् ॥३२॥
दिनत्रयञ्च शुक्तेन चार्द्रकस्वरसेन च ।
अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम् ॥३३॥
उपयुक्तविधानेन नाशयत्यचिरान्नृणाम् ।
अजीर्णकमथो गुल्मान् प्लीहानं गुदजानि च ॥३४॥
उदराण्यन्त्रवृद्धिञ्च चाष्ठीलां वातशोणितम् ।
प्रणुदत्युल्बणान् रोगान् नष्टवह्निञ्च दीपयेत् ॥३५॥
समस्तव्यञ्जनोपेतं भक्तं दत्त्वा सुभाजने ।
दापयेदस्य चूर्णस्य बिड़ालपदमात्रकम् ।
गोदोहमात्रात् तत् सर्वं द्रवीभवति सोष्मकम् ॥३६॥

बृहदग्निमुखं चूर्णम् ।

पिप्पलीपिप्पलीमूलं धन्याकजीरकम् ।

सैन्धवस्य विडस्यैव पत्रं तालीशकेशरम् ॥३७॥
एषां द्विपलिकान् भागान् पञ्च सौवर्चलस्य च ।
मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम् ॥३८॥
त्वगेले चार्धभागे च सामुद्रात् कुडवद्वयम् ।
दाडिमात् कुडवञ्चैव द्वे पले चाम्लवेतसात् ॥३९॥
एतच्चूर्णीकृतं सूक्ष्मं गन्धाढ्यममृतोपमम् ।
लवणं भास्करं नाम भास्करेण विनिर्मितम् ॥४०॥
जगतस्तु हितार्थाय वातश्लेष्मामयापहम् ।
वातगुल्मं निहन्त्येतद्वातशूलानि यानि च ॥४१॥
तक्रमस्तु सुरासीधुशुक्तकाञ्जिकयोजितम् ।
जाङ्गलानान्तु मांसेन रसेषु विविधेषु च ॥४२॥
मन्दाग्नेरश्नतः शक्तो भवेद्दीप्तश्च पावकः ।
अर्शांसि ग्रहणीदोषकुष्ठामयभगन्दरान् ॥४३॥
हृद्रोगमामदोषांश्च विविधानुदरस्थितान् ।
प्लीहानमश्मरीञ्चैव श्वासकासोदरक्रिमीन् ॥४४॥
विशेषतः शर्करादीन् रोगान्नानाविधांस्तथा ।
पाण्डुरोगांश्च विविधाञ्छमयत्यशनिर्यथा ॥४५॥

भास्करलवणम् ।

पिप्पलीपिप्पलीमूलं चित्रको हस्तिपिप्पली ।
हिङ्गु चव्याजमोदा च पञ्चैव लवणानि च ॥४६॥
द्वौ क्षारौ हपुषा चैव दद्यादर्धपलोन्मितान् ।
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च ॥ ४७ ॥
आर्द्रकस्वरसप्रस्थं घृतप्रस्थं विपाचयेत् ।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥ ४८ ॥

अर्शसां नाशनं श्रेष्ठं तथा गुल्मोदरापहम् ।
ग्रन्थ्यर्बुदापचीकासकफमेदोऽनिलानपि ॥ ४९ ॥
नाशयेद् ग्रहणीदोषं श्वयथुं सभगन्दरम् ।
ये च वस्तिगता रोगा ये च कुक्षिसमाश्रिताः ।
सर्वांस्तान्नाशयत्याशु सूर्य्यस्तम इवोदितः ॥ ५० ॥

अग्निघृतम् ।

पलिकैः पञ्चकोलैस्तु घृतं मस्तु चतुर्गुणम् ।
सक्षारैः सिद्धमल्पाग्निं कफगुल्मं विनाशयेत् ॥ ५१ ॥

मस्तुषट्पलकं घृतम् ।

भल्लातकसहस्रार्द्धं जलद्रोणे विपाचयेत् ।
अष्टभागावशेषञ्च कषायमवतारयेत् ॥ ५२ ॥
घृतप्रस्थं समादाय कल्कानीमानि दापयेत् ।
त्र्यूषणं पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥ ५३ ॥
हिङ्गुचव्याजमोदा च पञ्चैव लवणानि च ।
द्वौ क्षारौ हवुषा चैव दद्यादर्द्धपलोन्मितान् ॥ ५४ ॥
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च ।
आर्द्रकस्वरसञ्चैव शोभाञ्जनरसन्तथा ॥ ५५ ॥
तत् सर्वमेकतः कृत्वा शनैर्मृद्वग्निना पचेत् ।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥ ५६ ॥
अर्शसां नाशनं श्रेष्ठं मूढ़वातानुलोमनम् ।
कफवातोद्भवे गुल्मे श्लीपदे च दकोदरे ॥ ५७ ॥
शोथं पाण्डामयं कासं ग्रहणीं श्वासमेव च ।
एतान् विनाशयत्याशु सूर्य्यस्तम इवोदितः ॥ ५८ ॥

बृहदग्निघृतम् ।

द्वे पञ्चमूले त्रिफलामर्कमूलं शतावरीम्।
दन्तीं चित्रकमास्फोतां रास्नां पाठां सुधां शटीम्॥५९॥
पृथग्दशपलान् भागान्दग्ध्वा भस्म समावपेत्।
त्रिःसप्तकृत्वस्तद्भस्म जलद्रोणेन गालयेत्॥६०॥
तद्रसं साधयेदग्नौ चतुर्भागावशेषितम्।
ततो गुड़तुलां दत्त्वा साधयेन्मृदुनाग्निना॥६१॥
सिद्धं गुड़न्तु विज्ञाय चूर्णानीमानि दापयेत्।
वृश्चिकालीं द्विकाकल्यौ यवक्षारं समावपेत्॥६२॥
एते पञ्चकला भागाः पृथक् पञ्चपलानि च।
हरीतकीं त्रिकटुकं सर्जिकां चित्रकां वचाम्॥६३॥
हिङ्ग्वम्लवेतसाभ्याञ्च द्वे पले तत्र दापयेत्।
अक्षप्रमाणां गुड़िकां कृत्वा खादेद्यथाबलम्॥६४॥
अजीर्णं जरयत्येष जीर्णं सन्दीपयत्यपि।
भुक्तं भुक्तञ्च जीर्य्येत पाण्डुत्वमपकर्षति॥६५॥
प्लीहार्शःश्वयथुञ्चैव श्लेष्मश्वासमरोचकम्।
मन्दाग्निविषमाग्नीनां कफे कण्ठोरसि स्थिते॥६६॥
कुष्ठानि च प्रमेहांश्च गुल्मञ्चाशु नियच्छति।
ख्यातः क्षारगुड़ो ह्येष रोगयुक्ते प्रयोजयेत्॥६७॥

क्षारगुड़ः।

नासारोगे विधातव्या या चित्रकहरीतकी।
विना धात्रीरसं सोऽस्मिन् प्रोक्तश्चित्रगुड़ोऽग्निदः।
वचा लवणतोयेन वान्तिरामे प्रशस्यते॥६८॥

अन्नं विदग्धं हि नरस्य शीघ्रं
शीताम्बुना वै परिपाकमेति।

तद्रस्य शैत्येन निहन्ति पित्त-
माक्लेदिभावाच्च नयत्यधस्तात् ॥६८॥
विदह्यते यस्य तु भुक्तमात्रं
दह्येत हृत्कोष्ठगलञ्च यस्य ।
द्राक्षासितामाक्षिकसंप्रयुक्तां
लीढ्वाभयां वै स सुखं लभेत ॥७०॥
हरीतकी धान्यतुषोदसिद्धा
सपिप्पली सैन्धवहिङ्गुयुक्ता ।
सोद्गारधूमं भृशमप्यजीर्णं
विजित्य सद्यो जनयेत् क्षुधाञ्च ॥७१॥
विष्टब्धे स्वेदनं पथ्यं पेयञ्च लवणोदकम् ।
रसशेषे दिवास्वप्नो लङ्घनं वातवर्जनम् ॥७२॥
व्यायामप्रमदाध्ववाहनरतक्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगता हिक्कामरुत्पीड़ितान् ।
क्षीणान् क्षीणकफान् शिशून् मदहतान् वृद्धान् रसाजीर्णिनः
रात्रौ जागरिताब्निरशनान् कामं दिवा स्वापयेत् ॥७३॥
आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः ।
दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णप्रणाशनम् ॥७४॥
धान्यनागरसिद्धन्तु तोयं दद्याद्विचक्षणः ।
आमाजीर्णप्रशमनं दीपनं बस्तिशोधनम् ॥७५॥
पथ्यापिप्पलीसंयुक्तं चूर्णं सौवर्चलं पिबेत् ।
मस्तुनोष्णोदकेनाथ बुद्ध्वा दोषगतिं भिषक् ॥७६॥
चतुर्विधमजीर्णञ्च मन्दानलमथारुचिम् ।
आध्मानं वातगुल्मञ्च शूलञ्चाशु नियच्छति ॥७७॥

भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले।
पूर्वं स शुण्ठीमभयामशङ्कः संप्राश्य भुञ्जीत हितं हितार्थी॥७८॥

किञ्चिदामेन मन्दाग्निरभयागुड़नागरम्।
जग्ध्वा तक्रेन भुञ्जीत युक्तेनान्नं षडूषणैः॥७९॥

विसूचिकायां वमितं विरिक्तं
सुलङ्घितं वा मनुजं विदित्वा।
पेयादिभिर्दीपनपाचनैश्च
सम्यक् क्षुधार्त्तं समुपक्रमेत॥८०॥

कुष्ठसैन्धवयोः कल्कं चुक्रतैलसमन्वितम्।
विसूच्यां मर्दनं कोष्णं खल्लीशूलनिवारणम्॥ ८१ ॥

करञ्जनिम्बशिखरीगुडूच्यर्जकवत्सकैः।
पीतः कषायो वमनात् घोरां हन्ति विसूचिकाम्॥८२॥

व्योषं करञ्जस्य फलं हरिद्रां
मूलं समावाप्य च मातुलुङ्ग्याः।
छायाविशुष्का गुड़िकाः कृतास्ता
हन्युर्विसूचीं नयनाञ्जनेन॥ ८३ ॥

गुड़पुष्पसारशिखरितण्डुलमिरिकर्णिकाहरिद्राभिः।
अञ्जनगुड़िका विजयति विसूचिकां त्रिकटुसनाथा॥८४॥

त्वक्पत्ररास्नागुरुशिग्रुकुष्ठैरम्लेन पिष्टैः सवचाशताह्वैः।
उद्वर्त्तनं यद्वि विसूचिकायां तैलं विपक्वञ्च तदर्थकारि॥८५॥

पिपासायामनुत्क्लेशे लवङ्गस्याम्बु शस्यते।
जातीफलस्य वा शीतं शृतं भद्रघनस्य वा॥ ८६ ॥

विसूच्यामतिवृद्धायां पार्ष्णोर्दाहः प्रशस्यते।
वमनं त्वलसे पूर्वं लवणेनोष्णवारिणा॥ ८७ ॥

स्वेदो वर्त्तिर्लङ्घनञ्च क्रमशातोऽग्निवर्द्धनः ।
सवक् चानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ।
दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥ ८८ ॥

तक्रेण चूर्णं यवचूर्णमुष्णं
सक्षारमार्त्तिं जठरे निहन्यात् ।
स्वेदो वटैर्वा बहुवास्पपूर्णै-
कृष्णैस्तथान्यैरपि पाणितापैः ॥ ८९ ॥

तीव्रार्त्तिरपि नाजीर्णी पिबेच्छूल●षधम् ।
दोषाच्छन्नोऽनलो नालं पक्तुं दोषौषनाशनम् ॥ ९० ॥

इत्यग्निमान्द्यचिकित्सा ।

## अथ क्रिमिरोगाधिकारः ।

पारसी यमानिका पीता पर्य्युषितवारिणा प्रातः ।
गुड़पूर्वा क्रिमिजातं कोष्ठगतं पातयत्याशु ॥ १ ॥

पारिभद्रकपत्रोत्थं रसं चौद्रयुतं पिबेत् ।
केवुकस्य रसं वापि पत्युरस्याथ वा रसम् ।
लिह्यात् चौद्रेण वैरङ्गं चूर्णं क्रिमिविनाशनम् ॥ २ ॥

मुस्ताखुपर्णीफलदारुशिग्रु-
क्वाथः सकृष्णाक्रिमिशत्रुवल्कः ।
मार्गद्वयेनापि चिरप्रवृत्तान्
क्रिमीन्निहन्ति क्रिमिजांश्च रोगान् ॥ ३ ॥

आखुपर्णीदलैः पिष्टैः पिष्टकेन च पूपिकाम् ।
जग्ध्वा सौवीरकञ्चानु पिबेत् क्रिमिहरं परम् ॥ ४ ॥

पलाशवीजस्वरसं पिबेद्वा चौद्रसंयुतम् ।

पिबेत् तद्वीजकल्कं वा तक्रेण क्रिमिनाशनम् ।५॥
सुरसादिगणं वापि सर्वथैवोपयोजयेत् ।
विड़ङ्गसैन्धवक्षारकाम्पिल्लकहरीतकीः ॥६॥
पिबेत् तक्रेण संपिष्टाः सर्वक्रिमिनिवृत्तये ।
विड़ङ्गपिप्पलीमूलशिग्रु भिर्मरिचेन न च ॥७॥
तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी सस्नुवर्च्चिका ।
पीतं विम्बीघृतं हन्ति पक्वामाशयगान् क्रिमीन् ।८॥
त्रिफला त्रिवृता दन्ती वचा काम्पिल्लकं तथा ।
सिद्धमेभिर्गवां मूत्रे सर्पिः क्रिमिविनाशनम् ॥९॥
त्रिफलायास्त्रयः प्रस्था विड़ङ्गप्रस्थ एव च ।
द्विपलं दशमूलञ्च लाभतः समुपाचयेत् ॥१०॥
पादशेषे जलद्रोणे शृते सर्पिर्विपाचयेत् ।
प्रस्थोन्मितं सिन्धुयुतं तत्पलं क्रिमिनाशनम् ॥११॥
विड़ङ्गघृतमेतच्च लेह्यं शर्करया सह ।
सर्वान् क्रिमीन् प्रणुदति वज्रं मुक्तमिवासुरान् ॥१२॥

विड़ङ्गघृतम् ।

रसेन्द्रेण समायुक्तो रसो धूस्तूरपत्रजः ।
ताम्बूलपत्रजो वापि लेपो यूकविनाशनः ॥१३॥
विड़ङ्गगन्धकशिलासिद्धं सुरभीजलेन कटुतैलम् ।
आजन्म नश्यति नाशं लिख्यासहिताश्च यूकाश्च ॥१४॥

इति क्रिमिरोगचिकित्सा ।

## अथ पाण्डुरोगाधिकारः ।

साध्यन्तु पाण्डामयिनं समीक्ष्य स्निग्धं घृतेनोर्द्ध मधश्च शुद्धम् ।

सम्पादयेत् क्षौद्रघृतप्रगाढैर्हरीतकीचूर्णमयैः प्रयोगैः ॥१॥
पिबेद् घृतं वा रजनीविपक्वं सत्रैफलं तैल्वकमेव चापि ।
विरेचनद्रव्यकृतान् पिबेद्वा योगांश्च वैरेचनिकान् घृतेन ॥२॥
विधिः स्निग्धोऽथ वातोत्थे तिक्तशीतस्तु पैत्तिके ।
श्लैष्मिके कटुरूक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके ॥३॥
द्विशर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिके पिबेत् ।
कफपाण्डुस्तु गोमूत्रयुक्तां क्लिन्नां हरीतकीम् ॥४॥
नागरं लोहचूर्णं वा कृष्णां पथ्यामथाश्मजम् ।
गुग्गुलुं वाऽथ मूत्रेण कफपाण्ड्वामयी पिबेत् ॥५॥
सप्तरात्रं गवां मूत्रे भावितं वाप्ययोरजः ।
पाण्डुरोगप्रशान्त्यर्थं पयसा प्रपिबेन्नरः ॥६॥
फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः ।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम् ॥७॥
अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम् ।
तैर्मोदकः क्षौद्रयुतोऽनुतक्रः पाण्ड्वामये दूरगतेऽपि शस्तः ॥८॥
अयोमलन्तु सन्तप्तं भूयो गोमूत्रशोधितम् ।
मधुसर्पिर्युतं चूर्णं सह भक्तेन योजयेत् ॥९॥
दीपनञ्चाग्निजननं शोथपाण्ड्वामयापहम् ।
त्र्यूषणत्रिफलामुस्तविडङ्गचित्रकाः समाः ॥१०॥
नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा ।
भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शःकामलापहम् ॥११॥

नवायसं लौहम् ।

त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च ।
भागश्चित्रकमूलस्य विडङ्गानां तथैव च ॥ १२ ॥

पञ्चाग्निजतुनो भागास्तथाभ्रमलस्य च।
माक्षिकस्य विडङ्गस्य लौहस्य रजसस्तथा॥ १३॥
अष्टौ भागाः सितायाश्च तत् सर्वं सूक्ष्मचूर्णितम्।
माक्षिकेनाप्लुतं स्थाप्यमायसे भाजने शुभे॥ १४॥
उडुम्बरसमां मात्रां ततः खादेत् यथाग्निना।
दिने दिने प्रयोगेन जीर्णे भोज्यं यथेप्सितम्॥ १५॥
वर्जयित्वा कुलत्थांश्च काकमाचीकपोतकान्।
योगराज इति ख्यातो योगोऽयममृतोपमः॥ १६॥
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम्।
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम्॥ १७॥
कुष्ठान्यजरकं मेहं श्वासं हिक्कामरोचकम्।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च॥ १८॥

योगराजः।

त्रिफलाकटुकामुस्तकुष्ठदारुकलिङ्गकाः।
कर्षांशा द्विपिचुमूर्वा कर्षार्द्धा च घनप्रिया॥ १९॥
पीत्वा तच्चूर्णमम्भोभिः सुखैर्लिह्यात् ततो मधु।
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम्॥ २०॥
गुल्मानाहामवातांश्च तिक्तपित्तञ्च तज्जयेत्।
लौहपात्रे शृतं क्षीरं सप्ताहं पथ्यभोजनम्॥ २१॥
पिबेत् पाण्ड्वामयी शोषी ग्रहणीदोषपीड़ितः।
कल्याणकं पञ्चगव्यं महातिक्तमथापि वा॥ २२॥
स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे।
रेचनं कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत्॥ २३॥
ततः प्रशमनी कार्य्या क्रिया वैद्येन जानता।

त्रिफलाया गुडुच्या वा दार्व्या निम्बस्य वा रसः ॥ २४ ॥
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः ।
अञ्जनं कामलार्त्तस्य द्रोणपुष्पीरसः स्मृतः ॥ २५ ॥
निशागैरिकधात्रीणां चूर्णं वा संप्रकल्पयेत् ।
नस्यं कर्कोटमूलं वा घ्रेयं वा जालिनीफलम् ॥ २६ ॥
सशर्करा कामलिनां त्रिभण्डी
हिता गवाक्षी सगुडा च शुण्ठी ॥२७॥
दार्वीसत्रिफलाव्योषविडङ्गान्ययसो रजः ।
मधु सर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥२८॥
तुल्या अयोरजःपथ्याहरिद्राः क्षौद्रसर्पिषा ।
चूर्णिताः कामली लिह्यात् गुडक्षौद्रेण वाभयाम् ॥ २९ ॥
धात्रीलौहरजोव्योषनिशाक्षौद्राज्यशर्कराः ।
लीढ्वा निवारयत्याशु कामलामुद्धतामपि ॥३०॥
दग्ध्वाक्षकाष्ठैर्मलमायसन्तु गोमूत्रनिर्वापितमष्टवारान् ।
विचूर्ण्य लीढं मधुना चिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति ॥३१॥
पाण्डुरोगक्रियां सर्वां योजयेच्च हलीमके ।
कामलायाञ्च या दृष्टा सापि कार्य्या भिषग्वरैः ॥३२॥
विडङ्गमुस्तत्रिफलादेवदारुषडूषणैः ।
तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ॥३३॥
तैरक्षमात्रां गुडिकां कृत्वा खादेद्दिने दिने ।
कामलापाण्डुरोगार्त्तः सुखमाप्स्यते चिरात् ॥३४॥

विडङ्गाद्यं लौहम् ।

त्र्यूषणं त्रिफला मुस्तं विडङ्गं चव्यचित्रकौ ।
दार्वी त्वङ्माक्षिको धातुर्ग्रन्थिकं देवदारु च ॥३५॥

एषां द्विपलिकान् भागांश्चूर्णं कृत्वा पृथक् पृथक् ।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम् ॥३६॥
मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत् ततः ।
उडुम्बरसमान् कुर्य्याद्वटकांस्तान् यथाग्नितः ॥३७॥
उपयुञ्जीत तक्रेण साक्रं जीर्णे च भोजनम् ।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥३८॥
कुष्ठान्यजरकं शोथमूरुस्तम्भकफामयान् ।
अर्शांसि कामलामेहान् प्लीहानं शमयन्ति च ॥३९॥
निर्वाप्य बहुशो मूत्रे मण्डूरं ग्राह्यमिष्यते ।
शाहयत्यष्टगुणितं मूत्रं मण्डूरचूर्णतः ॥४०॥

मण्डूरम् ।

पुनर्नवात्रिवृच्छुण्ठीपिप्पलीमरिचानि च ।
विडङ्गं देवकाष्ठञ्च चित्रकं पुष्कराह्वयम् ॥४१॥
त्रिफलां द्वे हरिद्रे च दन्तीञ्च चविकं तथा ।
कुटजस्य फलं तिक्तापिप्पलीमूलमुस्तकम् ॥ ४२ ॥
एतानि समभागानि मण्डूरं द्विगुणं ततः ।
गोमूत्रेऽष्टगुणे पक्त्वा स्थापयेत् स्निग्धभाजने ।
पाण्डुशोथोदरानाहशूलार्शःकृमिगुल्मनुत् ॥४३॥

पुनर्नवामण्डूरम् ।

पञ्चकोलं समरिचं देवदारुफलत्रिकम् ।
विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः ॥ ४४ ॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः ।
पक्त्वा चाष्टगुणे मूत्रे घनीभूतं तदुद्धरेत् ॥ ४५ ॥
ततोऽक्षमात्रान् गुडकान् पिबेत्तक्रेण तक्रभुक् ।

पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम् ॥४६॥
अर्शांसि ग्रहणीदोषमूरुस्तम्भमथापि वा।
क्रिमिप्लीहानमुदरं गररोगञ्च नाशयेत्।
मण्डूरवज्रनामायं रोगानीकविनाशनः ॥४७॥

मण्डूरवज्रवटकः।

धात्रीफलसहस्रे द्वे पीड़यित्वा रसं भिषक्।
क्षौद्राष्टभागं पिप्पल्याश्चूर्णार्द्धकुड़वान्वितम् ॥ ४८ ॥
शर्करार्द्धतुलोन्मिश्रं पक्कं स्निग्धवटे स्थितम्।
प्रपिबेत् पाण्डुरोगार्त्तो जीर्णे हितमिताशनः ॥४९॥
कामलापाण्डुहृद्रोगवातासृक्विषमज्वरान्।
कासहिक्कारुचिश्वासानेषोऽरिष्टः प्रणाशयेत् ॥५०॥

धात्र्यरिष्टः।

पुराणसर्पिषः प्रस्थो द्राक्षार्द्धप्रस्थसाधितः।
कामलागुल्मपाण्ड्वर्त्तिज्वरमेहोदरापहः ॥५१॥

द्राक्षाघृतम्।

हरिद्रात्रिफलानिम्बबलामधूकसाधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥५२॥

हरिद्राघृतम्।

मूर्वातिक्तानिशायासकृष्णाचन्दनपर्पटैः।
त्रायन्तीवत्सभूनिम्बपटोलाम्बुददारुभिः ॥५३॥
अक्षमात्रैर्घृतप्रस्थं सिद्धं क्षीरं चतुर्गुणम्।
पाण्डुताज्वरविस्फोटशोथार्शोरक्तपित्तनुत् ॥५४॥

मूर्वाद्यं घृतम्।

व्योषं विल्वं द्विरजनी त्रिफला द्विपुनर्नवा।

मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ॥५५॥
हषिकाली च भार्गी च सक्षीरैस्तैर्घृतं शृतम् ।
सर्वान् प्रशमयत्येतद्विकारान् मृत्तिकाकृतान् ॥५६॥

व्योषाद्यं घृतम् ।

इति पाण्डुरोगचिकित्सा ।

## अथ रक्तपित्ताधिकारः ।

नोद्रिक्तमादौ संग्राह्यं बलिनोऽप्यश्नतश्च यत् ।
हृत्पाण्डुग्रहणीदोषप्लीहगुल्मज्वरादिकृत् ॥१॥
ऊर्द्धं प्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः ।
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम् ॥२॥
ऊर्द्धगे तर्पणं पूर्वं कर्त्तव्यञ्च विरेचनम् ।
प्रागधोगमने पेया वमनञ्च यथाबलम् ॥३॥
तर्पणं सघृतक्षौद्रलाजचूर्णैः प्रदापयेत् ।
ऊर्द्धगं रक्तपित्तं तत् पीतं काले व्यपोहति ॥४॥
जलं खर्जूरमृद्वीकामधूकैः सपरूषकैः ।
शृतशीतं प्रयोक्तव्यं तर्पणार्थं सशर्करम् ॥५॥
त्रिवृता त्रिफला श्यामा पिप्पली शर्करा मधु ।
मोदकः सन्निपातोर्द्धरक्तपित्तज्वरापहः ॥६॥
शालपर्ण्यादिना सिद्धा पेया पूर्वमधोगमे ।
वमनं मदनोन्मिश्रो मन्थः सक्षौद्रशर्करः ॥७॥
शालिषष्टिकनीवारकोरदूषप्रशातिकाः ।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥८॥

स्वेदो वर्त्तिर्लङ्घनञ्च क्रमश्चातोऽग्निवर्द्धनः ।
सत्वक् चानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ।
दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥ ८८ ॥
तक्रेण चूर्णं यवचूर्णमुष्णं
सक्षारमार्त्तिं जठरे निहन्यात् ।
स्वेदो घटैर्वा बहुबाष्पपूर्णै-
रुष्णैस्तथान्यैरपि पाणितापैः ॥ ८९ ॥
तीव्रार्त्तिरपि नाजीर्णी पिबेच्छूल[illegible]ौषधम् ।
दोषाच्छन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥ ९० ॥

इत्यग्निमान्द्यचिकित्सा ।

## अथ क्रिमिरोगाधिकारः ।

पारसी यमानिका पीता पर्य्युषितवारिणा प्रातः ।
गुड़पूर्वा क्रिमिजातं कोष्ठगतं पातयत्याशु ॥ १ ॥
पारिभद्रकपत्रोत्थं रसं क्षौद्रयुतं पिबेत् ।
केवुकस्य रसं वापि पत्तुरस्याथ वा रसम् ।
लिह्यात् क्षौद्रेण वैरङ्गं चूर्णं क्रिमिविनाशनम् ॥ २ ॥
मुस्ताखुपर्णीफलदारुशिग्रु-
क्वाथः सकृष्णाक्रिमिशत्रुकल्कः ।
मार्गद्वयेनापि चिरप्रवृत्तान्
क्रिमीन्निहन्ति क्रिमिजांश्च रोगान् ॥ ३ ॥
आखुपर्णीदलैः पिष्टैः पिष्टकेन च पूपिकाम् ।
जग्ध्वा सौवीरकञ्चानु पिबेत् क्रिमिहरं परम् ॥ ४ ॥
पलाशबीजस्वरसं पिबेद्वा क्षौद्रसंयुतम् ।

पिबेत् तद्बीजकल्कं वा तक्रेण क्रिमिनाशनम् ।५॥
सुरसादिगणं वापि सर्वथैवोपयोजयेत् ।
विड़ङ्गसैन्धवक्षारकाम्पिल्लकहरीतकीः ॥६॥
पिबेत् तक्रेण संपिष्टाः सर्वक्रिमिनिवृत्तये ।
विड़ङ्गपिप्पलीमूलशिग्रुभिर्मरिचेन च ॥७॥
तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी ससुवर्चिका ।
पीतं विम्बीघृतं हन्ति पक्वामाशयगान् क्रिमीन् ॥८॥
त्रिफला त्रिवृता दन्ती वचा काम्पिल्लकं तथा ।
सिद्धमेभिर्गवां मूत्रे सर्पिः क्रिमिविनाशनम् ॥९॥
त्रिफलायास्त्रयः प्रस्था विड़ङ्गप्रस्थ एव च ।
द्विपलं दशमूलस्य लाभतः समुपाचयेत् ।१०॥
पादशेषे जलद्रोणे शृते सर्पिर्विपाचयेत् ।
प्रस्थोन्मितं सिन्धुयुतं तत्पलं क्रिमिनाशनम् ॥११॥
विड़ङ्गघृतमेतच्च लेह्यं शर्करया सह ।
सर्वान् क्रिमीन् प्रणुदति वज्रं मुक्तमिवासुरान् ॥१२॥

विड़ङ्गघृतम् ।

रसेन्द्रेण समायुक्तो रसो धूस्तूरपत्रजः ।
ताम्बूलपत्रजो वापि लेपो यूकविनाशनः ॥१३॥
विड़ङ्गगन्धकशिलासिद्धं सुरभीजलेन कटुतैलम् ।
आजन्म नयति नाशं लिक्षासहितास्तु यूकास्तु ॥१४॥

इति क्रिमिरोगचिकित्सा ।

## अथ पाण्डुरोगाधिकारः।

साध्यन्तु पाण्डामयिनं समीक्ष्य स्निग्धं घृतेनोर्द्ध्वमधश्च शुद्धम् ।

सम्पादयेत् क्षौद्रघृतप्रगाढ़ैर्हरीतकीचूर्णमयैः प्रयोगैः ।१।
पिबेद् घृतं वा रजनीविपक्वं सत्रैफलं तैल्वकमेव चापि ।
विरेचनद्रव्यकृतान् पिबेद्वा योगांश्च वैरेचनिकान् घृतेन ॥२॥
विधिः स्निग्धोऽथ वातोत्थे तिक्तशीतस्तु पैत्तिके ।
श्लैष्मिके कटुरुक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके ॥३॥
हिंशर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिके पिबेत् ।
कफपाण्डुस्तु गोमूत्रयुक्तां क्लिन्नां हरीतकीम् ॥४॥
नागरं लोहचूर्णं वा कृष्णां पथ्यामथाश्मजम् ।
गुग्गुलुं वाऽथ मूत्रेण कफपाण्ड्वामयी पिबेत् ॥५॥
सप्तरात्रं गवां मूत्रे भावितं वाप्ययोरजः ।
पाण्डुरोगप्रशान्त्यर्थं पयसा प्रपिबेन्नरः ॥६॥
फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः ।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम् ॥७॥
अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम् ।
तैर्मोदकः क्षौद्रयुतोऽनुतक्रः पाण्ड्वामये दूरगतेऽपि शस्तः ॥८॥
अयोमलन्तु सन्तप्तं भूयो गोमूत्रशोधितम् ।
मधुसर्पिर्युतं चूर्णं सह भक्तेन योजयेत् ॥९॥
दीपनञ्चाग्निजननं शोथपाण्ड्वामयापहम् ।
त्र्यूषणत्रिफलामुस्तविड़ङ्गचित्रकाः समाः ॥१०॥
नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा ।
भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शःकामलापहम् ॥११॥

नवायसं लौहम् ।

त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च ।
भागश्चित्रकमूलस्य विड़ङ्गानां तथैव च ॥ १२ ॥

चव्याभ्रजतुनो भागास्तथा चामलकस्य च ।
माक्षिकस्य विशुद्धस्य लौहस्य रजसस्तथा ॥ १३ ॥
अष्टौ भागाः सितायाश्च तत् सर्वं सूक्ष्मचूर्णितम् ।
माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे ॥ १४ ॥
उडुम्बरसमां मात्रां ततः खादेत् यथाग्निना ।
दिने दिने प्रयोगेन जीर्णे भोज्यं यथेप्सितम् ॥ १५ ॥
वर्जयित्वा कुलत्थांश्च काकमाचीकपोतकान् ।
योगराज इति ख्यातो योगोऽयममृतोपमः ॥ १६ ॥
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम् ।
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ॥ १७ ॥
कुष्ठान्यजरकं मेहं श्वासं हिक्कामरोचकम् ।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ १८ ॥

### योगराजः ।

विशालाकटुकामुस्तकुष्ठदारुकलिङ्गकाः ।
कर्षांशा द्विपिचुमूर्वा कर्षांशा च घनप्रिया ॥ १९ ॥
पीत्वा तच्चूर्णमम्भोभिः सुखैर्लिह्यात् ततो मधु ।
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम् ॥ २० ॥
गुल्मानाहामवातांश्च रक्तपित्तञ्च तज्जयेत् ।
लौहपात्रे शृतं क्षीरं सप्ताहं पथ्यभोजनम् ॥ २१ ॥
पिबेत् पाण्ड्वामयी शोषी ग्रहणीदोषपीड़ितः ।
कल्याणकं पञ्चगव्यं महातिक्तमथापि वा ॥ २२ ॥
स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे ।
रेचनं कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत् ॥ २३ ॥
ततः प्रशमनी कार्य्या क्रिया वैद्येन जानता ।

त्रिफलाया गुडुच्या वा दार्व्या निम्बस्य वा रसः ॥ २४ ॥
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः ।
अञ्जनं कामलार्त्तस्य द्रोणपुष्पीरसः स्मृतः ॥ २५ ॥
निशागैरिकधात्रीणां चूर्णं वा संप्रकल्पयेत् ।
नस्यं कर्कोटमूलं वा घ्रेयं वा जालिनीफलम् ॥ २६ ॥
सशर्कराकामलिनां त्रिभण्डी
हिता गवाक्षी सगुडा च शुण्ठी ॥२७॥
दार्वीसत्रिफलाव्योषविडङ्गान्ययसो रजः ।
मधु सर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥२८॥
तुल्या अयोरजःपथ्याहरिद्राः क्षौद्रसर्पिषा ।
चूर्णिताः कामली लिह्यात् गुडक्षौद्रेण वाभयाम् ॥ २९ ॥
धात्रीलौहरजोव्योषनिशाक्षौद्राज्यशर्कराः ।
लीढ्वा निवारयत्याशु कामलामुद्धतामपि ॥३०॥
दग्ध्वाक्षकाष्ठैर्मलमायसन्तु गोमूत्रनिर्वापितमष्टवारान् ।
विचूर्ण्य लीढं मधुना चिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति ॥३१॥
पाण्डुरोगक्रियां सर्वां योजयेच्च हलीमके ।
कामलायाञ्च या दृष्टा सापि कार्य्या भिषग्वरैः ॥३२॥
विडङ्गमुस्तत्रिफलादेवदारुषडूषणैः ।
तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ॥३३॥
तैरक्षमात्रां गुडिकां कृत्वा खादेद्दिने दिने ।
कामलापाण्डुरोगार्त्तः सुखमाप्स्यते चिरात् ॥३४॥

विडङ्गाद्यं लौहम् ।

त्र्यूषणं त्रिफला मुस्तं विडङ्गं चव्यचित्रकौ ।
दार्वी त्वङ्माक्षिको धातुर्ग्रन्थिकं देवदारु च ॥३५॥

एषां द्विपलिकान् भागांश्चूर्णं कृत्वा पृथक् पृथक्।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम् ॥३६॥
मूत्रे चाष्टगुणे पक्का तस्मिंस्तु प्रक्षिपेत् ततः।
उडुम्बरसमान् कुर्य्याद्वटकांस्तान् यथाग्नितः ॥३७॥
उपयुञ्जीत तक्रेण साम्यं जीर्णे च भोजनम्।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥३८॥
कुष्ठान्यजरकं शोथमूरुस्तम्भकफामयान्।
अर्शांसि कामलामेहान् प्लीहानं शमयन्ति च ॥३९॥
निर्वाप्य बहुशो मूत्रे मण्डूरं ग्राह्यमिष्यते।
शोधयत्यष्टगुणितं मूत्रं मण्डूरचूर्णतः ॥४०॥

मण्डूरम्।

पुनर्नवात्रिवृच्छुण्ठीपिप्पलीमरिचानि च।
विडङ्गं देवकाष्ठञ्च चित्रकं पुष्कराह्वयम् ॥४१॥
त्रिफलां द्वे हरिद्रे च दन्तीञ्च चविकं तथा।
कुटजस्य फलं तिक्तापिप्पलीमूलमुस्तकम् ॥ ४२ ॥
एतानि समभागानि मण्डूरं द्विगुणं ततः।
गोमूत्रेऽष्टगुणे पक्का स्थापयेत् स्निग्धभाजने।
पाण्डुशोथोदरानाहशूलार्शःक्रिमिगुल्मनुत् ॥४३॥

पुनर्नवामण्डूरम्।

पञ्चकोलं समरिचं देवदारुफलत्रिकम्।
विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः ॥ ४४ ॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः।
पक्का चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् ॥ ४५ ॥
ततोऽक्षमात्रान् गुड़कान् पिबेत्तक्रेण तक्रभुक्।

पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम् ॥४६॥
अर्शांसि ग्रहणीदोषमूरुस्तम्भमथापि वा।
क्रिमिप्लीहानमुदरं गररोगञ्च नाशयेत्।
मण्डूरवज्रनामायं रोगानीकविनाशनः ॥४७॥

मण्डूरवज्रवटकः।

धात्रीफलसहस्रे द्वे पीड़यित्वा रसं भिषक्।
क्षौद्राष्टभागं पिप्पल्याश्चूर्णार्द्धकुड़वान्वितम् ॥ ४८ ॥
शर्करार्द्धतुलोन्मिश्रं पक्कं स्निग्धवटे स्थितम्।
प्रपिबेत् पाण्डुरोगार्त्तो जीर्णे हितमिताशनः ॥४९॥
कामलापाण्डुहृद्रोगवातासृक्विषमज्वरान्।
कासहिक्कारुचिश्वासानेषोऽरिष्टः प्रणाशयेत् ॥५०॥

धात्र्यरिष्टः।

पुराणसर्पिषः प्रस्थो द्राक्षार्द्धप्रस्थसाधितः।
कामलागुल्मपाण्डुर्त्तिज्वरमेहोदरापहः ॥५१॥

द्राक्षाघृतम्।

हरिद्रात्रिफलानिम्बबलामधूकसाधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥५२॥

हरिद्राघृतम्।

मूर्वातिक्तानिशायासकृष्णाचन्दनपर्पटैः।
त्रायन्तीवत्सभूनिम्बपटोलाम्बुददारुभिः ॥५३॥
अक्षमात्रैर्घृतप्रस्थं सिद्धं क्षीरं चतुर्गुणम्।
पाण्डुताज्वरविस्फोटशोथार्शोरक्तपित्तनुत् ॥५४॥

मूर्वाद्यं घृतम्।

व्योषं बिल्वं द्विरजनी त्रिफला द्विपुनर्नवा।

मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ॥५५॥
वृश्चिकाली च भार्गी च सक्षीरैस्तैर्घृतं शृतम्।
सर्वान् प्रशमयत्येतद्विकारान् मृत्तिकाकृतान् ॥५६॥

व्योषाद्यं घृतम्।

इति पाण्डुरोगचिकित्सा।

## अथ रक्तपित्ताधिकारः।

नोद्रिक्तमादौ संग्राह्यं बलिनोऽप्यश्नतश्च यत्।
हृत्पाण्डुग्रहणीदोषप्लीहगुल्मज्वरादिकृत् ॥१॥
ऊर्द्धं प्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः।
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम् ॥२॥
ऊर्द्धगे तर्पणं पूर्वं कर्त्तव्यञ्च विरेचनम्।
प्रागधोगमने पेया वमनञ्च यथाबलम् ॥३॥
तर्पणं सघृतक्षौद्रलाजचूर्णैः प्रदापयेत्।
ऊर्द्धगं रक्तपित्तं तत् पीतं काले व्यपोहति ॥४॥
जलं खर्जूरमृद्वीकामधूकैः सपरूषकैः।
शृतशीतं प्रयोक्तव्यं तर्पणार्थं सशर्करम् ॥५॥
त्रिवृता त्रिफला श्यामा पिप्पली शर्करा मधु।
मोदकः सन्निपातोर्द्धरक्तपित्तज्वरापहः ॥६॥
शालपर्ण्यादिना सिद्धा पेया पूर्वमधोगमे।
वमनं मदनोन्मिश्रो मन्थः सक्षौद्रशर्करः ॥७॥
शालिषष्टिकनीवारकोरदूषप्रशातिकाः।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥८॥

मसूरमुद्गचणकाः समुद्गाश्चाढ़कीफलाः ।
प्रशस्ताः सूपयूषार्थं कल्पिता रक्तपित्तिनाम् ॥९॥
शाकं पटोलवेत्राग्रतण्डुलीयादिकं हितम् ।
मांसं लावकपोतादिशशैणहरिणादिजम् ॥१०॥
विना शुण्ठीं षड़ङ्गेन सिद्धं तोयञ्च दापयेत् ।
चीणमांसबलं बालं वृद्धं शोषानुबन्धिनम् ॥ ११ ॥
अवम्यमविरेच्यञ्च स्तम्भनैः समुपाचरेत् ॥ १२ ॥
वृषपत्राणि निष्पीड्य रसं समधुशर्करम् ।
पिबेत् तेन शमं याति रक्तपित्तं सुदारुणम् ॥ १३ ॥
आटरूषकनिर्य्यूहे प्रियङ्गुमृत्तिकाञ्जने ।
विनीय लोध्रं सचौद्रं रक्तपित्तहरं पिबेत् ॥ १४ ॥
वासाकषायोत्पलमृत्प्रियङ्गु-
लोध्राञ्जनाम्भोरुहकेशराणि ।
पीत्वा शीता चौद्रयुता निहन्यात्
पित्तासृजो वेगमुदीर्णमाशु ॥ १५ ॥
तालीशचूर्णसंयुक्तः पेयः चौद्रेण वासकस्वरसः ।
कफपित्ततमकश्वासस्वरभेदरक्तपित्तहरः ॥ १६ ॥
आटरूषकमृद्वीकापथ्याक्वाथः सशर्करः ।
चौद्राढ्यः कसनश्वासरक्तपित्तनिवर्हणः ॥ १७ ॥
वासायां विद्यमानायामाशायां जीवितस्य च ।
रक्तपित्ती चयी कासी किमर्थमवसीदति ॥१८॥
समाचिकः फल्गुफलोद्भवो वा
पीतो रसः शोणितमाशु हन्ति ॥१९॥
मदयन्त्यङ्घ्रिजः क्वाथस्तद्वत् समधुशर्करः ॥२०॥

अतसीकुसुमसमङ्गापाठारोहत्वगम्भसा पीता।
प्रशमयति रक्तपित्तं यदि भुङ्क्ते मुद्गयूषेण॥ २१॥
कषाययोगैर्विविधैर्दीप्ताग्नौ निर्जिते कफे।
रक्तपित्तं न चेच्छाम्येत् तत्र वातोल्वणे पयः॥ २२॥
छागं पयोऽथवा गव्यं शृतं पञ्चगुणे जले।
अभ्यसेत् ससिताक्षौद्रं पञ्चमूलीशृतं पयः॥ २३॥
द्राक्षया पर्णिनीभिर्वा कलया मधुकेन वा।
श्वदंष्ट्रया शतावर्य्या रक्तजित् साधितं पयः॥ २४॥
पक्वोडुम्बरकाश्मर्य्यपथ्याखर्जूरगोस्तनाः।
मधुना घ्नन्ति सलीढ़ा रक्तपित्तं पृथक् पृथक्॥ २५॥
भद्रश्राखोटकत्वग्रसविन्दुद्वितययुक्तो द्विगुणितघृतः।
भूनिम्बकल्क जद्वर्ध्वपित्तास्रकासश्वासघ्नः॥ २६॥
खदिरस्य प्रियङ्गूनां कोविदारस्य शाल्मलेः।
पुष्पचूर्णन्तु मधुना लीढ्वा चारोग्यमश्नुते॥ २७॥
अभया मधुसंयुक्ता पाचनी दीपनी मता।
श्लेष्माणं रक्तपित्तञ्च हन्ति शूलातिसारनुत्॥ २८॥
वासकस्वरसे पथ्या सप्तधा परिभाविता।
कृष्णा वा मधुना लीढ़ा रक्तपित्तं द्रुतं जयेत्॥ २९॥
भावनायां द्रवो देयः सम्यगार्द्रत्वकारकः।
एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्धपलं तथा॥ ३०॥
सितामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः।
संचूर्ण्य मधुना युक्ता गुड़िकाः कारयेद्भिषक्॥ ३१॥
अक्षमात्रां ततश्चैकां भक्षयेन्ना दिने दिने।
कासं श्वासं ज्वरं हिक्कां छर्द्दिं मूर्च्छां मदं भ्रमम्॥ ३२॥

रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ।
शोषप्लीहाढ्यवातांश्च स्वरभेदं चतक्षयम् ।
गुड़िका तर्पणी वृष्या रक्तपित्तञ्च नाशयेत् ॥ ३३ ॥

एलादिगुड़िका ।

लोहगन्धिनि निःश्वासे उद्गारे रक्तगन्धिनि ।
पृथ्वीकां शाणमात्रान्तु खादेद् द्विगुणशर्कराम् ॥ ३४ ॥
नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकम् ।
सेतुरिव तोयवेगं रुणद्धि मूर्ध्नि प्रलेपनै ॥ ३५ ॥
घ्राणप्रवृत्ते जलमेव देयं सशर्करं नासिकया पयो वा ।
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करं चेक्षुरसं हितं वा ॥३६॥
नस्यं दाड़िमपुष्पोत्थो रसो दूर्वाभवोऽथवा ।
आम्रास्थिजः पलाण्डोर्वा नासिकास्रुतरक्तजित् ॥३७॥
मेढ्रगेऽतिप्रवृत्ते तु वस्तिरुत्तरसंज्ञितः ।
शृतं क्षीरं पिबेद्वापि पञ्चमूल्या तृणाह्वया ॥ ३८ ॥
दूर्वा सोत्पलकिञ्जल्का मञ्जिष्ठा सैलवालुका ।
सिता शीतमुशीरञ्च मुस्तं चन्दनपद्मकौ ॥ ३९ ॥
विपचेत् कार्षिकैरेतैः सर्पिराजं सुखाग्निना ।
तण्डुलाम्बु त्वजाक्षीरं दत्त्वा चैव चतुर्गुणम् ॥४०॥
तत्पानं वमतो रक्तं नावनं नासिकागते ।
कर्णाभ्यां यस्य गच्छेत् तु तस्य कर्णौ प्रपूरयेत् ॥४१॥
चक्षुःस्राविणि रक्ते तु पूरयेत् तेन चक्षुषोः ।
मेढ्रपायुप्रवृत्ते तु वस्तिकर्म सुयोजयेत् ।
रोमकूपप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत् ॥ ४२ ॥

दूर्वाद्यं घृतम् ।

शतावरीदाडिमतिन्तिड़ीकं
काकोलीमेदे मधुकं विदारीम्।
पिष्ट्वा च मूलं फलपूरकस्य
घृतं पचेत् क्षीरचतुर्गुणं ज्ञः ॥४३॥
कासज्वरानाहविबन्धशूलं
तद्रक्तपित्तञ्च घृतं निहन्यात् ॥४४॥

शतावरीघृतम्।

शतावर्य्यास्तु मूलानां रसप्रस्थद्वयं मतम्।
तत्समञ्च भवेत् क्षीरं घृतप्रस्थं विपाचयेत् ॥४५॥
जीवकर्षभकौ मेदा महामेदा तथैव च।
काकोली क्षीरकाकोली मृद्वीका मधुकन्तथा ॥४६॥
मुद्गपर्णी माषपर्णी विदारी रक्तचन्दनम्।
शर्करामधुसंयुक्तं सिद्धं विस्रावयेद्भिषक् ॥४७॥
रक्तपित्तविकारेषु वातरक्तगदेषु च।
क्षीणशुक्रेषु दातव्यं वाजीकरणमुत्तमम् ॥४८॥
अंसदाहं शिरोदाहं ज्वरं पित्तसमुद्भवम्।
योनिशूलञ्च दाहञ्च मूत्रकृच्छ्रञ्च पैत्तिकम् ॥४९॥
एतान् रोगान् निहन्त्याशु छिन्नाभ्राणीव मारुतः।
शतावरीसर्पिरिदं बलवर्णाग्निवर्द्धनम् ॥५०॥
स्नेहपादः स्मृतः कल्कः कल्कवन्मधुशर्करे।
इति वाक्यबलात् स्नेहे प्रक्षेप्यं पादिकं भवेत् ॥५१॥

शतावरीघृतम्।

वासां सशाखां सपलाशमूलां
कृत्वा कषायं कुसुमानि चास्याः।

प्रदाय कल्कं विपचेद् घृतं तत्
सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥५२॥

वासाघृतम् ।

शणस्य कोविदारस्य वृषस्य ककुभस्य च ।
कल्काढ्यत्वात् पुष्पकल्कं प्रस्थे पलचतुष्टयम् ॥५३॥
अश्वगन्धा पलशतं तदर्द्धं गोक्षुरस्य च ।
शतावरी विदारी च शालपर्णी बला तथा ॥५४॥
अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा ।
काश्मरीपलमेतत् तु माषबीजं तथैव च ॥५५॥
पृथग्दशपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ।
चतुर्भागावशेषन्तु कषायमवतारयेत् ॥५६॥
मृद्वीका पद्मकं कुष्ठं पिप्पली रक्तचन्दनम् ।
बालकं नागपुष्पञ्च आत्मगुप्तापलं तथा ॥५७॥
नीलोत्पलं शारिवे द्वे जीवनीयं विशेषतः ।
पृथक्कर्षसमञ्चैव शर्करायाः पलद्वयम् ॥५८॥
रसस्य पौण्ड्रकेक्षूणामाढ़कं तत्र दापयेत् ।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत् ॥५९॥
रक्तपित्तं क्षतक्षीणं कामलां वातशोणितम् ।
हलीमकं तथा शोथं वर्णभेदं स्वरक्षयम् ॥६०॥
अरोचकं मूत्रकृच्छ्रं पार्श्वशूलञ्च नाशयेत् ।
एतद्राज्ञां प्रयोक्तव्यं बह्वन्तःपुरचारिणाम् ॥६१॥
स्त्रीणाञ्चैवानपत्यानां दुर्बलानाञ्च देहिनाम् ।
क्लीवानामल्पशुक्राणां जीर्णानामल्परेतसाम् ॥६२॥
श्रेष्ठं बलकरं हृद्यं वृष्यं पेयं रसायनम् ।

ओजस्तेजस्करश्चैव आयुःप्राणविवर्द्धनम्।
संवर्द्धयति शुक्रञ्च पुरुषं दुर्बलेन्द्रियम्॥६३॥
सर्वरोगविनिर्मुक्तस्तोयसिक्तो यथा द्रुमः।
कामदेव इति ख्यातः सर्वरोगेषु शस्यते॥६४॥

कामदेवघृतम्।

शतावरीपयोद्राक्षाविदारीक्षामले रसैः।
सर्पिषा सह संयुक्तैः सप्तप्रस्थं पचेद् घृतम्॥६५॥
शर्करापादसंयुक्तं रक्तपित्तहरं पिबेत्।
उरःक्षते पित्तशूले योनिवातेऽप्यसृग्दरे।
बल्यमूर्जस्करं वृष्यं क्षुधाहृद्रोगनाशनम्॥६६॥

सप्तप्रस्थं घृतम्।

कुष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम्।
पचेत् तप्ते घृतप्रस्थे शनैस्ताम्रमये दृढ़े॥६७॥
यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत्।
पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य च॥६८॥
त्वगेलापत्रमरिचधान्यकानां पलार्द्धकम्।
न्यसेच्चूर्णीकृतं तत्र दर्व्या संघट्टयेन्मुहुः॥६९॥
तत् पक्वं स्थापयेद्भाण्डे दत्त्वा क्षौद्रः घृतार्द्धकम्।
तद्यथाग्निबलं खादेद्रक्तपित्ती क्षतक्षयी।
कासश्वासतमश्छर्दितृष्णाज्वरनिपीड़ितः॥७०॥
वृष्यं पुनर्नवकरं बलवर्णप्रसाधनम्।
उरःसन्धानकरणं बृंहणं स्वरबोधनम्॥७१॥
अश्विभ्यां निर्मितं सिद्धं कुष्माण्डकरसायनम्।
खण्डामलकमानानुसारात् कुष्माण्डकद्रवात्॥७२॥

पात्रं पाकाय दातव्यं यावान् वातरसो भवेत्।
अत्रापि मुद्रया पाको निस्त्वचं निष्कुलीकृतम् ॥७३॥

खण्डकुष्माण्डकः।

पञ्चाशच्च पलं स्विन्नं कुष्माण्डात् प्रस्थमाज्यतः।
ग्राह्यं पलशतं खण्डं वासाक्वाथाढ़के पचेत् ॥७४॥
मुस्ता धात्री शुभा भार्गी त्रिसुगन्धैश्च कार्षिकैः।
ऐलेयविश्वधन्याकमरिचैश्च पलांशिकैः ॥७५॥
पिप्पलीकुड़वञ्चैव मधुमानीं प्रदापयेत्।
कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम्।
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति ॥७६॥

वासाखण्डकुष्माण्डकः।

तुलामादाय वासायाः पचेदष्टगुणे जले।
तेन पादावशेषेण पाचयेदाढ़कं भिषक् ॥७७॥
चूर्णानामभयानाञ्च खण्डाच्छुद्धं तथा शतम्।
द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ॥७८॥
कुड़वं पलमात्रन्तु चातुर्जातं सुचूर्णितम्।
क्षिप्त्वा विलोड़ितं खादेद्रक्तपित्ती क्षतक्षयी।
कासश्वासपरीतश्च यक्ष्मणा च प्रपीड़ितः ॥७९॥

वासाखण्डः।

शतावरीच्छिन्नरुहावृषमुण्डतिकाबलाः।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥८०॥
भार्गीपुष्करमूलञ्च पृथक् पञ्च पलानि च।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥८१॥
दिव्यौषधहतस्यापि माक्षिकेन हतस्य वा।

पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम् ॥८२॥
खण्डतुल्यं घृतं देयं पलषोड़शिकं बुधैः।
पचेत् ताम्रमये पात्रे गुड़पाको यथामतम् ॥८३॥
प्रस्थार्द्धं मधुनो देयं शुभाश्मजतुकं त्वचम्।
शृङ्गी विड़ङ्गं कृष्णा च शुण्ठ्यजाजीपलं पलम् ॥८४॥
त्रिफला धान्यकं पत्रं द्व्यक्षं मरिचकेशरम्।
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥८५॥
यथाकालं प्रयुञ्जीत विड़ालपदकं ततः।
गव्यक्षीरानुपानञ्च सेव्यं मांसरसं पयः ॥८६॥
गुरुवृष्यानुपानानि स्निग्धं मांसादि बृंहणम्।
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः ॥८७॥
वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्लमम्।
श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरन्तथा ॥८८॥
आनाहं रक्तसंस्रावं चाम्लपित्तं निहन्ति च।
चाक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम् ॥८९॥
आरोग्यं पुत्रदं श्रेष्ठं कामाग्निबलवर्द्धनम्।
श्रीकरं लाघवकरं खण्डकाद्यं प्रकीर्त्तितम् ॥९०॥
छागं पारावतं मांसं तित्तिरिः क्रकराः शशाः।
कुरङ्गाः कृष्णसाराश्च तेषां मांसानि योजयेत् ॥९१॥
नारिकेलपयःपानं सुनिषण्णकवास्तुकम्।
शुष्कमूलकजीराख्यं पटोलं बृहतीफलम् ॥९२॥
फलं वार्त्ताकुपक्वाम्रं खर्जूरं स्वादु दाड़िमम्।
ककारपूर्वकं यच्च मांसञ्चानूपसम्भवम् ॥९३॥
वर्ज्जनीयं विशेषेण खण्डकाद्यं प्रकुर्वता।

लोहान्तरवदत्रापि पुटमादिक्रियेष्यते ॥८४॥

खण्डकाद्यो लौहः ।

यच्च पित्तज्वरे प्रोक्तं वहिरन्तश्च भेषजम् ।
रक्तपित्ते हितं तच्च चीणचतहितच्च यत् ॥८५॥

इति रक्तपित्तचिकित्सा ।

## अथ राजयक्ष्माधिकारः ।

शालिषष्टिकगोधूमयवमुद्गादयः शुभाः ।
मद्यानि जाङ्गलाः पक्षिमृगाः शस्ता विशुष्यताम् ॥१॥
शुष्यतां चीणमांसानां कल्पितानि विधानवित् ।
दद्यात् क्रव्यादमांसानि वृंहणानि विशेषतः ॥२॥
दोषाधिकानां वमनं शस्यते सविरेचनम् ।
स्नेहस्वेदोपपन्नानां स्नेहनं यन्न कर्षणम् ॥३॥
शुद्धकोष्ठस्य युञ्जीत विधिं वृंहणदीपनम् ।
शुक्रायत्तं बलं पुंसां मलायत्तं हि जीवितम् ॥४॥
तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी ।
सपिप्पलीकं सयवं सकुलत्थं सनागरम् ॥५॥
दाडिमामलकोपेतं सिद्धमाजरसं पिबेत् ।
तेन षड्विनिवर्त्तन्ते विकाराः पीनसादयः ॥६॥
रसे द्रव्याम्बुपेयावल्लूदशास्त्रवशादिह ।
पलानि द्वादशप्रस्थे घनेऽथ तनुके तु षट् ॥७॥
मांसस्य वटकं कुर्य्यात् पलमच्छतरे रसे ।
धन्याकपिप्पलीविश्वदशमूलीजलं पिबेत् ॥८॥
पार्श्वशूलज्वरश्वासपीनसादिनिवृत्तये ।

अश्वगन्धामृताभीरुदशमूलीबलावृषाः।
पुष्करातिविषे घ्नन्ति क्षयं क्षीररसाशिनः ॥९॥
दशमूलबलारास्नापुष्करसुरदारुनागरैः क्वथितम्।
पेयं पार्श्वांसशिरोरुक्क्षयकासादिशान्तये सलिलम् ॥१०॥
ककुभत्वक्नागबलावानरीवीजानि चूर्णितं पयसि।
पक्वं घृतमधुयुक्तं ससितं यक्ष्मादिकासहरम् ॥११॥
पारावतकपिच्छागकुरङ्गाणां पृथक् पृथक्।
मांसचूर्णमजाक्षीरपीतं यक्ष्महरं परम् ॥१२॥
घृतकुसुमसारलीढं क्षयं क्षयं नयति गजबलामूलम्।
दुग्धेन केवलेन तु वायसजङ्घानि पीत्वैव ॥१३॥
कृष्णाद्राक्षासितालेहः क्षयहा क्षौद्रतैलवान्।
मधुसर्पिर्युतो वाश्वगन्धाकृष्णासितोद्भवः ॥१४॥
शर्करामधुसंयुक्तं नवनीतं लिहन् क्षयी।
क्षीराशी लभते पुष्टिमतुल्ये चाज्यमाक्षिके ॥१५॥
सितोपलातुगाक्षीरीपिप्पलीबहुलात्वचः।
अन्त्यादूर्द्ध्वं द्विगुणितं लेहयेत् क्षौद्रसर्पिषा ॥१६॥
चूर्णितं प्राशयेदेतत् श्वासकासक्षयापहम्।
सुप्तजिह्वारोचकिनमल्पाग्निं पार्श्वशूलिनम्।
हस्तपादांसदाहेषु ज्वरे रक्ते तथोर्द्ध्वगे ॥१७॥

सितोपलादिलेहः।

सलवङ्गकक्कोलमुशीरचन्दनं
नतं सनीलोत्पलजीरकं समम्।
त्रुटिः सकृष्णागुरुभृङ्गकेशरं
कणासविश्वानलदं सहाम्बुदम् ॥१८॥

अहीन्द्रजातीफलवंशलोचना-
सिताष्टभागं समसूक्ष्मचूर्णितम् ।
सुरोचनं तर्पणमग्निदीपनं
बलप्रदं वृष्यतमं त्रिदोषनुत् ॥१९॥
उरोविबन्धं तमकं गलग्रहं
सकासहिक्कारुचियक्ष्मपीनसम् ।
ग्रहण्यतीसारभगन्दरार्बुदं
प्रमेहगुल्मांश्च निहन्ति सज्वरान् ॥२०॥

लवङ्गाद्यं चूर्णम् ।

तालीशपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्ध्या त्वगेले चार्द्धभागिके ॥२१॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
श्वासकासारुचिहरं तच्चूर्णं दीपनं परम् ॥ २२ ॥
हृत्पाण्डुग्रहणीरोगप्लीहशोषज्वरापहम् ।
छर्द्यतीसारशूलघ्नं मूढवातानुलोमनम् ॥ २३ ॥
कल्पयेद्गुड़िकां चैतच्चूर्णं पक्वा सितोपलाम् ।
गुड़िका ह्यग्निसंयोगाच्चूर्णाल्लघुतराः स्मृताः ।
पैत्तिके ग्राहयन्त्येके शुभया वंशलोचनाम् ॥ २४ ॥

तालीशाद्यो मोदकः ।

शृङ्ग्यर्जुनाश्वगन्धानागबलापुष्कराभयाच्छिन्नरुहाः ।
तालीशादिसमेता लेह्या मधुसर्पिर्भ्यां यक्ष्महराः ॥२५॥
मधुताप्यविड़ङ्गाश्मजतुलोहघृताभयाः ।
घ्नन्ति यक्ष्माणमत्युग्रं सेव्यमाना हिताशिना ॥२६॥
व्योषं शतावरी त्रीणि फलानि द्वे बले तथा

सर्वामयहरो योगः सोऽयं लोहरजोऽन्वितः ॥२७॥
एष वर्चःघतं हन्ति कण्ठजांश्च गदांस्तथा।
राजयक्ष्माणमत्युग्रं बाहुस्तम्भमथार्दितम् ॥ २८ ॥

विन्ध्यवासियोगः।

कर्षं शुद्धरसेन्द्रस्य स्वरसेन अयार्द्रयोः।
शिलायां खल्वयेत् तावद्यावत्पिण्डं घनं ततः ॥२९॥
जलकर्णाकाकमाचीरसाभ्यां भावयेत् पुनः।
सौगन्धिकपलं भृङ्गरसेन विभावितम् ॥ ३० ॥
चूर्णितं रससंयुक्तमजाचीरपलद्वये।
खल्वितं घनपिण्डन्तु गुडीं खिन्नकलायवत् ॥ ३१ ॥
कृत्वादौ शिवमभ्यर्च्य द्विजातीन् परितोष्य च।
जीर्णान्ते भक्षयेदेकां चीरमांसरसाशनः ॥ ३२ ॥
सर्वरूपं चयं कासं रक्तपित्तमरोचकम्।
अपि वैद्यशतैस्त्यक्तमम्लपित्तं नियच्छति ॥ ३३ ॥

रसेन्द्रगुडिका।

एलाजमोदामलकाभयाच-
गायत्रीनिम्बाशनशालसारान्।
विड़ङ्गभल्लातकचित्रकांश्च
कटुत्रिकाम्भोदसुराह्निकाश्च ॥ ३४ ॥
पक्त्वा जले तेन पचेत् तु सर्पि-
स्तस्मिन् सुसिद्धे त्ववतारिते च।
त्रिंशत्पलान्यत्र सितोपलाया
दद्यात् तुगाचीरिपलानि षट् च ॥ ३५ ॥
प्रस्थे घृतस्य द्विगुणञ्च दद्यात्

क्षौद्रं ततो मन्थहतं निदध्यात् ।
पलं पलं प्रातरतो लिहेच्च
पश्चात् पिबेत् क्षीरमतन्द्रितश्च ॥ ३६ ॥
एतद्धि मेध्यं परमं पवित्रं
चक्षुष्यमायुष्यतमं तथैव ।
यक्ष्माणमाशु व्यपहन्ति शूलं
पाण्ड्वामयञ्चापि भगन्दरञ्च ॥ ३७ ॥
न चात्र किञ्चित् परिवर्जनीयं
रसायनञ्चैतदुपास्यमानम् ॥ ३८ ॥

एलादिमन्थः ।

बला विदारी ह्रस्वा च च पञ्चमूली पुनर्नवा ।
पञ्चानां क्षीरवृक्षाणां शुङ्गा मुष्ट्यंशिका: पृथक् ॥३८॥
एषां कषाये द्विक्षीरे विदार्य्यां अरसांशिके ।
जीवनीयैः पचेत् कल्कैरक्षमात्रैर्घृताढ़कम् ॥ ४० ॥
सितापलानि पूते च शीते द्वात्रिंशदावपेत् ।
गोधूमपिप्पलीवांशीचूर्णं शृङ्गाटकस्य च ॥ ४१ ॥
समाक्षिकं कौड़विकं तत् सर्वं खजमूर्च्छितम् ।
स्त्यानं सर्पिर्गुड़ान् कृत्वा भूर्जपत्रेण वेष्टयेत् ॥४२॥
तान् जग्ध्वा पलिकान् क्षीरं मद्यञ्चानुपिबेत् कफे ।
शोषे कासे क्षतक्षीणे श्रमस्त्रीभारकर्षिते ॥ ४३ ॥
रक्तनिष्ठीवने तापे पीनसे शोरसि स्थिते ।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः ॥ ४४ ॥
क्वाथ्ये त्वयीदश्पले द्रव्याणत्वभयाज्जलम् ।
अष्टगुणं क्वाथसमौ विदार्य्याजरसौ पृथक् ॥४५॥

केचिद्यथोक्तक्वाथ्ये तु क्वाथं घृतसमं जगुः ॥ ४६ ॥

सर्पिर्गुडः।

विल्वाग्निमन्थश्योणाककाश्मर्य्यः पाटली बला।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा वृहतीद्वयम् ॥ ४७ ॥
शृङ्गीतामलकीद्राक्षाजीवन्तीपुष्कराग्ुरु।
अभया साम्टता ऋद्धिर्जीवकर्षभकौ शटी ॥ ४८ ॥
मुस्तं पुनर्नवा मेदा सूक्ष्मैलोत्पलचन्दने।
विदारी वृषमूलानि काकोली काकनासिका ॥४९॥
एषां पलोन्मितान् भागान् शतान्यामलकस्य च।
पञ्च दद्यात् तदैकध्यं जलद्रोणे विपाचयेत् ॥ ५० ॥
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम्।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः ॥ ५१ ॥
पलद्वादशके भृष्टा दत्त्वा चार्द्धतुलां भिषक्।
मत्स्यण्डिकायाः पूताया लेहवत् साधु साधयेत् ॥ ५२ ॥
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत्।
चतुष्पलं तुगाक्षीर्य्याः पिप्पल्या द्विपलन्तथा ॥ ५३ ॥
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात्।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः ॥५४॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते।
क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धनम् ॥५५॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्।
पिपासां मूत्रशुक्रस्थान् दोषांश्चैवापकर्षति ॥५६॥
अस्य मात्रां प्रयुञ्जीत योऽपरुन्ध्याच्च भोजनम्।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा ॥५७॥

मेधां स्मृतिं कान्तिमनामयत्वं
वपुःप्रकर्षं बलमिन्द्रियाणाम् ।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं
वर्णप्रसादं पवनानुलोम्यम् ॥ ५८॥
रसायनस्यास्य नरः प्रयोगा-
ल्लभेत जीर्णोऽपि कुटीप्रवेशात् ।
जराकृतं पूर्वमपास्य रूपं
बिभर्त्ति रूपं नवयौवनानाम् ॥५९॥
सितामत्स्यण्डिकालाभे धात्रयाश्च मृदुभर्जनम् ।
चतुर्भागजले प्रायो द्रव्यं गतरसं भवेत् ॥६०॥

च्यवनप्राशः ।

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च ।
शटीपुष्करमूलञ्च व्याघ्रीं गोक्षुरकं बलाम् ॥६१॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।
पिप्पलीञ्च समं पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥६२॥
एतद् व्याधिसमूहस्य रोगे शस्त्रसमुत्थितम् ।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥६३॥

जीवन्त्याद्यं घृतम् ।

पिप्पलीगुड़संसिद्धं छागक्षीरयुतं घृतम् ।
एतदग्निविवृद्ध्यर्थं सर्पिश्च क्षयकासिनाम् ॥६४॥

पिप्पलीघृतम् ।

यष्टीबलागुडूच्यल्पपञ्चमूलीतुलां पचेत् ।
शूर्पेऽपामष्टभागस्थे तत्र पात्रं पचेद् घृतम् ॥६५॥
धात्रीविदारीक्षुरसैस्त्रिपात्रे पयसोऽर्मणे ।

श्रुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतम्।
ससैन्यं राजयक्ष्माणमुन्मूलयति शीलितम् ॥६६॥

पाराशरं घृतम्।

छागमांसतुलां गृह्य साधयेन्नवणेऽम्भसि।
पादशेषेण तेनैव घृतप्रस्थं विपाचयेत् ॥६७॥
ऋद्धिवृद्धी च मेदे द्वे जीवकर्षभकौ तथा।
काकोलीक्षीरकाकोलीकल्कैः पृथक् पलोन्मितैः ॥६८॥
सम्यक् सिद्धे त्ववतार्य्य शीते तस्मिन् प्रदापयेत्।
शर्करायाः पलान्यष्टौ मधुनः कुड़वं क्षिपेत् ॥६९॥
पलं पलं पिबेत् प्रातर्यक्ष्माणं हन्ति दुर्जयम्।
क्षतक्षयञ्च कासञ्च पार्श्वशूलमरोचकम्।
स्वरक्षयमुरोरोगं श्वासं हन्यात् सुदारुणम् ॥७०॥

छागलाद्यं घृतम्।

तोयद्रोणद्वितये मांसं छागलस्य पलशतं पक्त्वा।
जलमष्टांशं सुक्ततं तस्मिन् विपचेद् घृतं प्रस्थम् ॥७१॥
कल्केन जीवनीयानां कुड़वेन तु मांससर्पिरिदम्।
पित्तानिलं निहन्यात् तज्ज्ञानपि रसकर्योजितं पीतम् ॥७२॥
श्वासकासावुग्रौ यक्ष्माणं पार्श्वहृद्रुजां घोराम्।
अध्वव्यपायशोषं शमयति चैवापरं किञ्चित् ॥७३॥

छागलाद्यं घृतम्।

छागशकृद्रसमूत्रक्षीरैर्दध्ना च साधितं सर्पिः।
सक्षारं यक्ष्महरं कासश्वासोपशान्तये परमम् ॥७४॥

अजापञ्चकं घृतम्।

द्विपञ्चमूलस्य पचेत् कषाये प्रस्थद्वये मांसरसस्य चैके।

कल्कं बलायाः सुनियोज्य गर्भं सिद्धं पयःप्रस्थयुतं घृतञ्च ७५
सर्वाभिघातोत्थितयक्ष्मशूलक्षतक्षयोत्कासहरं प्रदिष्टम् ॥७६॥

बलागर्भं घृतम् ।

पादशेषे जलद्रोणे पचेन्नागबलातुलाम् ।
तेन क्वाथेन तुल्यांशं घृतं क्षीरञ्च साधयेत् ॥७७॥
पलार्द्धिकैश्चातिबलाबलायष्टिपुनर्नवा ।
प्रपौण्डरीककाश्मर्य्यपियालकपिकच्छुभिः ॥७८॥
अश्वगन्धासिताभीरुमेदायुग्मत्रिकण्टकैः ।
मृणालविषशालूकशृङ्गाटककशेरुकैः ॥७९॥
एतन्नागबलासर्पीरक्तपित्तक्षतक्षयम् ।
हन्ति दाहं भ्रमं तृष्णां बलपुष्टिकरं परम् ॥८०॥
बल्यमोजस्यमायुष्यं वलीपलितनाशनम् ।
उपयुञ्जीत षण्मासान् वृद्धोऽपि तरुणायते ॥८१॥

नागबलाघृतम् ।

समूलफलपत्राया निर्गुण्ड्याः स्वरसैर्घृतम् ।
सिद्धं पीत्वा क्षयक्षीणो निर्व्याधिर्भाति देववत् ॥८२॥

निर्गुण्डीघृतम् ।

बलाश्वदंष्ट्राबृहतीकलसीधावनीस्थिराम् ।
निम्बं पर्प्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥८३॥
कृत्वा कषायं पेष्यार्थं दद्यात् तामलकीं शठीम् ।
द्राक्षां पुष्करमूलञ्च मेदामामलकानि च ॥८४॥
घृतं पयश्च तत्सिद्धं सर्पिर्ज्वरहरं परम् ।
क्षयकासप्रशमनं शिरःपार्श्वरुजापहम् ॥८५॥
चरकोदितवासाद्यघृतानन्तरमुक्तितः ।

वदन्तीह घृतात् क्वाथं पयश्च द्विगुणं पृथक् ॥८६॥

बलाद्यं घृतम्।

चन्दनाम्बुनखं वाप्यं यष्टीशैलेयपद्मकम्।
मञ्जिष्ठासरलं दारुशट्येलापूतिकेशरम् ॥८७॥
पत्रं तैलं मुरामांसी कक्कोलं वनिताम्बुदम्।
हरिद्रे शारिवे तिक्ता लवङ्गागुरुकुङ्कुमम् ॥८८॥
त्वग्रेणुनलिकाचैभिस्तैलं मस्तुचतुर्गुणम्।
लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्णकृत् ॥८९॥
अपस्मारज्वरोन्मादकृत्यालक्ष्मीविनाशनम्।
आयुःपुष्टिकरञ्चैव वशीकरणमुत्तमम् ॥९०॥

चन्दनाद्यं तैलम्।

छागं मांसं पयश्छागं छागं सर्पिः सशर्करम्।
छागोपसेवा शयनं छागमध्ये तु यक्ष्मणुत् ॥९१॥
उरोमत्वा क्षतं लाक्षां पयसा मधुसंयुताम्।
सद्य एव पिबेज्जीर्णे पयसाद्यात् सशर्करम् ॥९२॥
इक्षुवालिकाविसग्रन्थिपद्मकेशरचन्दनैः।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती ॥९३॥
बलाश्वगन्धाश्रीपर्णीबहुपुत्रीपुनर्नवाः।
पयसा नित्यमभ्यस्ताः क्षपयन्ति क्षतक्षयम् ॥९४॥
घृतं बलानागबलार्जुनाम्बुसिद्धं सयष्टीमधुकल्कपादम्।
हृद्रोगशूलक्षतरक्तपित्तकासाऽनिलासृक् शमयत्युदीर्णम् ॥९५

बलाद्यं घृतम्।

इति राजयक्ष्मक्षतक्षयचिकित्सा।

---

## अथ कासरोगाधिकारः।

वास्तूको वायसीशाकं मूलकं सुनिषण्णकम्।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौड़िकाः ॥१॥
दध्यारणालाम्लफलं प्रसन्नापानमेव च।
शस्यते वातकासेषु स्वाद्वम्ललवणानि च ॥२॥
ग्राम्यानूपौदकैः शालियवगोधूमषष्टिकान्।
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान् ॥३॥
पञ्चमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः।
रसान्नमश्नतो नित्यं वातकासमुदस्यति ॥४॥
शृङ्गीशटीकणाभार्गीगुड़वारिदयासकैः।
सतैलैर्वातकासघ्नो लेहोऽयमपराजितः ॥ ५ ॥
चूर्णिताविश्वदुस्पर्शशृङ्गीद्राक्षाशटीसिताः।
लिह्वा तैलेन वातोत्थं कासं जयति दारुणम् ॥६॥
भार्गीद्राक्षाशटीशृङ्गीपिप्पलीविश्वभेषजैः।
गुड़तैलयुतो लेहो हितो मारुतकासिनाम् ॥७॥
पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम्।
दद्याद्घनकफे तिक्तैर्विरेकार्थं युतां भिषक् ॥८॥
मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवाः।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ॥९॥
बलाद्विबृहतीवासाद्राक्षाभिः क्वथितं जलम्।
पित्तकासापहं पेयं शर्करामधुयोजितम् ॥१०॥
शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा।
कषायेण शृतं क्षीरं पिबेत् समधुशर्करम् ॥११॥

काकोलीबृहतीमेदायुग्मैः सवृषनागरैः।
पित्तकासे रसक्षीरयूषांश्चाप्युपकल्पयेत् ॥१२॥
द्राक्षामलकखर्जूरं पिप्पलीमरिचान्वितम्।
पित्तकासापहं ह्येतत् लिह्यान्माक्षिकसर्पिषा ॥१३॥
खर्जूरपिप्पलीद्राक्षासितालाजाः समांशिकाः।
मधुसर्पिर्युतो लेहः पित्तकासहरः परः ॥१४॥
शटीह्रीवेरबृहतीशर्कराविश्वभेषजम्।
पिष्ट्वा रसं पिबेत् पूतं सघृतं पित्तकासनुत् ॥१५॥
मधुना पद्मबीजानां चूर्णं पैत्तिककासनुत्।
बलिनं वमनेनादौ शोधितं कफकासिनम्।
यवान्नैः कटुरुक्षोष्णैः कफघ्नैश्चाप्युपाचरेत् ॥१६॥
पिप्पलीक्षारकैर्यूषैः कौलत्थैर्मूलकस्य च।
लघून्यन्नानि भुञ्जीत रसैर्वा कटुकान्वितैः ॥१७॥
पौष्करं कट्फलं भार्गीविश्वपिप्पलीसाधितम्।
पिबेत् क्वाथं कफोद्रेके कासे श्वासे च हृद्ग्रहे ॥१८॥
स्वरसं शृङ्गवेरस्य माक्षिकेण समन्वितम्।
पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥१९॥

मुद्गामलाभ्यां यवदाडिमाभ्यां
कर्कन्धुना मूलकशुण्ठकेन।
शुण्ठीकणाभ्याञ्च कुलत्थकेन
यूषो नवाङ्गः कफरोगहन्ता ॥२०॥

पार्श्वशूले ज्वरे श्वासे कासे श्लेष्मसमुद्भवे।
पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिबेत् ॥२१॥
कट्फलं कत्तृणं भार्गी मुस्तं धान्यं वचाभया।

शृङ्गी पर्प्पटकं शुण्ठी सुराह्वा च जले शृतम् ॥२२॥
मधु हिङ्गुयुतं पेयं कासे वातकफात्मके ।
कण्ठरोगे क्षये शूले श्वासहिक्काज्वरेषु च ॥२३॥

वाट्फलादिः ।

कण्टकारीकृतः क्वाथः सकृष्णः सर्वकासहा ।
विभीतकं घृताभ्यक्तं गोशकृत्परिवेष्टितम् ॥२४॥
स्विन्नमग्नौ हरेत् कासं ध्रुवमास्यविधारितम् ।
वासकस्वरसः पेयो मधुयुक्तो हिताशिना ॥२५॥
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः ।
पिप्पलीमधुकं द्राक्षा लाक्षा शृङ्गी शतावरी ॥२६॥
द्विगुणा च तुगाक्षीरी सिता सर्वैश्चतुर्गुणा ।
तं लिह्यान्मधुसर्पिभ्यां क्षतकासनिवृत्तये ॥२७॥
पिप्पली पद्मकं लाक्षा संपक्वं बृहतीफलम् ।
घृतक्षौद्रयुतो लेहः कासश्वासनिवर्हणः ॥२८॥
हरितकीनागरमुस्तचूर्णं गुड़ेन तुल्यं गुड़िका विधेया ।
निवारयत्यास्यविधारितेयं श्वासं प्रवृद्धं प्रबलञ्च कासम् ॥२९॥
कर्षः कर्षार्द्धमथोपलं पलद्वयमथार्द्धकर्षश्च ।
समरिचस्य पिप्पलीनां दाड़िमगुड़यावशूकानाम् ॥३०॥
सर्वौषधैरसाध्या ये कासाः सर्ववैद्यविवर्जिताः ।
अपि पूयं छर्दयतां तेषामिदमौषधं पथ्यम् ॥३१॥

मरिचाद्यं चूर्णम् ।

लवङ्गजातीफलपिप्पलीनां
भागान् प्रकल्प्याक्षयुतानमीषाम् ।
पलार्द्धमेकं मरिचस्य दद्यात्

पलानि चत्वारि महौषधस्य ॥३२॥
सितासमं चूर्णमिदं प्रसह्य
रोगानिमानाशु बलान्निहन्यात् ।
कासज्वरारोचकमेहगुल्म-
श्वासाग्निमान्द्यग्रहणीप्रदोषान् ॥३३॥

समशर्करं चूर्णम् ।

हरीतकी कणा शुण्ठी मरिचं गुड़संयुतम् ।
कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः ॥३४॥
तालीशवह्निदीप्यकचविकाम्लवेतसव्योषैः ।
तुल्यैस्त्रिसुगन्धियुतैर्गुड़ेन गुड़िका प्रकर्त्तव्या ॥३५॥
कासश्वासारोचकपीनसहृत्कण्ठवाङ्निरोधेषु ।
ग्रहणीगुदोद्भवेषु गुड़िका व्योषाम्लिका नाम ॥३६॥
त्रिसुगन्धमत्र संस्कारत्वाच्चतुर्माषिकं ग्राह्यम् ।
मनःशिलालमधुकमांसीमुस्तेङ्गुदैः पिबेत् ॥३७॥
धूमं तस्यानु च सगुड़ञ्च पयः पिबेत् ।
एष कासान् पृथक्द्वन्द्वसर्वदोषसमुद्भवान् ॥३८॥
शतैरपि प्रयोगाणां साधयेदप्रसाधितान् ।
मनःशिलालिप्तदलं वदर्य्या घर्मशोषितम् ॥३९॥
सक्षीरं धूमपानात् तु महाकासनिवर्हणम् ।
अर्कच्छशीले तुल्ये ततोऽर्द्धेन कटुत्रिकम् ॥४०॥
चूर्णितं वह्निनिक्षिप्तं पिबेद्धूमन्तु योगवित् ।
भक्षयेदथ ताम्बूलं पिबेद्दुग्धमथाम्बु वा ।
कासाः पञ्चविधा यान्ति शान्तिमाशु न संशयः ॥४१॥
मरीचशीलार्कक्षीरैर्वार्त्ताकीं त्वचमाशु भावितां शुष्काम् ।

कृत्वा विधिना धूमं पिबतः कासाः शमं यान्ति ॥४२॥
दशमूलीकषायेण भार्गीं कल्कं पचेद् घृतम् ।
दधितित्तिरिनिर्यूहे तत् परं वातकासनुत् ॥४३॥
दशमूलघृतम् ।
दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् ।
पुष्कराह्वशटीबिल्वसुरसव्योषहिङ्गुभिः ॥४४॥
पेयानुपानं तद् देयं कासे वातकफाधिके ।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥४५॥
दशमूलाद्यं घृतम् ।
दशमूलीचतुःप्रस्थे रसे प्रस्थोन्मितं हविः ।
सक्षारैः पञ्चकोलैस्तु कल्कितं साधुसाधितम् ॥४६॥
कासहृत्पार्श्वशूलघ्नं हिक्काश्वासनिवर्हणम् ।
कल्कं षट्पलमेवात्र ग्राहयन्ति भिषग्वराः ॥४७॥
दशमूलषट्पलं घृतम् ।
कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पलाद्रसे ।
प्रस्थः सिद्धो घृताच्छ्वासकासनुद्वह्निदीपनः ॥४८॥
कण्टकारीघृतम् ।
घृतं रास्नाबलाव्योषश्वदंष्ट्राकल्कपाचितम् ।
कण्टकारीरसे सर्पिः पञ्चकासनिसूदनम् ॥४९॥
कण्टकारीघृतम् ।
सपञ्चमूलशाखायाः कण्टकार्य्या रसाढके ।
घृतप्रस्थं बलाव्योषविडङ्गशटीचित्रकैः ॥५०॥
सौवर्च्चलयवक्षारबिल्वामलकपुष्करैः ।
वृश्चीरबृहतीपथ्यायमानीदाडिमर्द्धिभिः ॥५१॥

द्राक्षापुनर्नवाचव्यधन्वयासाम्लवेतसैः।
शृङ्गीतामलकीभार्गीरास्नागोक्षुरकैः पचेत् ॥५२॥
कल्केन सर्वकासेषु हिक्काश्वासे च शस्यते।
कण्टकारीघृतं सिद्धं कफव्याधिविनाशनम् ॥५३॥

बृहत्कण्टकारीघृतम्।

द्रोणेऽपां साधयेद्रास्नां दशमूलीं शतावरीम्।
पलिकां मानिकांशांश्चैव कुलत्थान् बदरान् यवान् ॥५४॥
तुलार्द्धं चाजमांसस्य तद्‌शेषेण तेन च।
घृताढ़कं समक्षीरं जीवनीयैः पलोन्मितैः ॥५५॥
सिद्धं तद्दशभिः कल्कैर्नस्यपानानुवासनैः।
समीक्ष्य वातरोगेषु यथावस्थं प्रयोजयेत् ॥५६॥
पञ्चकासान् क्षयं श्वासं पार्श्वशूलमरोचकम्।
सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्द्ध्वानिलं जयेत् ॥५७
जीवकर्षभकौ मेदे काकोल्यौ सूर्पपर्णिके।
जीवन्ती मधुकश्चैव दशको जीवको मतः ॥५८॥

रास्नाद्यं घृतम्।

दशमूलीं स्वयंगुप्तां शङ्खपुष्पीं शटीं बलाम्।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥५९॥
भार्गीपुष्करमूलञ्च द्विपलांशं यवाढ़कम्।
हरीतकीशतञ्चैकं जलपञ्चाढ़के पचेत् ॥६०॥
यवैः स्विन्नैः कषायं तं पूतं तच्चाभयाशतम्।
पचेत् गुड़तुलां दत्त्वा कुड़वञ्च पृथक् घृतात् ॥६१॥
तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्।
लिह्याद्‌द्वे चाभये नित्यमतः खादेद्रसायनात् ॥६२॥

तद्वलीपलितं हन्यात् बलायुर्मेलवर्द्धनम् ।
पञ्चकासान् क्षयं श्वासं हिक्काः सविषमज्वरान् ॥६३॥
हन्यात् तथा ग्रहण्यर्शोहृद्रोगारुचिपीनसान् ।
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम् ॥ ६४ ॥

अगस्त्यहरीतकी ।

समूलपुष्पच्छदकण्टकार्य्याः
तुलां जलद्रोणपरिप्लुतायाः ।
हरीतकीनाञ्च शतं निदध्या-
दधात्र पक्वा चरणावशेषम् ॥ ६५ ॥
गुड़स्य दत्त्वा शतमेतदग्नौ
विपक्वमुत्तीर्य्य ततः सुशीते ।
कटुत्रिकञ्च द्विपलप्रमाणं
पलानि षट्पुष्परसस्य तत्र ॥ ६६ ॥
क्षिपेच्चतुर्जातपलं यथाग्नि
प्रयुज्यमानो विधिनावलेहः ।
वातात्मकं पित्तकफोद्भवञ्च
द्विदोषकासानपि यांस्त्रिदोषान् ॥ ६७ ॥
क्षयोद्भवञ्च क्षतजञ्च हन्यात्
सपीनसश्वासमुरःक्षतञ्च ।
यक्ष्माणमेकादशरूपमुग्रं
भृगूपदिष्टं हि रसायनं स्यात् ॥ ६८ ॥

व्याघ्रीहरीतकी ।

इति कासरोगचिकित्सा ।

---

# अथ हिक्काश्वासाधिकारः।

हिक्काश्वासातुरे पूर्वं तैलाक्ते स्वेद इष्यते।
स्निग्धैर्लवणयोगैश्च मृदुर्वातानुलोमनम् ॥ १ ॥
ऊर्द्ध्वाधःशोधनं शक्ते दुर्बले शमनं मतम्।
कोलमज्जाञ्जनं लाजातिक्ताकाञ्चनगैरिकम् ॥२॥
कृष्णा धात्री सिता शुण्ठी काश्मीर्यं दधि नाम च।
पाटल्याः सफलं पुष्पं कृष्णाखर्जूरमुस्तकम् ॥ ३ ॥
षडेते पादिका लेहा हिक्काघ्ना मधुसंयुताः।
मधुकं मधुसंयुक्तं पिप्पली शर्करान्विता ॥ ४ ॥
नागरं गुडसंयुक्तं हिक्काघ्नं नावनत्रयम्।
स्तन्येन मक्षिकाविष्ठा नस्यं वालक्तकाम्बुना ॥५॥
योज्यं हिक्काभिभूताय स्तन्यं वा चन्दनान्वितम्।
मधुसौवर्च्चलोपेतं मातुलुङ्गरसं पिबेत् ॥ ६ ॥
हिक्कार्त्तश्च पयश्छागं हितं नागरसाधितम्।
कृष्णामलकशुण्ठीनां चूर्णं मधुसितायुतम् ॥ ७ ॥
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवारणम्।
हिक्काश्वासी पिबेद्भार्गीं सविश्वामुष्णवारिणा।
नागरं वा सिता भार्गी सौवर्च्चलसमन्वितम् ॥ ८ ॥
शृङ्गीकटुत्रिकफलात्रयकण्टकारी-
भार्गीसपुष्करजटालवणानि पञ्च।
चूर्णं प्रिबेदशिशिरेण जलेन हिक्का-
श्वासोर्द्ध्ववातकसनारुचिपीनसेषु ॥ ९ ॥
अभयानागरकल्कं पौष्करयवशूकमरिचकल्कं वा।

तोयेनोष्णेन पिबेच्छ्वासी हिक्की च तच्छान्त्यै ॥१०॥
अमृतानागरफञ्जीव्याघ्रीपर्णाग्रसाधितः क्वाथः।
पीतः सकणाचूर्णः कासश्वासौ जयत्याशु ॥ ११ ॥
दशमूलीकषायस्तु पुष्करेण विचूर्णितः।
श्वासकासप्रशमनः पार्श्वहृच्छूलनाशनः ॥ १२ ॥
कुलत्थनागरव्याघ्रीवासाभिः क्वथितं जलम्।
पीतं पुष्करसंयुक्तं हिक्काश्वासनिवर्हणम् ॥ १३ ॥
गुडं कटुकतैलेन मिश्रयित्वा समं लिहेत्।
त्रिसप्ताहप्रयोगेण श्वासं निर्मूलतो जयेत् ॥१४॥
शृङ्गीमहौषधकणाघनपुष्कराणां
चूर्णं शटीमरिचशर्करया समेतम्।
क्वाथेन पीतममृतावृषपञ्चमूल्याः
श्वासं त्र्यहेण शमयेदतिदोषमुग्रम् ॥ १५ ॥
हरिद्रां मरिचं द्राक्षां गुडं रास्नां कणां शटीम्।
जह्यात् तैलेन विलिहन् श्वासान् प्राणहरानपि ॥१६॥
हिक्कां हरति प्रबलां प्रबलं श्वासं नाशयत्याशु।
शिखिपुच्छभूतिपिप्पलीचूर्णं मधुमिश्रितं लीढम् ॥१७॥
कर्षं कलिफलचूर्णं लीढं चात्यन्तमिश्रितं मधुना।
अचिराद्धरति श्वासं प्रबलामुद्धंसिकाञ्चैव ॥ १८ ॥
हिंस्राविडङ्गपूतिकत्रिफलाव्योषचित्रकैः।
द्विक्षीरं सर्पिषः प्रस्थं चतुर्गुणजलान्वितम् ॥ १९ ॥
कोलमात्रैः पचेत्तद्धि कासश्वासं व्यपोहति।
अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा ॥ २० ॥
हिंस्राद्यं घृतम्।

तेजोवत्यभयाकुष्ठं पिप्पली कटुकरोहिणी।
भूतिकं पौष्करं मूलं पलाशं चित्रकं शटी॥ २१॥
सौवर्चलं तामलकी सैन्धवं बिल्वपेषिका।
तालीशपत्रं जीवन्ती वचा तैरक्षसम्मितैः॥ २२॥
हिङ्गुपादैर्घृतं प्रस्थं पचेत् तोयचतुर्गुणे।
एतद्यथाबलं पीत्वा हिक्काश्वासौ जयेन्नरः।
शोथानिलार्शोग्रहणीहृत्पार्श्वरुज एव च॥ २३॥

तेजोवत्याद्यं घृतम्।

शतं संगृह्य भार्ग्यास्तु दशमूल्यास्तथापरम्।
शतं हरीतकीनाञ्च पचेत्तोयचतुर्गुणे॥ २४॥
पादावशेषे तस्मिंस्तु रसे वस्त्रपरिस्रुते।
आलोड्य च तुलां पूतां गुड़स्य त्वभयां ततः॥ २५॥
पुनः पचेत् तु मृद्वग्नौ यावल्लेहत्वमागतम्।
शीतेषु मधुनश्चात्र षट्पलानि प्रदापयेत्॥ २६॥
त्रिकटु त्रिसुगन्धञ्च पलिकानि पृथक् पृथक्।
कर्षद्वयं यवक्षारं संचूर्ण्य प्रक्षिपेत् ततः॥ २७॥
भक्षयेदभयामेकां लेहस्यार्द्धपलं लिहेत्।
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा॥ २८॥
स्वरवर्णप्रदो ह्येष जठराग्नेश्च दीपनः।
पलान्निखागते मानेन द्विगुण्यमिहेष्यते।
हरीतकीशतस्यात्र प्रस्थत्वादाढ़कं जलम्॥ २९॥

भार्गीगुड़ः।

कुलत्थं दशमूलञ्च तथैव द्विजयष्टिका।
शतं शतञ्च संगृह्य जलद्रोणे विपाचयेत्॥ ३०॥

पादावशेषे तस्मिंस्तु गुड़स्यार्द्धतुलां क्षिपेत् ।
शीतीभूते च पक्वे च मधुनोऽष्टौ पलानि च ॥ २१ ॥
षट्पलानि तुगाक्षीर्य्याः पिप्पल्याश्च पलद्वयम् ।
त्रिसुगन्धिकयुक्तं तत् खादेदग्निबलं प्रति ॥ २२ ॥
श्वासं कासं ज्वरं हिक्कां नाशयेत्तमकं तथा ।
प्रतिशतं द्रोणमियमाजन्येयं द्रोणत्रयं त्विह ॥ २३ ॥
कुलत्थगुड़ः ।
इति हिक्काश्वासचिकित्सा ।

## अथ स्वरभेदाधिकारः ।

वाते सलवणं तैलं पित्ते सर्पिः समाक्षिकम् ।
कफे सक्षारकटुकं क्षौद्रं कुड़व इष्यते ॥ १ ॥
गले तालुनि जिह्वायां दन्तमूलेषु चाश्रितः ।
तेन निष्क्रष्यते श्लेष्मा स्वरश्चास्य प्रसीदति ॥२॥
आद्ये कोष्णं जलं पेयं दग्ध्वा घृतगुड़ौदनम् ।
क्षीरान्नपानं पित्तोत्थे पिबेत् सर्पिरतन्द्रितः ॥३॥
पिप्पलीपिप्पलीमूलं मरिचं विश्वभेषजम् ।
पिबेन्मूत्रेण मतिमान् कफजे स्वरसंक्षये ॥४॥
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते ।
क्षयजे सर्वजे चापि प्रत्याख्याय समाचरेत् ॥५॥
चव्याम्लवेतसकटुत्रिकतिन्तिड़ीक-
तालीशजीरकतुगादहनैः समांशैः ।
चूर्णं गुड़प्रमृदितं त्रिसुगन्धियुक्तं
वैस्वर्य्यपीनसकफारुचिषु प्रशस्तम् ॥ ६ ॥

तलाक्तं स्वरभेदे वा खदिरं धारयेन्मुखे।
पथ्यां पिप्पलीयुक्तां वा संयुक्तां नागरेण वा ॥७॥
अजमोदां निशां धात्रीं क्षारं वह्निं विचूर्ण्य च।
मधुसर्पिर्युतं लीढ्वा स्वरभेदं व्यपोहति ॥८॥
कलितरुफलसिन्धुकणाचूर्णं तक्रेण लीढ़मपहरति।
स्वरभेदं गोपयसा पीतं वामलकचूर्णञ्च ॥९॥
वदरीपत्रकल्कं वा घृतभृष्टंससैन्धवम्।
स्वरोपघाते कासे च लेहमेनं प्रयोजयेत् ॥१०॥
शर्करामधुमिश्राणि शृतानि मधुरैः सह।
पिबेत् पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः ॥११॥
व्याघ्रीस्वरसविपक्वं रास्नावाट्यालगोक्षुरव्योषैः।
सर्पिः स्वरोपघातं हन्यात् कासञ्च पञ्चविधम् ॥१२॥
शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम् ॥१३॥

कण्टकारीघृतम्।

भृङ्गराजामृतावल्लीवासकदशमूलकासमर्दरसैः।
सर्पिः सपिप्पलीकं सिद्धं स्वरभेदकासजिन्मधुना ॥१४॥

भृङ्गराजाद्यं घृतम्।

इति स्वरभेदचिकित्सा।

## अथारोचकाधिकारः।

वास्तिं समीरणे पित्ते विरेकं वमनं कफे।
कुर्य्याद्‌ हृद्यानुकूलानि हर्षणञ्च मनोघ्नजे ॥१॥
वान्तौ वचाम्बुरनिले विधिवत् पिबेत् तु

स्नेहोष्णतोयमदिराप्लुतमेन चूर्णम्।
कृष्णाविड़ङ्गयवभस्महरेणुभार्गी-
रास्नैलहिङ्गुलवणोत्तमनागराणाम् ॥२॥

पैत्ते गुड़ाम्बुमधुरैर्वमनं प्रशस्तं
लेहः ससैन्धवसितामधुसर्पिरिष्टः।
निम्बाम्बु वच्छर्दितवतः कफजे तु पानं
राजद्रुमाम्बु मधुना सह दीप्यकाढ्यम् ॥३॥

चूर्णं यदुक्तमथवानिलजे तदेव
सर्वैश्च सर्वकृतमेवमुपक्रमेच्च ॥४॥

कुष्ठसौवर्चलाजाजीशर्करामरिचं विड़म्।
धात्र्येलापद्मकोशीरपिप्पलीचन्दनोत्पलम् ॥५॥

लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम्।
आर्द्रदाड़िमनिर्य्यासश्चाजाजीशर्करायुतः ॥६॥

सतैलमाक्षिकास्त्वेते चत्वारः कुड़वग्रहाः।
चतुरोऽरोचकान् हन्युर्वाताद्यैकजसर्वजान् ॥७॥

त्वङ्मुस्तमेलाधान्यानि मुस्तमामलकानि च।
त्वक् च दार्वी यमान्यश्च पिप्पल्यस्तेजवत्यपि ॥८॥

यमानी तिन्तिड़ीकञ्च पञ्चैते मुखशोधनाः।
श्लोकपादैरभिहिताः सर्वारोचकनाशनाः ॥९॥

अम्लिका गुड़तोयञ्च त्वगेलामरिचान्वितम्।
अभक्तच्छन्दरोगेषु शस्तं कुड़वधारणम् ॥१०॥

कारव्यजाजीमरिचं द्राक्षावृक्षाम्लदाड़िमम्।
सौवर्चलं गुड़ं क्षौद्रं सर्वारोचकनाशनम् ॥११॥

श्रीण्यूषणानि त्रिफला रजनीद्वयञ्च
चूर्णीकृतानि यवशूकविमिश्रितानि।
क्षौद्रान्वितानि वितरेन्मुखधारणार्थ-
मन्यानि तिक्तकटुकानि च भेषजानि ॥१२॥
विट्चूर्णमधुसंयुक्तो रसो दाड़िमसम्भवः।
असाध्यामपि संहन्यादरुचिं वक्त्रधारितः ॥१३॥
यमानीतिन्तिड़ीकञ्च नागरं चाम्लवेतसम्।
दाड़िमं वदरं चाम्लं कार्षिकाण्युपकल्पयेत् ॥१४॥
धान्यसौवर्चलाजाजीवराङ्गञ्चार्द्धकार्षिकम्।
पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च ॥१५॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत्।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम् ॥१६॥
हृत्पीड़ापार्श्वशूलघ्नं विबन्धानाहनाशनम्।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥१७॥

यमानीषाड़वः।

अष्टादश: शिग्रुफलानि दश मरिचानि विंशतिश्च पिप्पल्यः।
आर्द्रकपलं गुड़पलं प्रस्थत्रयमारणालस्य ॥१८॥
एतद्धिङ्लवणयुतं खजाहतं सुरभि गन्धाढ्यम्।
अशनसहस्रघाति श्रेयं कलहंसं नाम ॥ १९ ॥

कलहंसः।

इत्यरोचकचिकित्सा।

# अथ छर्द्दिविकारः।

आमाशयोत्क्लेशभवा हि सर्वा-
श्छर्द्यो मता लङ्घनमेव तस्मात्।
प्राक् कारयेत् मारुतजां विमुच्य
संशोधनं वा कफपित्तहारि॥ १॥
हन्यात् क्षीरोदकं पीतं छर्द्दिं वमनसम्भवाम्।
ससैन्धवं पिबेत् सर्पिर्वातच्छर्द्दिनिवारणम्॥२॥
मुद्गामलकयूषं वा ससर्पिष्कं ससैन्धवम्।
यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिबेत्॥३॥
पित्तात्मिकायां त्वनुलोमनार्थं
द्राक्षाविदारीक्षुरसैस्त्रिवृत् स्यात्।
कफाशयस्थं त्वतिमात्रवृद्धं
पित्तं जयेत् स्वादुभिरूर्द्ध्वमेव॥४॥
शुद्धस्य काले मधुशर्कराभ्यां
लाजैश्च मन्थं यदि वापि पेयाम्।
प्रदापयेन्मुद्गरसेन वापि
शाल्योदनं जाङ्गलजैरसैर्वा॥५॥
चन्दनेनाक्षमात्रेण संयोज्यामलकीरसम्।
पिबेन्माक्षिकसंयुक्तं छर्द्दिस्तेन निवर्त्तते॥६॥
चन्दनञ्च मृणालञ्च बालकं नागरं वृषम्।
सतण्डुलोदकक्षौद्रं पीतः कल्को वमिं जयेत्॥७॥
कषायो भृष्टमुद्गस्य सलाजमधुशर्करः।
छर्द्यतीसारहृद्दाहज्वरघ्नः संप्रकाशितः॥८॥

हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम्।
अधोभागीकृते दोषे छर्दिः क्षिप्रं निवर्त्तते ॥९॥
गुडूचीत्रिफलारिष्टपटोलैः क्वथितं पिबेत्।
क्षौद्रयुक्तं निहन्त्याशु छर्दिं पित्ताम्लसम्भवाम् ॥१०॥
क्वाथः पर्प्पटजः पीतः सक्षौद्रः छर्दिनाशनः ॥११॥
कफात्मिकायां वमनन्तु शस्तं
सपिप्पलीसर्षपनिम्बतोयैः।
पिण्डीतकैः सैन्धवसंप्रयुक्तै-
श्छर्द्यां कफामाशयशोधनार्थम् ॥१२॥
विडङ्गत्रिफलाविश्वचूर्णं मधुयुतं जयेत्।
विडङ्गप्लवशुण्ठीनामथवा श्लेष्मजां वमिम् ॥१३॥
सजाम्बवं वा वदरस्य चूर्णं
मुस्तायुतां कर्कटकस्य शृङ्गीम्।
दुरालभां वा मधुसंप्रयुक्तां
लिह्यात् कफच्छर्दिविनिग्रहार्थम् ॥१४॥
तर्पणं वा मधुयुतं तिसृणामपि भेषजम् ॥१५॥
कृतं गुडूच्या विधिवत् कषायं हिमसंज्ञितम्।
तिसृष्वपि भवेत् पथ्यं माक्षिकेण समायुतम् ॥१६॥
द्रव्यादापोत्थितात्तोये प्रतप्ते निशि संस्थितात्।
कषायो योऽभिनिर्याति सशीतः समुदाहृतः ॥१७॥
षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयोः।
आप्लुतं भेषजपलं रसाख्यायां पलद्वयम् ॥१८॥
श्रीफलस्य गुडूच्या वा कषायो मधुसंयुतः।
पेयश्छर्दित्रये शीतो मूर्वा वा तण्डुलाम्बुना ॥१९॥

जम्ब्वाम्रपल्लवगवेधुकधान्यसेव्य-
ह्रीवेरवारि मधुना पिबतोऽल्पमल्पम् ।
छर्दिः प्रयाति शमनं त्रिसुगन्धियुक्ता
लीढ़ा निहन्ति मधुनाथ दुरालभा वा ॥२०॥
आतीरसः कपित्थस्य पिप्पलीमरिचान्वितः ।
क्षौद्रेण युक्तः शमयेल्लेहोऽयं छर्दिमुल्बणाम् ॥२१॥
पिष्ट्वा धात्रीफलं द्राक्षां शर्कराञ्च पलोन्मिताम् ।
दत्त्वा मधुपलञ्चात्र कुड़वं सलिलस्य च ।
वाससा गलितं पीतं हन्ति छर्दिं त्रिदोषजाम् ॥२२॥
एलालवङ्गगजकेशरकोलमज्ज-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्दिं निहन्ति कफमारुतपित्तजाञ्च ॥ २३ ॥

एलादिचूर्णम् ।

कोलामलकमज्जानो माक्षिकविट्सितामधु ।
सकृष्णातण्डुलो लेहश्छर्दिमाशु नियच्छति ॥ २४ ॥
अश्वत्थवल्कलं शुष्कं दग्ध्वा निर्वापितं जले ।
तज्जलं पानमात्रेण छर्दिं जयति दुस्तराम् ॥ २५ ॥
यष्ट्याह्वं चन्दनोपेतं सम्यक् क्षीरप्रपेषितम् ।
तेनैवालोड्य पातव्यं रुधिरच्छर्दिनाशनम् ॥ २६ ॥
लाजाकपित्थमधुमागधिकोषणानाम्
क्षौद्राभयात्रिकटुधान्यकजीरकाणाम् ।
पथ्यामृतामरिचमाक्षिकपिप्पलीनां
लेहास्त्रयः सकलवम्यरुचिप्रशान्त्यै ॥ २७ ॥

पद्मकामृतनिम्बानां धान्यचन्दनयोः पचेत्।
कल्के क्वाथे च हविषः प्रस्थं छर्दिनिवारणम्।
तृष्णारुचिप्रशमनं दाहज्वरहरं परम्॥ २८॥

पद्मकाद्यं घृतम्।

इति छर्दिचिकित्सा।

---

## अथ तृष्णाधिकारः।

तृष्णायां पवनोत्थायां सगुड़ं दधि शस्यते।
रसाश्च वृंहणाः शीता गुडूच्या रस एव च॥ १॥

पञ्चाङ्गकाः पञ्चगणा य उक्ता-
स्तेष्वम्बु सिद्धं प्रथमे गणे वा।
पिबेत् सुखोष्णं मनुजोऽल्पमात्रं
तृष्णोपरोधं न कदापि कुर्य्यात्॥ २॥

पित्तोत्थितं पित्तहरैर्विपक्वं
निहन्ति तोयं पय एव वापि॥ ३॥

काश्मर्य्यशर्करायुक्तं चन्दनोशीरपद्मकम्।
द्राक्षामधुकसंयुक्तं पित्ततर्षे जलं पिबेत्॥ ४॥

पित्तजायान्तु तृष्णायां पक्वोडुम्बरजो रसः।
तत्क्वाथो वा हिमस्तद्वच्छारिवादिगणाम्बु वा॥ ५॥

स्याज्जीवनीयसिद्धं क्षीरघृतं वातपित्तजे तर्षे।
तद्वद् द्राक्षाचन्दनखर्जूरोशीरमधुसंयुक्तं तोयम्॥ ६॥

सशारिवादौ तृणपञ्चमूले तथोत्पलादौ मधुरे गणे वा।
कुर्य्यात् कषायांस्तु तथैव युक्तान्मधूकपुष्पादिषु चापरेषु॥ ७॥

विल्वाटकीधातकिपञ्चकोल-
दर्भेषु सिद्धं कफजां निहन्ति ।
हितं भवेच्छर्दनमेव चात्र
तप्तेन निम्बप्रसवोदकेन ॥८॥
सजीरकाण्याद्र्र्कशृङ्गवेर-
सौवर्चलान्यर्द्धजलाप्लुतानि ।
मद्यानि हृद्यानि च गन्धवन्ति
पीतानि सद्यः शमयन्ति तृष्णाम् ॥९॥
चतोत्थितां रुग्विनिवारणेन
जयेद्रसानामसृजश्च पानैः ।
चयोत्थितां चीरजलं निहन्या-
न्मांसोदकं वाथ मधूदकं वा ॥१०॥
गुर्वन्नजामुल्लिखनैर्जयेत्तु
चयादृते सर्वकृताञ्च तृष्णाम् ॥११॥
लाजोदकं मधुयुतं शीतं गुड़विमर्दितम् ।
काश्मर्य्यशर्करायुक्तं पिबेत् तृष्णार्दितो नरः ॥१२॥
अतरुचदुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः ।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥१३॥
आम्रजम्बूकषायं वा पिबेन्माचिकसंयुतम् ।
छर्दिं सर्वां प्रणुदति तृष्णाञ्चैवापकर्षति ॥१४॥
वटशुङ्गसितालोध्रदाड़िमं मधुकं मधु ।
पिबेत् तण्डुलतोयेन छर्दितृष्णानिवारणम् ॥१५॥
गोस्तनेचुरसचीरयष्टीमधुमधूत्पलैः ।
नियतं नस्यतः पानैस्तृष्णा शाम्यति दारुणा ॥१६॥

क्षीरेक्षुरसमाध्वीकैः क्षौद्रशीधुगुडोदकैः।
वृक्षाम्लाम्लैश्च गण्डूषास्तालुशोषनिवारणाः॥१७॥
तालुशोषे पिबेत् सर्पिर्घृतमण्डमथापि वा॥१८॥
मूर्च्छाच्छर्दितृषादाहस्त्रीमद्यभृशकर्षिताः।
पिबेयुः शीतलं तोयं रक्तपित्ते मदात्यये॥१९॥
धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम्।
तदेवालवणं पीतं मुखशोषहरं परम्॥२०॥
वैशद्यं जनयत्यास्ये संदधाति मुखे व्रणान्।
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम्॥२१॥
कोलदाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति॥२२॥
वारि शीतमधुयुतमाकण्ठाद्वा पिपासितम्।
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति॥२३॥
वटशुङ्गामयक्षौद्रलाजनीलोत्पलैर्दृढा।
गुडिका वदनन्यस्ता क्षिप्रं तृष्णां नियच्छति॥२४॥
ओदनं रक्तशालीनां शीतं माक्षिकसंयुतम्।
भोजयेत् तेन शाम्येत् तु छर्दिस्तृष्णाचिरोत्थिता॥२५॥
पूर्वामयातुरः सन् दीनस्तृष्णार्दितो जलं याचन्।
न लभेत चेदाश्वेव मरणमाप्नोति दीर्घरोगं वा॥२६॥
तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति।
तस्मात् सर्वास्ववस्थासु न क्वचिद्वारि वार्यते॥२७॥

इति तृष्णाचिकित्सा।

---

# अथ मूर्च्छाधिकारः।

सेकावगाहौ मणयः सहाराः
शीताः प्रदेहा व्यजनानिलश्च।
शीतानि पानानि च गन्धवन्ति
सर्वासु मूर्च्छासु निवारितानि ॥१॥
सिद्धानि वर्गे मधुरे पयांसि
सदाड़िमा जाङ्गलजा रसाश्च।
तथा यवा लोहितशालयश्च
मूर्च्छासु शस्ताश्च सतीलमुद्गाः ॥२॥

यथादोषं कषायाणि ज्वरघ्नानि प्रयोजयेत्।
रक्तजायान्तु मूर्च्छायां हितः शीतक्रियाविधिः ॥३॥
मद्यजायां वमेन्मद्यं निद्रां सेवेद्यथासुखम्।
विषजायां विषघ्नानि भेषजानि प्रयोजयेत् ॥४॥
कोलमज्जोषणोशीरकेशरं शीतवारिणा।
पीतं मूर्च्छां जयेल्लीढ़ा तृष्णां वा मधुसंयुताम् ॥५॥
महौषधामृताक्षुद्रापौष्करग्रन्थिकोद्भवम्।
पिबेत् कणायुतं क्वाथं मूर्च्छायेषु मदेषु च ॥६॥
शतावरीबलामूलद्राक्षासिद्धं पयः पिबेत्।
ससितं भ्रमनाशाय वीजं वाट्यालकस्य वा ॥७॥
पिबेत् दुरालभाक्वाथं सघृतं भ्रमशान्तये।
त्रिफलायाः प्रयोगो वा प्रयोगः पयसोऽपि वा।
रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥८॥
मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुड़ार्द्रकं प्रातः।

समाहात् पथ्यभोजी मदमूर्च्छाकासकामलोन्मादान् ॥९॥
अञ्जनान्यवपीड़ाश्च धूमः प्रधमनानि च।
सूचीभिस्तोदनं शस्तं दाहः पीड़ा नखान्तरे ॥१०
लुञ्चनं केशरोमणाञ्च दन्तैर्दंशनमेव च।
आत्मगुप्तावघर्षश्च हितास्तस्यावरोधने ॥११॥

इति मूर्च्छाचिकित्सा।

## अथ मदात्ययाधिकारः।

मन्थः खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाड़िमैः।
परूषकैः सामलकैर्युक्तो मद्यविकारणुत् ॥१॥
जले चतुष्पले शीते क्षुन्नद्रव्यपलं क्षिपेत्।
मृत्पात्रे मर्दयेत् सम्यक् तस्माच्च द्विपलं पिबेत् ॥२॥
सतीलमुद्गमिश्रान् वा दाड़िमामलकान्वितान्।
द्राक्षामलकखर्जूरपरूषकरसेन वा।
कल्पयेत् तर्पणान् यूषान् रसांश्च विविधात्मकान् ॥ ३ ॥
मद्यं सौवर्चलव्योषयुक्तं किञ्चिज्जलान्वितम्।
जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥ ४ ॥
मुद्गयूषः सितायुक्तः स्वादुर्वा पैशितो रसः।
पित्तपानात्यये योज्याः सर्वतश्च क्रिया हिमाः ॥ ५ ॥
पानात्यये कफोद्भूते लङ्घनञ्च यथाबलम्।
दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः ॥६॥
सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सितम्।
आभिः क्रियाभिर्मिश्राभिः शान्तिं याति मदात्ययः ॥७॥
न चेन्मद्यक्रमं मुक्त्वा क्षीरमस्य प्रयोजयेत्।

लङ्घनाद्यैः कफे क्षीणे जातदौर्ब्बल्यलाघवे ॥ ८ ॥
ओजस्तुल्यगुणं क्षीरं विपरीतञ्च मद्यतः ।
क्षीरप्रयोगं मद्यं वा क्रमेणाल्पाल्पमाचरेत् ॥ ९ ॥
पयः पुनर्नवाक्काथयष्टीकल्कप्रसाधितम् ।
घृतं पुष्टिकरं पानान्मद्यपानहृतौजसः ॥ १० ॥

पुनर्नवाघृतम् ।

सौवर्च्चलमजाज्यञ्च वृक्षाम्लं साम्लवेतसम् ।
त्वगेलामरिचार्द्धांशं शर्कराभागयोजितम् ॥ ११ ॥
हितं लवणमष्टाङ्गमग्निसन्दीपनं परम् ।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम् ॥ १२ ॥

अष्टाङ्गलवणम् ।

चव्यं सौवर्च्चलं हिङ्गुपूरकं विश्वदीप्यकम् ।
चूर्णं मद्येन दातव्यं पानात्ययरुजापहम् ॥ १३ ॥
जलाप्लुतश्चन्दनरूषिताङ्गः
स्रग्वोसभक्तां पिशितोपदंशाम् ।
पिबन् सुरां नैव लभेत रोगान्
मनोमतिघ्नञ्च मदं न याति ॥ १४ ॥
द्राक्षाकपित्थफलदाड़िमपानकं यत्
तत्पानविभ्रमहरं मधुशर्कराढ्यम् ॥ १५ ॥
पथ्याक्काथेन संसिद्धं घृतं धात्रीरसेन वा ।
सर्पिः कल्याणकं वापि मदमूर्च्छाहरं पिबेत् ॥ १६ ॥
सच्छर्दिमूर्च्छातिसारं मदं पूगफलोद्भवम् ।
सद्यः प्रशमयेत् पीतमात्रमेवारि शीतलम् ॥ १७ ॥
वन्यकरीषघ्राणाज्जलपानाल्लवणभक्षणाद्वापि ।

शाम्यति पूगफलमदश्चूर्णरजाशर्कराकवलात्। १८।
शङ्खचूर्णरजोघ्राणं सद्यं मदमपोहति॥ १९॥
कुष्माण्डकरसः सगुडः शमयति मदनकोद्रवजम्।
क्षीरस्य दुग्धं सशर्करं पानयोगेन॥ २०॥

इति मदात्ययचिकित्सा।

---

## अथ दाहाधिकारः।

शतधौतघृताभ्यक्तं दिग्धाहा यवशक्तुभिः।
कोलामलकयुक्तैर्वा धान्याम्लैरपि बुद्धिमान्॥ १॥
छादयेत् तस्य सर्वाङ्गमारनालार्द्रवाससा।
लामज्जेनाथ शुक्तेन चन्दनेनानुलेपयेत्॥ २॥
चन्दनाम्बुकणास्यन्दितालवृन्तोपवीजितः।
सुप्याद्दाहार्दितोऽम्भोजकदलीदलसम्भवे॥ ३॥
परिषेकावगाहेषु व्यजनानाञ्च सेवने।
शस्यते शिशिरं तोयं तृष्णादाहोपशान्तये॥ ४॥
क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनान्वितैः।
अन्तर्दाहं प्रशमयेदेतैश्चान्यैश्च शीतलैः॥ ५॥
कुशादिशालपर्णीभिर्जीवकाद्येन साधितम्।
तैलं घृतं वा दाहघ्नं वातपित्तविनाशनम्॥ ६॥

कुशाद्यं तैलं घृतञ्च।

फलिनीलोध्रसेव्याम्बुहेमपत्रं कुटन्नटम्।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम्॥ ७॥
ह्रीवेरपद्मकोशीरचन्दनक्षोदवारिणा।

संपूर्णामवगाहेत द्रोणीं दाहार्दितो नरः ॥ ८ ॥

इति दाहचिकित्सा।

## अथ उन्मादाधिकारः।

उन्मादे वातिके पूर्वं स्नेहपानं विरेचनम्।
पित्तजे कफजे वान्तिः परो वस्त्यादिकः क्रमः ॥ १ ॥
यच्चोपदेक्ष्यते किञ्चिदपस्मारचिकित्सिते।
उन्मादे तच्च कर्त्तव्यं सामान्याद्दोषदूष्ययोः ॥ २ ॥
ब्राह्मीकुष्माण्डीषड्ग्रन्थाशङ्खपुष्पिकास्वरसाः।
उन्मादहृतो दृष्टाः पृथगेते कुष्ठमधुमिश्राः ॥ ३ ॥
दशमूलाम्बु सघृतं युक्तं मांसरसेन वा।
ससिद्धार्थकचूर्णं वा पुराणं वैककं घृतम् ॥ ४ ॥
उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम्।
लाक्षारसनिभं शीतं प्रपुराणमतः परम् ॥ ५ ॥
श्वेतोन्मत्तोत्तरदिक्स्थमूलसिद्धस्तु पायसः।
गुड़ाज्यसंयुतो हन्ति सर्वोन्मादांस्तु दोषजान् ॥ ६ ॥
उन्मादे समधुः पेयः शुद्धो वा तालशाखजः।
रसो नस्येऽभ्यञ्जने च सार्षपं तैलमिष्यते ॥ ७ ॥
अपक्वचटकी चीरपीतोन्मादविनाशिनी।
बद्धं सार्षपतैलाक्तमुत्तानञ्चातपे न्यसेत् ॥ ८ ॥
सिद्धार्थको हिङ्गु वचाकरञ्जौ देवदारु च।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ॥९॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम्।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥१०॥

नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनन्तथा।
अपस्मारविषोन्मादे कृत्या लक्ष्मीज्वरापहः॥११॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत्॥१२॥
त्र्यूषणं हिङ्गु लवणं वचा कटुकरोहिणी।
शिरीषनक्तमालानां वीजं श्वेताश्च सर्षपाः॥१३॥
गोमूत्रपिष्टैरेतैर्वा वर्त्तिर्नेत्राञ्जने हिता।
चातुर्थकमपस्मारमुन्मादञ्च नियच्छति॥१४॥

त्र्यूषणाद्या वर्त्तिः।

शुद्धस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम्।
ताड़नञ्च मनोबुद्धिस्मृतिसंवेदनं हितम्॥१५॥
तर्जनं त्रासनं दानं सान्त्वनं हर्षणं भयम्।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः॥१६॥
कामशोकभयक्रोधहर्षेर्षालोभसम्भवान्।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत्॥१७॥
इष्टद्रव्यविनाशात् तु मनो यस्योपहन्यते।
तस्य तत्सदृशप्राप्त्या शान्त्याश्वासैश्च तान् जयेत्॥१८॥
प्रदेहोत्सादनाभ्यङ्गधूमाः पानञ्च सर्पिषः।
प्रयोक्तव्यं मनोबुद्धिस्मृतिसंज्ञाप्रबोधनम्॥१९॥
कल्याणकं महद्वापि दद्याद्वा चैतसं घृतम्।
तैलं नारायणञ्चापि महानारायणन्तथा॥२०॥
विशाला त्रिफला कौन्ती देवदार्वेलवालुकम्।
स्थिरानन्तं रजन्यौ द्वे शारिवे द्वे प्रियङ्गुकाः॥२१॥
नीलोत्पलैलामञ्जिष्ठादन्तीदाड़िमकेशरम्।

तालीशपत्रं बृहती मालत्याः कुसुमं नवम् ॥२२॥
विडङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ ।
अष्टाविंशतिभिः कल्कैरेतैरक्षसमन्वितैः ॥२३॥
चतुर्गुणं जलं दत्त्वा घृतप्रस्थं विपाचयेत् ।
अपस्मारे ज्वरे कासे शोषे मन्दानले क्षये ॥२४॥
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके ।
वम्यर्शोमूत्रकृच्छ्रे च विसर्पोपहतेषु च ॥२५॥
कण्डूपाण्ड्वामयोन्मादे विषमेहगरेषु च ।
भूतोपहतचित्तानां गद्गदानामरेतसाम् ॥२६॥
शस्तं स्त्रीणाञ्च वन्ध्यानां धन्यमायुर्बलप्रदम् ।
अलक्ष्मीपापरक्षोघ्नं सर्वग्रहनिवारणम् ॥२७॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ।
द्विजलं सचतुःक्षीरं क्षीरकल्याणकन्त्विदम् ॥२८॥

पानीयकल्याणक्षीरकल्याणके ।

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम् ।
रसे तस्मिन् पचेत् सर्पिः गृष्टिक्षीरचतुर्गुणम् ॥२९॥
वीराद्विमाषकाकोलीस्वयंगुप्तर्षभर्द्धिभिः ।
मेदया च समैः कल्कैः तत् स्यात् कल्याणकं महत् ।
बृंहणीयं विशेषेण सन्निपातहरं परम् ॥३०॥

महाकल्याणकं घृतम् ।

पञ्चमूल्यभयाकाश्मर्य्यौ रास्नैरण्डत्रिवृद्बला ।
मूर्वा शतावरी चेति क्वाथ्यैर्द्विपलिकैरिमैः ॥३१॥
कल्याणकस्य चाङ्गेन तद्घृतं चैतसं स्मृतम् ।
सर्वचेतोविकाराणां शमनं परमं मतम् ॥३२॥

घृतप्रस्थोऽत्र पक्तव्यः क्वाथो द्रोणाम्भसा हृतात्।
चतुर्गुणोऽत्र सम्पाद्यः कल्कः कल्याणकेरितः॥ ३३॥

चैतसं घृतम्।

जटिला पूतना केशी चारटी मर्कटी वचा।
त्रायमाणा जयवीरा चोरकः कटुरोहिणी॥ ३४॥
वयस्था शूकरी छत्रा सातिच्छत्रा पलङ्कषा।
महापुरुषदन्ता च वयस्था नाकुलीद्वयम्॥ ३५॥
कटुम्भरा वृश्चिकाली स्थिरा चैव च तैर्घृतम्।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम्॥ ३६॥
महापैशाचिकं नाम घृतमेतद्यथामृतम्।
मेधाबुद्धिस्मृतिकरं बालानाञ्चाङ्गवर्द्धनम्॥ ३७॥

महापैशाचिकं घृतम्।

हिङ्गु सौवर्च्चलव्योषैर्द्विपलांशैर्घृताढ़कम्।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम्॥ ३८॥

हिङ्ग्वाद्यं घृतम्।

लशुनस्याविनष्टस्य तुलार्द्धं निस्तुषीकृतम्।
तदर्द्धं दशमूल्यास्तु द्व्याढ़केऽपां विपाचयेत्॥ ३९॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा।
कोलमूलकवृक्षाम्लमातुलुङ्गार्द्रकै रसैः॥ ४०॥
दाड़िमाम्बु सुरामस्तुकाञ्जिकाम्लैस्तदर्द्धिकैः।
साधयेत्त्रिफलादारुलवणव्योषदीप्यकैः॥ ४१॥
यमानीचव्यहिङ्ग्वम्लवेतसैश्च पलार्द्धिकैः।
सिद्धमेतत् पिबेच्छूलगुल्मार्शोजठरापहम्॥ ४२॥
ब्रध्नपाण्ड्वामयप्लीहयोनिदोषकृमिज्वरान्।

वातश्लेष्मामयांश्चान्यानुन्मादांश्चापकर्षति ॥ ४३ ॥

लशुनाद्यं घृतम् ।

सर्पिःपानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः ।
पूजाबल्युपहारेष्टिहोममन्त्राञ्जनादिभिः ॥ ४४ ॥
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक् ।
कृष्णामरिचसिन्धूत्थमधुगोपित्तनिर्मितम् ॥ ४५ ॥
अञ्जनं सर्वभूतोत्थमहोन्मादविनाशनम् ।
दार्वीमधुभ्यां पुष्यायां कृतश्च गुडिकाञ्जनम् ॥ ४६ ॥
मरिचं वातपे मांसं सपित्तं स्थितमञ्जनम् ।
वैकृतं पश्यतः कार्य्यं दोषभूतहतस्मृतेः ॥ ४७ ॥
निम्बपत्रवचाहिङ्गुसर्पनिर्मोकसर्षपैः ।
डाकिन्यादिहरो धूपो भूतोन्मादविनाशनः ॥ ४८ ॥
कार्पासास्थिमयूरपिच्छवृहतीनिर्माल्यपिण्डीतकै-
स्त्वग्मांसीवृषदंशविट्तुषवचाकेशाहिनिर्मोककैः ।
गोशृङ्गद्विपदन्तहिङ्गुमरिचैस्तुल्यैस्तु धूपः कृतः
स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नः स्मृतः ॥ ४९ ॥
ब्रह्मराक्षसजिन्नस्यं पक्वेन्द्रीफलमूत्रजम् ।
साज्यं भूतहरं नस्यं श्वेताज्येष्ठाम्बुनिर्मितम् ॥ ५० ॥
देवर्षिपितृगन्धर्वैरुन्मत्तस्य च बुद्धिमान् ।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरमेव च ॥ ५१ ॥

इत्युन्मादचिकित्सा ।

## अथापस्माराधिकारः ।

वातिकं वस्तिभिः प्रायः पैत्तं प्रायोविरेचनैः ।

श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत् ॥१॥
सर्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च ।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु ॥२॥
मनोह्वातार्क्ष्यजं चैव शकृत् पारावतस्य च ।
अञ्जनं हन्त्यपस्मारमुन्मादञ्च विशेषतः ॥३॥
यष्टीहिङ्गुवचावक्रशिरीषलशुनामयैः ।
साजामूत्रैरपस्मारे सोन्मादे नावनाञ्जने ॥४॥
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम् ।
तदेव सर्पिषा युक्तं धूपनं परमं स्मृतम् ॥५॥
नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः ।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ॥६॥
कायस्थां शारदान् मुद्गान् मुस्तोशीरयवांस्तथा ।
सव्योषान् वस्तमूत्रेण पिष्ट्वा वर्त्तिं प्रकल्पयेत् ॥७॥
अपस्मारे तथोन्मादे सर्पदष्टे गरार्द्दिते ।
विषपीते जलमृते चैताः स्युरमृतोपमाः ॥८॥
अपेतराक्षसीकुष्ठपूतनाकेशिचोरकैः ।
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम् ॥९॥
जतुकाशकृतातद्दग्धैर्वा वस्तरोमभिः ।
अपस्मारहरो लेपो मूत्रसिद्धार्थशिग्रुभिः ॥१०॥
यः खादेत् क्षीरभक्ताशी माक्षिकेण वचारजः ।
अपस्मारं महाघोरं सुचिरोत्थं जयेद् ध्रुवम् ॥११॥
उद्बन्धितनरग्रीवापाशं दग्ध्वा कृतामसी ।
शीताम्बुना समं पीता हन्त्यपस्मारमुद्धतम् ॥१२॥
पतोन्यं तैललशुनं पयसा वा शतावरी ।

ब्राह्मीरसश्च मधुना सर्वापस्मारभेषजम् ॥१३॥
निर्दह्य निर्द्रवां कृत्वा छागिकामरनालिकाम् ।
तामम्लसाधिकां खादन्नपस्मारमुदस्यति ॥१४॥
हृत्कम्पोऽचिरुजा यस्य स्वेदो हस्तादिशीतता ।
दशमूलीजलं तस्य कल्याणाज्यञ्च योजयेत् ॥१५॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतम् ।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम् ॥१६॥

स्वल्पपञ्चगव्यं घृतम् ।

द्वे पञ्चमूले त्रिफलारजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥१७॥
सम्पाकं फल्गुमूलञ्च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥१८॥
भार्गी पाठा त्रिकटुकं त्रिवृता निचुलानि च ।
श्रेयसीमाढकीं मूर्वां दन्तीं भूनिम्बचित्रकौ ॥१९॥
द्वे शारिवे रोहिषञ्च भूतिकं मदयन्तिकाम् ।
क्षिपेत् पिष्टाक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत् ॥२०॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च तत्समैः ।
पञ्चगव्यमिति ख्यातं महत् तदमृतोपमम् ॥२१॥
अपस्मारे ज्वरे कासे श्वयथावुदरेषु च ।
गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके ।
अलक्ष्मीग्रहरक्षोघ्नं चातुर्थकविनाशनम् ॥२२॥

बृहत्पञ्चगव्यं घृतम् ।

शणास्त्रिवृत् तथैरण्डो दशमूली शतावरी ।
रास्ना मागधिका शिग्रु क्वाथ्यं द्विपलिकं भवेत् ॥२३॥

विदारी मधुकं मेदे द्वे काकोल्यौ सिता तथा।
ऋषभः खर्जूरमृद्वीकाभीरुयुञ्जातगोक्षुरैः ॥२४॥
चैतसस्य घृतस्याङ्गैः पक्तव्यं सर्पिरुत्तमम्।
महाचैतससंज्ञन्तु सर्वापस्मारनाशनम् ॥२५॥
गरोन्मादप्रतिश्यायतृतीयकचतुर्थकान्।
पापालक्ष्मी जयेदेतत् सर्वग्रहनिवारणम् ॥ २६ ॥
कासश्वासहरश्चैव शुक्रार्त्तवविशोधनम्।
घृतमानः क्वाथविधिरिह चैतसवन्मतः ॥ २७ ॥
कल्कश्चैतसकल्कोक्तद्रव्यैः सार्द्धश्च पादिकः।
नित्यं युञ्जातकाप्राप्तौ तालमस्तकमिष्यते ॥ २८ ॥

महाचैतसं घृतम्।

कुष्माण्डकरसे सर्पिरष्टादशगुणे पचेत्।
यष्ट्याह्वकल्कं तत्पानमपस्मारविनाशनम् ॥ २९ ॥

कुष्माण्डकघृतम्।

ब्राह्मीरसे वचाकुष्ठशङ्खपुष्पीभिरेव च।
पुराणं मेध्यमुन्मादग्रहापस्मारनुद् घृतम् ॥ ३० ॥

ब्राह्मीघृतम्।

पलङ्कषावचापथ्यावृश्चिकाल्यर्कसर्षपैः।
जटिलापूतनाकेशीलाङ्गलीहिङ्गुचोरकैः ॥ ३१ ॥
लशुनातिरसाचित्राकुष्ठैर्विड्भिश्च पक्षिणाम्।
मांसाशिनां यथालाभं वस्तमूत्रे चतुर्गुणे।
सिद्धमभ्यञ्जने तैलमपस्मारविनाशनम् ॥ ३२ ॥

पलङ्कषाद्यं तैलम्।

अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे।

सिद्धं स्यात्तैलगोमूत्रैः स्नानोत्सादनमेव च ॥ ३३ ॥

इति अपस्मारचिकित्सा ।

## अथ वातव्याध्यधिकारः ।

स्वाद्वम्ललवणैः स्निग्धैराहारैर्वातरोगिणः ।
अभ्यङ्गस्नेहवस्त्याद्यैः सर्वानेवोपपादयेत् ॥ १ ॥
विशेषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः ।
आमाशयस्थे शुद्धस्य यथा दोषहरी क्रिया ॥ २ ॥
आमाशयगते वाते छर्दिताय यथाक्रमम् ।
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥ ३ ॥
चित्रकेन्द्रयवाः पाठाकटुकातिविषाभयाः ।
महाव्याधिप्रशमनो योगः षड्धरणः स्मृतः ॥ ४ ॥
पलद्वयमांशो धरणं योगाऽयं सौश्रुतस्ततस्तस्य ।
माषेण पञ्चगुञ्जकमानेन प्रत्यहं देयः ॥ ५ ॥
पक्वाशयगते वाते हितं स्नेहविरेचनम् ।
वस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥ ६ ॥
स्नुहीलवणवार्त्ताकुस्नेहान् छन्ने घटे दहेत् ।
गोमयैः स्नेहलवणं तत्परं वातनाशनम् ॥ ७ ॥
कार्य्यो वस्तिगते चापि विधिर्वस्तिविशोधनः ॥ ८ ॥
त्वङ्मांसासृक्शिराप्राप्ते कुर्य्याच्चासृग्विमोक्षणम् ।
स्नेहोपानाहाग्निकर्मबन्धनोन्मर्दनानि च ।
स्नायुसन्ध्यस्थिसंप्राप्ते कुर्य्याद्वाते विचक्षणः ॥ ९ ॥
स्वेदाभ्यङ्गावगाहांश्च हृद्यं चान्नं त्वगाश्रिते ।
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ १० ॥

विरेको मांसमेदःस्थे निरूहाः शमनानि च।
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत्॥ ११॥
हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम्।
विबद्धमार्गं शुक्रन्तु दृष्ट्वा दद्याद्विरेचनम्॥ १२॥
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम्।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः॥ १३॥
शिरोगतेऽनिले वातशिरोरोगहरी क्रिया।
व्यादितास्ये हनुं स्विन्नामङ्गुष्ठाभ्यां प्रपीड्य च॥ १४॥
प्रदेशिनीभ्याञ्चोन्नम्य चिवुकोन्नामनं हितम्।
अर्दिते नवनीतेन खादेन्माषेण्डरीं नरः॥ १५॥
क्षीरमांसरसैर्भुक्त्वा दशमूलीरसं पिबेत्।
स्नेहाभ्यङ्गशिरोवस्तिपाननस्यपरायणः॥ १६॥
अर्दितं स जयेत्सर्पिः पिबेदौत्तरभक्तिकम्।
पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथवा॥ १७॥
रूक्षस्वेदस्तथा नस्यं मन्यास्तम्भे प्रशस्यते।
वाताद्वाग्धमनीदुष्टौ स्नेहगण्डूषधारणम्॥ १८॥
सहरिद्रावचाकुष्ठं पिप्पलीविश्वभेषजम्।
अजाजी चाजमोदा च यष्टीमधुकसैन्धवम्॥ १९॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत्।
तच्चूर्णं सर्पिषालोड्य प्रत्यहं भक्षयेन्नरः॥ २०॥
एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः।
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिस्वनः।
जडगद्गदमूकत्वं लेहः कल्याणको जयेत्॥ २१॥

कल्याणकलेहः।

दृष्टिशिरःकर्णहनुगतं वायुं मन्यागतं तथा ।
वमनं हन्ति नस्यञ्च कुशलेन प्रयोजितः ॥ २२ ॥
माषबलाशूकशिम्बीकत्तृणरास्नाश्वगन्धोरुबूकाणाम् ।
क्वाथो नस्यनिपीतो रामठलवणान्वितः कोष्णः ॥२३॥
अपहरति पक्षवातं मन्यास्तम्भं सकर्णनादरुजम् ।
दुर्जयमर्द्दितवातं सप्ताहाज्जयति चावश्यम् ॥ २४ ॥

माषबलादिः ।

दशमूलीबलामाषक्वाथं तैलाज्यमिश्रितम् ।
सायं भुक्ता पिबेन्नस्तं विश्वच्यामवबाहुके ॥ २५ ॥
मूलं बलायास्त्वथ पारिभद्रात्
तथात्मगुप्तास्वरसं पिबेद्वा ।
नस्यन्तु यो मांसरसेन दद्या-
त्प्रासादसौ वज्रसमानबाहुः ॥ २६ ॥
माषात्मगुप्तकैरण्डवाट्यालकशृतं पिबेत् ।
हिङ्गु सैन्धवसंयुक्तं पक्षाघातनिवारणम् ॥ २७ ॥
बाहुशोषे पिबेत् सर्पिर्भुक्ता कल्याणकं महत् ।
हृदि प्रकुपिते वाते चांशुमत्याः पयो हितम् ॥ २८ ॥
हरीतकीवचारास्नासैन्धवं चाम्लवेतसम् ।
घृतमात्रासमायुक्तमपतन्त्रकनाशनम् ॥ २९ ॥
पलमर्द्धं पलञ्चैव रसो नस्यसुकुट्टितम् ।
हिङ्गु जीरकसिन्धूत्थैः सौवर्च्चलकटुत्रयैः ॥ ३० ॥
चूर्णितैर्माषकोन्मानैरवचूर्ण्य विलोडितम् ।
यथाग्नि भक्षितं प्रातरुबूकाथानुपानतः ॥ ३१ ॥
दिने दिने प्रयोक्तव्यं माषमेकं निरन्तरम् ।

वातरोगं निहन्त्याशु अर्द्दितं सापतन्त्रकम् ॥ ३२ ॥
एकाङ्गरोगिणे चैव तथा सर्वाङ्गरोगिणे ।
ऊरुस्तम्भे च गृध्रस्यां क्रिमिकोष्ठे विशेषतः ।
कटीपृष्ठामयं हन्यादुदरञ्च विशेषतः ॥ ३३ ॥

स्वल्परसोनपिण्डः ।

हन्ति प्राग्भोजनात् पीतं दध्यम्लं सवचोषणम् ।
अपतानकमन्योऽपि वातव्याधिक्रमो हितः ॥३४॥
वातघ्नैर्दशमूल्या च नरं कुब्जमुपाचरेत् ।
स्नेहैर्मांसरसैर्वापि प्रवृद्धं तं विवर्जयेत् ॥३५॥
पिप्पल्यादिरजस्तूनीप्रतितून्योः सुखाम्बुना ।
पिबेद्वा स्नेहलवणं सघृतं क्षारहिङ्गु वा ॥३६॥
आध्माने लङ्घनं पाणितापश्च फलवर्त्तयः ।
दीपनं पाचनञ्चैव वस्तिश्चाप्यत्र शोधनः ॥३७॥
प्रत्याध्माने तु वमनं लङ्घनं दीपनन्तथा ।
प्रत्यष्ठीलाष्ठीलिकयोरन्तर्विद्रधिगुल्मवत् ॥३८॥
दशमूलीबलारास्नागुडूचीविश्वभेषजम् ।
पिबेदेरण्डतैलेन गृध्रसीखञ्जपङ्गुषु ॥३९॥
शेफालिकादलैः क्वाथो मृद्वग्निपरिसाधितः ।
दुर्वारं गृध्रसीरोगं पीतमात्रं समुद्धरेत् ॥४०॥
पञ्चमूलकषायन्तु रुवूतैलं त्रिवृद्घृतम् ।
त्रिवृत्तैवाथवा युक्तं गृध्रसीगुल्मशूलनुत् ॥४१॥
तैलं घृतं वार्द्रकमातुलुङ्ग्या रसं सचुक्रं सगुड़ं पिबेद्वा ।
कट्यूरुपृष्ठत्रिकगुल्मशूलगृध्रस्युदावर्त्तहरः प्रदिष्टः ॥४२॥
तैलमेरण्डजं वापि गोमूत्रेण पिबेन्नरः ।

मासमेकं प्रयोगोऽयं गृध्रस्युरुग्रहापहः ॥४३॥
गोमूत्रैरण्डतैलाभ्यां कृष्णा पीता सुचूर्णिता ।
दीर्घकालोत्थितां हन्ति गृध्रसीं कफवातजाम् ॥४४॥
अश्नाति यो नरः सिद्धामेरण्डतैलसाधिताम् ।
वार्त्ताकुं गृध्रसीखिन्नः पूर्वामाप्नोत्यसौ गतिम् ॥४५॥
पिष्टैरण्डफलं क्षीरे सविश्वं वा फलं रवेः ।
पायसो भक्षितः सिद्धो गृध्रसीकटीशूलनुत् ॥४६॥
रास्नायास्तु बलश्चैकं कर्षान् पञ्च च गुग्गुलोः ।
सर्पिषा वटिकां कृत्वा खादेद्वा गृध्रसीहराम् ॥४७॥
गृध्रस्यार्त्तं नरं सम्यक् पाचनाद्यैर्विशोधितम् ।
ज्ञात्वा नरं प्रदीप्ताग्निं वस्तिभिः समुपाचरेत् ॥४८॥
नादौ वस्तिविधिं कुर्य्यात् यावदूर्द्धं न शुध्यति ।
स्नेहो निरर्थकस्तस्य भस्मन्येव हुतिर्यथा ॥४९॥
गृध्रस्यार्त्तस्य जङ्घायाः स्नेहस्वेदे कृते भृशम् ।
पद्भ्यां निर्मर्दितायाश्च सूक्ष्ममार्गेण गृध्रसीम् ॥५०॥
अवतार्य्याङ्गुलौ सम्यक् कनिष्ठायां शनैः शनैः ।
ज्ञात्वा समुन्नतं ग्रन्थिं कण्डरायां व्यवस्थितम् ॥५१॥
तं शस्त्रेण विदार्य्याशु प्रवालाङ्कुरसन्निभम् ।
समुद्धृत्याग्निना दग्ध्वा लिम्पेद्यष्ट्याह्वचन्दनैः ॥५२॥
विध्येच्छिरामिन्द्रवस्तेरधस्ताच्चतुरङ्गुलेः ।
यदि नोपशमं गच्छेद्दहेत्पादकनिष्ठिकाम् ॥५३॥
तगरस्य शिफामार्द्रां पिष्ट्वा तक्रेण यः पिबेत् ।
वह्नर्णानिलरोगार्त्तः स क्षणादेव मुच्यते ।
दशमूलीकषायेण पिबेद्वा नागराम्भसा ॥५४॥

कटिशूलेषु सर्वेषु तैलमेरण्डसम्भवम्।
विश्वाच्यां खञ्जपङ्ग्वोश्च दाहे हर्षे च पादयोः ॥५५॥
क्रोष्टुशीर्षविकारे च विकारे वातकण्टके।
शिरां यथोक्तां निर्विध्य चिकित्सा वातरोगनुत् ॥५६॥
गुग्गुलुं क्रोष्टुशीर्षे तु गुडूचीत्रिफलाम्भसा।
चीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारकम् ॥५७॥
रक्तावसेचनं कुर्य्यादभीक्ष्णं वातकण्टके।
पिबेदेरण्डतैलं वा दहेत्सूचीभिरेव वा ॥५८॥
खल्ल्यां स्निग्धाम्ललवणैः स्वेदमर्द्दोपनाहनम्।
पृथक् पलांशा त्रिफला पिप्पली चेति चूर्णितम् ॥५९॥
दशमूलाम्बुना भाव्यं त्वगेलार्द्ध पलान्वितम्।
दत्त्वा पलानि पञ्चैव गुग्गुलोर्वटकीकृतः ॥६०॥
एष मांसरसाभ्यासाद्वातरोगान् विशेषतः।
हन्ति सन्ध्यस्थिमज्जस्थान् वृत्रमिन्द्राशनिर्यथा ॥६१॥
भाव्यद्रव्यसमं क्वाथ्यं क्वाथोऽष्टांशस्तु तेन च।
आर्द्रं यावद्दिनं भाव्यं सप्ताहं भावनाविधिः ॥६२॥

आदित्यपाकगुग्गुलुवटकः।

आद्वाश्वगन्धाहवुषागुडूचीशतावरीगोक्षुरवृद्धदारकम्।
रास्नाशताह्वासशटीयमानीसनागराश्चेति समैश्च चूर्णम् ॥६३॥

तुल्यं भवेत् कौशिकमत्र मध्ये
देयं तथा सर्पिरतोऽर्द्धभागम्।
अर्द्धाचमात्रं त्वथ तत्प्रयोगात्
कृत्वानुपानं सुरयाथ यूषैः ॥६४॥
मद्येन वा कोष्णजलेन वाथ

क्षीरेण वा मांसरसेन वापि ।
कटीग्रहे गृध्रसि बाहुपृष्ठे
हनुग्रहे जानुनि पादयुग्मे ॥६५॥
सन्धिस्थिते चास्थिगते च वाते
मज्जागते स्नायुगते च कुष्ठे ।
रोगान् जयेद्वातकफानुविद्धान्
वातेरितान् हृद्ग्रहयोनिदोषान् ॥६६॥
भग्नास्थिविद्धेषु च खञ्जवाते
त्रयोदशाङ्गं प्रवदन्ति तज्ज्ञाः ॥६७॥
त्रयोदशाङ्गगुग्गुलुः ।

जित्वा वरकमग्रे तु वाते वातहरं हितम् ।
अन्नावृते तदुल्लेखो दीपनं पाचनं लघु ॥६८॥
सुप्तिवाते त्वसृङ्मोक्षं कारयेद् बहुशो भिषक् ।
दिह्याच्च लवणागारधूमैस्तैलविमर्दितैः ॥६९॥
सर्पिस्तैलवसामज्जपानाभ्यञ्जनवस्तयः ।
स्वेदाः स्निग्धानिवातञ्च स्थानं प्रावरणानि च ॥७०॥
रसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च ।
बृंहणं यत् तु तत् सर्वं प्रशस्तं वातरोगिणाम् ॥७१॥
पटोलपालकैर्यूषो वृष्यो वातहरो लघुः ।
वार्त्ताककृतो यूषः परं वातविनाशनः ॥७२॥
बलायाः पञ्चमूलस्य दशमूलस्य वा रसे ।
अजाशीर्षाम्बुजानूपक्रव्यादपि शितैः पृथक् ॥७३॥
साधयित्वा रसान् स्निग्धान् दध्यम्लव्योषसंस्कृतान् ।
भोजयेद्वातरोगार्त्तं तैलक्तलवणैर्नरम् ॥७४॥

पञ्चमूलीबलासिद्धं क्षीरं वातामये हितम्।
वाजिगन्धाबलारास्नो दशमूलीमहौषधम्।
द्वे गृध्रनख्यौ रास्ना च गणो मारुतनाशनः॥ ७५॥

कोलं कुलत्थं सुरदारुरास्ना-
माषा उमातैलफलानि कुष्ठम्।
वचा शताह्वे यवचूर्णमम्ल-
मुष्णानि वातामयिनां प्रदेहः॥ ७६॥

आनूपवेशवारोष्णप्रदेहो वातनाशनः।
निरस्थिपिशितं पिष्टं स्विन्नं गुडघृतान्वितम्॥७७॥
कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः।
काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः॥ ७८॥
सानूपमांसः सुस्विन्नः सर्वस्नेहसमन्वितः।
सुखोष्णः स्पष्टलवणः साल्वनः परिकीर्त्तितः॥ ७९॥
तेनोपनाहं कुर्वीत सर्वदा वातरोगिणाम्।
वातघ्नो भद्रदार्वादिः काकोल्यादिस्तु सौश्रुतः॥८०॥
मांसेनात्रौषधं तुल्यं यावताम्लेन चाम्लता।
पट्टीस्यात् स्वेदनार्थञ्च काञ्चिकाद्यम्लमिष्यते॥८१॥
चतुःस्नेहोऽत्र तावान् स्यात् सुस्विन्नत्वं यतो भवेत्।
समस्तं वर्गमर्द्धं वा यथालाभमथापि वा।
प्रयुञ्जीतेति वचनं सर्वत्र गणकर्मणि॥ ८२॥

साल्वनस्वेदः।

अश्वगन्धाकषाये च कल्के क्षीरचतुर्गुणम्।
घृतं पक्वन्तु वातघ्नं वृष्यं मांसविवर्द्धनम्॥ ८३॥

अश्वगन्धाघृतम्।

दशमूलस्य निर्यूहे जीवनीयैः पलोन्मितैः ।
क्षीरेण च घृतं पक्वं तर्पणं पवनार्त्तिनुत् ।
क्वाथोऽत्र त्रिगुणः सर्पिःप्रस्थः साध्यः पयःसमः ॥ ८४॥

दशमूलघृतम् ।

आजं चर्मविनिर्मुक्तं त्यक्तशृङ्गखुरादिकम् ।
पञ्चमूलीद्वयस्यैव जलद्रोणे विपाचयेत् ॥ ८५ ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
जीवनीयैः सकल्काद्यैः क्षीरस्यैव शतावरीम् ॥ ८६ ॥
छागलाद्यमिदं नाम्ना सर्ववातविकारनुत् ।
अर्दिते कर्णशूले च बाधिर्य्ये मूकमिन्मिने ॥ ८७ ॥
जड़गद्गदपङ्गूनां खञ्जे गृध्रसीकुब्जयोः ।
अपतानेऽपतन्त्रे च सर्पिरेतत् प्रशस्यते ॥ ८८ ॥
द्रोणे द्रव्यतुलाम्बुल्या स्याच्छागदशमूलयोः ।
पृथक् तुलार्द्धं पथ्याह्वद्वयं देयं द्विधोक्तितः ॥ ८९ ॥

छागलाद्यं घृतम् ।

एलामुराशरलशैलजदारुकौन्ती-
चण्डाशटीनलदचम्पकहेमपुष्पम् ।
स्थौणेयगन्धरसपूतिदलामृणाल-
श्रीवासकुन्दुरुनखाम्बुवराङ्गकुष्ठम् ॥ ९० ॥
कालीयकं जलदकर्कटचन्दनश्रीः
जात्याः फलं सविकसं स[illegible]ङ्कुमञ्च ।
पृक्कातुरुष्कलघुलाभतया विनीय
तैलं बलाक्वथनदुग्धयुतञ्च दध्ना । ९१ ॥
[illegible] पचेत् तु हितमेतदुदाहरान्त

वातामयेषु बलवर्णवपुःप्रकारि ॥ ९२ ॥

एलादितैलम्।

बलानिःक्वाथकल्काभ्यां तैलपक्वं पयोऽन्वितम्।
सर्ववातविकारघ्नमेवं श्रीरीयपाचितम् ॥ ९३ ॥

बलाश्रीरीयतैले।

बलामूलकषायस्य दशमूलीकृतस्य च।
यवकोलकुलत्थस्य क्वाथस्य पयसा तथा ॥ ९४ ॥
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः।
पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ॥ ९५ ॥
तथागुरुसर्ज्जरसं सरलं देवदारु च।
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुशारिवाम् ॥ ९६ ॥
मांसीशैलेयकं पत्रं तगरं शारिवां वचाम्।
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥ ९७ ॥
तत्साधुसिद्धं सौवर्णे राजते मृण्मयेऽपि वा।
प्रक्षिप्य कलसे सम्यक् सुनिगुप्तं निधापयेत् ॥ ९८ ॥
बलातैलमिदं नाम्ना सर्ववातविकारनुत्।
यथाबलमथोमात्रां सूतिकायै प्रदापयेत् ॥ ९९ ॥
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान्।
क्षीणवाते मर्म्महतेऽभिहते मथितेऽथवा।
भग्ने श्रमाभिपन्ने च सर्वथैवोपयोजयेत् ॥ १०० ॥
सर्वानाक्षेपकादींश्च वातव्याधीन् व्यपोहति।
हिक्काकासमधीमन्थं गुल्मश्वासं सुदुस्तरम् ॥ १०१ ॥
षण्मासानुपयुज्यैतदन्त्रवृद्धिमपोहति।
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ॥ १०२ ॥

एतद्धि राज्ञा कर्त्तव्यं राजमात्राश्च ये नराः ।
सुखिनः सुकुमाराश्च बलिनश्चापि ये नराः ॥ १०३ ॥

बलातैलम् ।

विल्वाग्निमन्थश्योणाकपाटलापारिभद्रकः ।
प्रसारण्यश्वगन्धा च वृहती कण्टकारिका ॥१०४॥
बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा ।
एषां दशपलान् भागान् चतुर्द्रोणेऽम्भसः पचेत् ॥१०५॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् ।
शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥१०६॥
चन्दनं तगरं कुष्ठमेलापर्णीचतुष्टयम् ।
रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥१०७॥
एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत् ।
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ॥१०८॥
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम् ।
पाने वस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते ॥१०९॥
अश्वो वा वातसंभग्नो गजो वा यदि वा नरः ।
पङ्गुलः पीठसर्पी च तैलेनानेन सिध्यति ॥११०॥
अधोभागे च ये वाताः शिरोमध्यगताश्च ये ।
दन्तशूले हनुस्तम्भे मन्यास्तम्भे गलग्रहे ॥१११॥
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला ।
क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ॥११२॥
वधिरा लल्लजिह्वाश्च मन्दमेधस एव च ।
अल्पप्रजा च या नारी या च गर्भं न विन्दति ॥११३॥
वातार्त्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा ।

एतत् तैलवरं तेषां नाम्ना नारायणं स्मृतम्।
तगरं नतमत्र स्यादभावे शीर्यलिङ्गोपड़ः ॥११४॥

नारायणं तैलम्।

शतावरी चांशुमती पृश्निपर्णी शटी वरा।
एरण्डस्य च मूलानि बृहत्योः पूतिकस्य च ॥११५॥
गवेधुकस्य मूलानि तथा सहचरस्य च।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥११६॥
पादावशेषे पूते च गर्भं चैनं समावपेत्।
पुनर्नवावचादारुशताह्वाचन्दनागुरु ॥११७॥
शैलेयं तगरं कुष्ठमेलामांसी स्थिता बला।
अश्वाह्वासैन्धवं रास्नापलार्द्धानि च पेषयेत् ॥११८॥
गव्याजपयसः प्रस्थौ द्वौ द्वावत्र प्रदापयेत्।
शतावरीरसप्रस्थं तैलप्रस्थं विपाचयेत् ॥११९॥
अस्य तैलस्य सिद्धस्य शृणु वीर्य्यमतःपरम्।
अश्वानां वातभग्नानां कुञ्जराणां नृणान्तथा ॥१२०॥
तैलमेतत् प्रयोक्तव्यं सर्ववातनिवारणम्।
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढ़ो भवेत् ॥१२१॥
गर्भमश्वतरी विन्देत् किं पुनर्मानुषी तथा।
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम् ॥१२२॥
अपचीं गण्डमालाञ्च वातरक्तं हनुग्रहम्।
कामलां पाण्डुरोगञ्च अश्मरीञ्चापि नाशयेत् ॥१२३॥
तैलमेतद् भगवता विष्णुना परिकीर्त्तितम्।
नारायणमिति ख्यातं वातान्तकरणं परम् ॥ १२४ ॥

महानारायणं तैलम्।

शतं पक्त्वाश्वगन्धाया जलद्रोणेऽथ शेषितम् ।
विस्राव्य विपचेत् तैलं क्षीरं दत्त्वा चतुर्गुणम् ॥१२५॥
कल्कैर्मृणालशालूकविसकिञ्जल्कमालती ।
पुष्पैर्स्त्रीविरमधुकशारिवापद्मकेशरैः ॥ १२६ ॥
मेदापुनर्नवाद्राक्षामञ्जिष्ठाबृहतीद्वयैः ।
एलैलवालुत्रिफलामुस्तचन्दनपद्मकैः ॥ १२७ ॥
पक्वं रक्ताश्रयं वातं रक्तपित्तमसृग्दरम् ।
हन्यात् पुष्टिबलं कुर्य्यात् कृशानां मांसवर्द्धनम् ॥१२८॥
रेतोयोनिविकारघ्नं प्राणशोषाप्रकर्षणम् ।
षण्डानपि वृषान् कुर्य्यात् पानाभ्यङ्गानुवासनैः ॥१२९॥

अश्वगन्धातैलम् ।

मूलकस्वरसं तैलं क्षीरदध्यम्लकाञ्जिकम् ।
तुल्यं विपाचयेत् कल्कैर्बलाचित्रकसैन्धवैः । १३० ॥
पिप्पल्यातिविषारास्नाचविकागुरुचित्रकैः ।
भल्लातकवचाकुष्ठश्वदंष्ट्राविश्वभेषजैः ॥ १३१ ॥
पुष्कराह्वशटीबिल्वशताह्वानतदारुभिः ।
तत्सिद्धं पीतमत्युग्रान् हन्ति वातात्मकान् गदान् ॥१३२॥

मूलकाद्यं तैलम् ।

रसोनकल्कस्वरसेन पक्वं
तैलं पिबेद्यस्त्वनिलामयार्त्तः ।
तस्याशु नश्यन्ति हि वातरोगा
ग्रन्था विशाला इव दुर्गृहीताः ॥ १३३ ॥

रसोनतैलम् ।

केतकीनागबलातिबलानां यद्बहुलेन रसेन विपक्वम् ।

तैलमनल्पतुषोदकसिद्धं मारुतमस्थिगतं विनिहन्ति ॥१३४॥
अनल्पवचनात् तत्र तुल्ये क्वाथतुषोदके।
अकल्कोऽपि भवेत् स्नेहो यः साध्यः केवले द्रवे ॥१३५॥
केतक्याद्यं तैलम्।
द्वे पले सैन्धवात् पञ्च शुण्ठ्या ग्रन्थिकचित्रकात्।
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाढके ॥ १३६ ॥
आरणालात्पचेत् प्रस्थं तैलमेतैरपत्यदम्।
गृध्रस्युरुग्रहार्शोऽर्त्तिसर्ववातविकारनुत् ॥ १३७ ॥
सैन्धवाद्यं तैलम्।
तैलं सङ्कुचितेऽभ्यङ्गे माषसैन्धवसाधितम्।
बाहुशीर्षगते नस्यं पानञ्चोत्तरभक्तिकम्।
क्वाथोऽत्र माषनिष्पाद्यः सैन्धवं कल्कमेव च ॥ १३८ ॥
स्वल्पमाषतैलम्।
माषात्मगुप्तातिविषोरुबूकरास्नाशताह्वालवणैः सुपिष्टैः।
चतुर्गुणे माषबलाकषाये तैलं कृतं हन्ति च पक्षवातम्॥१३९
माषतैलम्।
माषप्रस्थं समावाप्य पचेत् सम्यक् जलाढके।
पादशेषे रसे तस्मिन् क्षीरं दद्याच्चतुर्गुणम् ॥१४०॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसम्मितम्।
जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम् ॥१४१॥
रास्नात्मगुप्तामधुकं बलाव्योषं त्रिकण्टकम्।
पक्षाघातार्दिते वाते कर्णशूले सुदारुणे ॥१४२॥
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे।
हस्तकम्पे शिरःकम्पे विश्वच्यामवबाहुके ॥१४३॥

अस्तं कलायखञ्जे च पानाभ्यञ्जनवस्तिभिः ।
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥१४४॥

माषतैलम् ।

माषातसीयवकुरण्टककण्टकारी-
गोकण्टकाटुण्टुकजटाकपिकच्छुतोयैः ।
कार्पासकास्थिशणवीजकुलत्थकोल-
क्वाथेन वस्तपिशितस्य रसेन चापि ॥१४५॥
शुण्ठ्या समागधिकया शतपुष्पया च
सैरण्डमूलसपुनर्नवया सरण्या ।
रास्नाबलामृतलताकटुकैर्विपक्वं
माषाख्यमेतदवबाहुहरञ्च तैलम् ॥१४६॥
अर्द्धाङ्गशोषमपतानकमाढ्यवात-
माक्षेपकं सभुजकम्पशिरःप्रकम्पम् ।
नस्येन वस्तिविधिना परिषेचनेन
हन्यात् कटीजघनजानुरुजश्च सर्वाः ॥१४७॥

माषतैलम् ।

माषक्वाथे बलाक्वाथे रास्नाया दशमूलजे ।
यवकोलकुलत्थानां छागमांसभवे पृथक् ॥ १४८ ॥
प्रस्थे तैलस्य च प्रस्थं क्षीरं दत्त्वा चतुर्गुणम् ।
रास्नात्मगुप्तासिन्धूत्थशताह्वैरण्डमुस्तकैः ॥ १४९ ॥
जीवनीयैर्बलाव्योषैः पचेदक्षसमैर्भिषक् ।
हस्तकम्पे शिरःकम्पे बाहुशोषेऽवबाहुके ॥१५०॥
बाधिर्य्ये कर्णशूले च कर्णनादे च दारुणे ।
विश्वाचामर्दितं कुब्जे गृध्रस्यामपतानके ॥ १५१ ॥

वस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत् ।
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ।
क्वाथप्रस्थाः षडेवात्र विभज्यन्ते न कीर्त्तिताः ॥१५२॥

वृहन्माषतैलम् ।

माषस्यार्द्धाढ़कं दत्त्वा तुलार्द्धं दशमूलतः ।
पलानि छागमांसस्य त्रिंशद्द्रोणेऽम्भसः पचेत् ॥१५३॥
पूतशीते कषाये च चतुर्थांशावतारिते ।
प्रस्थञ्च तिलतैलस्य पयो दद्याच्चतुर्गुणम् ॥ १५४ ॥
आत्मगुप्तोरुवूकश्च शताह्वा लवणत्रयम् ।
जीवनीयानि मञ्जिष्ठा चव्यचित्रककट्फलम् ॥ १५५ ॥
सव्योषं पिप्पलीमूलं रास्नामधुकसैन्धवम् ।
देवदार्वमृता कुष्ठं वाजिगन्धा वचा शटी ॥ १५६ ॥
एतैरक्षसमैः कल्कैः साधयेन्मृदुनाग्निना ।
पक्षाघातार्द्दिते वाते वाधिर्य्ये हनुसंग्रहे ॥ १५७ ॥
कर्णनादे शिरःशूले तिमिरे च त्रिदोषजे ।
पाणिपादशिरोग्रीवाभ्रमणे मन्दचंक्रमे ॥ १५८ ॥
कलायखञ्जपाङ्गुल्ये गृध्रस्यामववाहुके ।
पाने वस्तौ तथाभ्यङ्गे नस्ये कर्णाक्षिपूरणे ।
तैलमेतत् प्रशंसन्ति सर्ववातरुजापहम् ॥ १५९ ॥

महामाषतैलम् ।

द्विपञ्चमूलीं निःक्वाथ्य तैलात् षोड़शभिर्गुणैः ।
माषाढ़कं साधयित्वा तन्निर्यूहं चतुर्गुणम् ॥१६०॥
ग्राहयित्वा तु विपचेत् तैलप्रस्थं पयःसमम् ।
कल्कार्थञ्च समावाप्य भिषग् द्रव्याणि बुद्धिमान् ॥१६१॥

अश्वगन्धां शटीं दारुबलां रास्नां प्रसारणीम् ।
कुष्ठं परूषकं भार्गीं द्वे विदार्यौ पुनर्नवाम् ॥१६२॥
मातुलुङ्गफलाजाज्यौ रामठं शतपुष्पिकाम् ।
शतावरीगोक्षुरकं पिप्पलीमूलचित्रकम् ॥१६३॥
जीवनीयगणं सर्वं संहृत्यैव ससैन्धवम् ।
तत् साधुसिद्धं विज्ञाय माषतैलमिदं महत् ॥ १६४॥
वस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत् ।
पक्षाघाते हनुस्तम्भे अर्दिते सापतन्त्रके ॥१६५॥
अववाहुकविश्वच्योः खञ्जपङ्गुलयोरपि ।
हनुमन्याग्रहे चैवमधिमन्थे च वातिके ॥ १६६ ॥
शुक्रक्षये कर्णनादे कर्णशूले च दारुणे ।
कलायखञ्जशमने भेषज्यमिदमादिशेत् ॥ १६७ ॥
दशमूलाढ़कं द्रोणे निःक्वाथ्य पादिको भवेत् ।
क्वाथश्चतुर्गुणस्तैलान्माषक्वाथेऽप्ययं विधिः ॥ १६८ ॥

महामाषतैलम् ।

ग्राम्यानूपौदकानान्तु भिन्नास्थीनि पचेत् जले ।
तं स्नेहं दशमूलस्य कषायेण पुनः पचेत् ॥१६९॥
जीवकर्षभकास्फोताविदारीकपिकच्छुभिः ।
वातघ्नैर्जीवनीयैश्च कल्कैर्द्विक्षीरभागिकम् ॥१७०॥
तत् सिद्धं नावनाभ्यङ्गात् तथा पानानुवासनात् ।
शिरःपार्श्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम् ॥१७१॥
ये स्युः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये ।
बलपुष्टिकरस्तेषामेतत्स्यादमृतोपमम् ॥ १७२ ॥

मज्जस्नेहः ।

प्रस्थः स्यात्त्रिफलायास्तु कुलत्थकुडवद्वयम् ।
कृष्णागन्धालगाढ़क्योः पृथक् पञ्चपलम्भवेत् ॥१७३॥
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम् ।
जलद्रोणे पचेत् पादशेषं प्रस्थोन्मितं पृथक् ॥ १७४ ॥
सुरारणालदध्यम्लसौवीरकतुषोदकम् ।
कोलदाडिमवृक्षाम्लरसं तैलं घृतं वसाम् ॥ १७५ ॥
मज्जानञ्च पयश्चैव जीवनीयपलानि षट् ।
कल्कं दत्त्वा महास्नेहं सम्यगेनं विपाचयेत् ॥१७६॥
शिरामज्जास्थिगे वाते सर्वाङ्गैकाङ्गरोगिषु ।
वेपनाक्षेपशूलेषु तमभ्यङ्गं प्रदापयेत् ॥ १७७ ॥

चतुःस्नेहः ।

प्रसारणीशतं क्षुण्णं पचेत् तोयार्मणे शुभे ।
पादशिष्टे समं तैलं दधि दद्यात् सकाञ्जिकम् ॥१७८॥
द्विगुणञ्च पयो दत्त्वा कल्कान् द्विपलिकांस्तथा ।
चित्रकं पिप्पलीमूलं मधुकं सैन्धवं वचाम् ॥१७९॥
शतपुष्पां देवदारुरास्नां वारणपिप्पलीम् ।
प्रसारण्याश्च मूलानि मांसीभल्लातकानि च ॥ १८० ॥
पचेन्मृदग्निना तैलं वातश्लेष्मामयान् जयेत् ।
अशितिं नरनारीस्थान् वातरोगानपोहति ॥१८१॥
कुब्जं स्तिमितपङ्गुत्वं गृध्रसीखुडकार्दितम् ।
हनुपृष्ठशिरोग्रीवास्तम्भं वापि नियच्छति ॥१८२॥

कुब्जप्रसारणीतैलम् ।

प्रसारण्यास्तुलामश्वगन्धाया दशमूलतः ।
तुलां तुलां पृथग्वारि द्रोणे पादांशशेषिते ॥ १८३ ॥

तैलाढ़कं चतु:क्षीरं दधितुल्यं द्विकाञ्जिकम् ।
द्विपलैर्ग्रन्थिकक्षारप्रसारण्यग्निसैन्धवैः ॥ १८४ ॥
समञ्जिष्ठाग्नियष्ट्याह्वैः पलिकैर्जीवनीयकैः ।
शुण्ठ्याः पञ्च पलं दत्त्वा विंशत् भल्लातकानि च ॥१८५॥
पचेद् वस्त्यादिना वातं हन्ति सन्धिशिरास्थितम्
पुंस्त्वोत्साहस्मृतिप्रज्ञाबलवर्णाग्निवृद्धये ।
प्रसारणीयं त्रिशती श्रेष्ठं सौवर्चलं त्विह ॥१८६॥

त्रिशतीप्रसारणीतैलम् ।

समूलपत्रामुत्पाद्य शरत्काले प्रसारणीम् ।
शतं ग्राह्यं सहचराच्छतावर्य्याः शतन्तथा ॥१८७॥
बलात्मगुप्ताश्वगन्धाकेतकीनां शतं शतम् ।
पचेच्चतुर्गुणे तोये द्रवैस्तैलाढ़कं भिषक् ॥ १८८ ॥
मस्तुमांसरसं चुक्रं पयश्चाढ़कमाढ़कम् ।
दध्याढ़कसमायुक्तं पाचयेन्मृदुनाग्निना ॥ १८९ ॥
द्रव्याणान्तु प्रदातव्या मात्रा चार्द्धपलांशिका ।
तगरं मदनं कुष्ठं केशरं मुस्तकं त्वचम् ॥ १९० ॥
रास्ना सैन्धवपिप्पल्यौ मांसी मञ्जिष्ठयष्टिका ।
तथा मेदा महामेदा जीवकर्षभकौ पुनः ।
शतपुष्पा व्याघ्रनखं शुण्ठी देवाह्वमेव च ॥ १९१ ॥
काकोलीक्षीरकाकोलीवचाभल्लातकन्तथा ।
पेषयित्वा समानेतान् साधनीया प्रसारणी ॥ १९२॥
नातिपक्वं न हीनञ्च सिद्धं पूतं निधापयेत् ।
यत्र यत्र प्रदातव्या तन्मे निगदतः शृणु ॥ १९३ ॥
कुब्जानामथ पङ्गूनां वामनानां तथैव च ।

यस्य शुष्यति चैकाङ्गं ये च भग्नास्थिसन्धयः ॥१९४॥
वातशोणितदुष्टानां वातोपहतचेतसाम्।
स्त्रीषु प्रक्षीणशुक्राणां वाजीकरणमुत्तमम् ॥१९५॥
वस्तौ पाने तथाभ्यङ्गे नस्ये चैव प्रदापयेत्।
प्रयुक्तं शमयत्याशु वातजान् विविधान् गदान् ॥१९६॥

सप्तशतिकाप्रसारणी।

शाखामूलदलैः प्रसारणीतुलास्तिस्रः कुरुल्टात् तुले
छिन्नायाश्च तुले तुले रवुकतो रास्नाशिरीषात् तुला।
देवाह्वाश्च सकेतकाद्दशते निःक्वाथ्य कुम्भांशिके
तोये तैलघटं तुषाम्बुकलसौ दत्त्वाढ़कं मस्तुनः ॥१९७॥
शुक्ताच्छागरसाद्दधेक्षुरसतः क्षीराच्च दत्त्वाढ़कं
पृक्काकर्कटजीवकाद्यविकसाकाकोलिकाकच्छुरा।
सूक्ष्मैलाघनसारकुन्दसरलाकाश्मीरमांसीनखैः
कालीयोत्पलपद्मकाह्वयनिशाकक्कोलकग्रन्थिकैः ॥१९८॥
चाम्पेयाभयचोचपूगकटुकाजातीफलाभीरुभिः
श्रीवासामरदारुचन्दनवचाशैलेयसिन्धूद्भवैः।
तैलाम्बोदकटम्भराङ्घ्रिनलिकापृथ्वीरकचोरकैः
कस्तूरीदशमूलकेतकनतश्यामाश्वगन्धाम्बुभिः ॥१९९॥
कौन्तीतार्क्ष्यजशल्लकीफलबलघुश्यामाशताह्वामयैः
भल्लातत्रिफलाजकेशरमहाश्यामालवङ्गान्वितैः।
सव्योषैस्त्रिफलैर्महीयसि पचेन्मन्देन पात्रेऽग्निना
पानाभ्यञ्जनवस्तिनस्यविधिना तत् मारुतं नाशयेत् ॥२००॥
सर्वाङ्गार्द्धगतं तथावयवगं सन्ध्यस्थिमज्जान्वितम्
श्लेष्मोत्थानथ पैत्तिकांश्च शमयेन्नानाविधानामयान्।

धातून् बृंहयति स्थिरञ्च कुरुते पुंसां नवं यौवनं
वृद्धस्यापि बलं करोति सुमहद् वन्ध्यासु गर्भप्रदम् ॥२०१॥
पीत्वा तैलमिदं जरत्यपि सुतं सूतेऽमुना भूरुहाः
सिक्ताः ग्रीष्मसुपागताश्च फलिनः स्निग्धा भवन्ति स्थिराः।
भग्नाङ्गाः सुदृढ़ा भवन्ति मनुजा गावो हयाः कुञ्जराः ॥२०२

एकादशशतिकं प्रसारणीतैलम्।

समूलदलशाखायाः प्रसारण्याः शतत्रयम्।
शतमेकं शतावर्य्या अश्वगन्धाशतन्तथा ॥२०३॥
केतकीनां शतञ्चैकं दशमूलाच्छतं शतम्।
शतं वाट्यालकस्यापि शतं सहचरस्य च ॥२०४॥
जलद्रोणशतं दत्त्वा शतभागावशेषितम्।
ततस्तेन कषायेण कषायद्विगुणेन च ॥२०५॥
सुव्यक्तेनारनालेन दधिमण्डाढ़केन च।
क्षीरशुक्तेक्षुनिर्य्यासच्छागमांसरसाढ़कैः ॥२०६॥
तैलात् द्रोणं समायुक्तं दृढ़े पात्रे निधापयेत्।
द्रव्याणि यानि पेष्याणि तानि वक्ष्याम्यतः परम् ॥२०७॥
भल्लातकं नतं शुण्ठीपिप्पलीचित्रकं शटी।
वचाप्रृक्काप्रसारण्याः पिप्पल्या मूलमेव च ॥२०८॥
देवदारुशताह्वौ च सूक्ष्मैलात्वचशालकम्।
कुङ्कुमं मदमञ्जिष्ठातुरुष्कं नखिकागुरु ॥२०९॥
कर्पूरकुन्दुरुनिशालवङ्गध्यामचन्दनम्।
कक्कोलनलिकामुस्तं कालीयोत्पलपत्रकम् ॥२१०॥
शटीहरेणुशैलेयश्रीवासञ्च सकेतकम्।
त्रिफलाकच्छुराभीरुशरलापद्मकेशरम् ॥२११॥

प्रियङ्गुगौरनलदं जीवकाद्यं पुनर्नवा।
दग्धमूल्यश्वगन्धे च नागपुष्पं रसाञ्जनम् ॥२१२॥
कटुकाजातिपूगानां फलानि शुक्कीरसम्।
भागान् विपलिकान् हत्वा शनैर्मृद्वग्निना पचेत् ॥२१३॥
विस्तीर्णे सुदृढे पात्रे पाक्यैषा तु प्रसारणी।
प्रयोगः षड्विधश्चात्र रोगार्त्तानां विधीयते ॥२१४॥
अभ्यङ्गात्त्वग्गतं हन्ति पानात् कोष्ठगतं तथा।
भोजनात् सूक्ष्मनाडीस्थान् नस्यादूर्द्ध्वगतन्तथा ॥२१५॥
पक्वाशयगते वस्तिर्निरूहः सार्वकायिके।
एतद्धि वडवाश्वानां किशोराणां यथामृतम् ॥२१६॥
एतदेव मनुष्याणां कुञ्जराणां गवामपि।
अनेनैव च तैलेन शुष्यमाणा महाद्रुमाः ॥२१७॥
सिक्ताः पुनः प्ररोहन्ति भवन्ति फलशाखिनः।
वृद्धोऽप्यनेन तैलेन पुनश्च तरुणायते ॥२१८॥
न प्रसूते च या नारी सापि पीत्वा प्रसूयते।
अप्रजः पुरुषो यस्तु सोऽपि पीत्वा लभेत् सुतम् ॥२१९॥
अशीतिं वातजान् रोगान् पैत्तिकान् श्लैष्मिकानपि।
सन्निपातसमुत्थांश्च नाशयेत् चिप्रमेव तु ॥२२०॥
एतेनान्धकवृष्णीनां कृतं पुंसवनं महत्।
कृत्वा विष्णोर्बलिश्चापि तस्मैतत्प्रयोजयेत् ॥२२१॥
क्वाथे तुलार्द्धं रास्नायाः किलिमस्य च दीयते।
भल्लातकासहत्वे तु तत्स्थाने रक्तचन्दनम् ॥२२२॥
त्वक्पत्रं पद्ममधुरीकुष्ठचम्पकगैरिकाः।
ग्रन्थिकोषी मरुवकमधिकत्वेन दीयते ॥२२३॥

कर्पूरमदहानञ्च शुक्तीगन्धोदकक्रिया ।
द्रव्यशुद्धिः पाकविधिर्भाविप्रसारणीसमः ॥२२४॥
अष्टादशशतिकप्रसारणीतैलम् ।
शततयं प्रसारण्या हे च पीतसहाचरात् ।
अश्वगन्धैरण्डबला वरी रास्ना पुनर्नवा ॥२२५॥
केतकी दशमूलञ्च पृथक् त्वक् पारिभद्रकः ।
प्रत्येकमेषान्तु तुलातुलार्धं किलिमात् तथा ॥२२६॥
तुलार्धं स्याच्छिरीषाच्च लाचायाः पञ्चविंशतिः ॥२२७॥
पलानि लोध्राच्च तथा सर्वमेकत्र साधयेत् ।
जलपञ्चाढ़कशते सपादे तत्र शेषयेत् ॥२२८॥
द्रोणद्वयं काञ्जिकञ्च षड्विंशत्याढ़कोन्मितम् ।
चीरदध्नोः पृथक् प्रस्थान् दशमस्त्वाढ़कन्तथा ॥२२९॥
इक्षुरसाढ़कौ चैव छागमांसतुलात्रये ।
जलपञ्चचत्वारिंशत् प्रस्थान् पक्के तु शोषयेत् ॥२३०॥
सप्तदशरसप्रस्थान् मञ्जिष्ठाक्काथ एव च ।
कुडवोनाढ़कोन्मानद्रवैरेतैस्तु साधयेत् ॥ २३१॥
सुश्लवतिलतैलस्य द्रोणं प्रस्थेन संयुतम् ।
काञ्जिकं मानतो द्रोणं शुक्तेनात्र विधीयते ॥२३२॥
आद्य एभिर्द्रवैः पाकः कल्को भल्लातकं कणा ।
नागरं मरिचञ्चैव प्रत्येकं षट्पलोन्मितम् ॥२३३॥
भल्लातकासहत्वे तु रक्तचन्दनमुच्यते ।
पथ्याक्षधात्री सरलं शताह्वाककटी वचा ॥२३४॥
चोरपुष्पीशटीमुस्तं द्वयं पद्मञ्च सोत्पलम् ।
पिप्पलीमूलमञ्जिष्ठा साश्वगन्धा पुनर्नवा ॥२३५॥

दशमूलं समुदितं चक्रमर्द्दी रसाञ्जनम्।
गन्धद्वयं हरिद्रा च जीवनीयो गणस्तथा।
एषां त्रिपलिकैर्भागैराद्यः पाको विधीयते ॥२३६॥
देवपुष्पीवोलपत्रं शल्लकीरसशैलजे।
प्रियङ्गुक्षीरमधुरीमांसीदारुबलाबलम् ॥२३७॥
श्रीवासोनलिकाक्षोटिः सूक्ष्मैलाकुन्दुरुर्मुरा।
नखीत्रयश्च त्वक्पत्रीपमरापूतिचम्पकम् ॥२३८॥
मदनं रेणुकाष्टक्कामरुवश्च पलत्रयम्।
प्रत्येकं गन्धतोयेन द्वितीयः पाक इष्यते ॥२३९॥
गन्धोदकन्तु त्वक्पत्रीपत्रकोशीरमुस्तकम्।
प्रत्येकं सबलामूलं पलानि पञ्चविंशतिः ॥२४०॥
कुष्ठार्द्धभागोऽत्र जलप्रस्थास्तु पञ्चविंशतिः।
अर्द्धावशिष्टाः कर्त्तव्याः पाके गन्धाम्बुकर्मणि ॥२४१॥
गन्धाम्बुचन्दनाम्बुभ्यां तृतीयः पाक इष्यते ॥२४२॥
कल्कोऽत्र केशरं कुष्ठं त्वक्कालीयककुङ्कुमम्।
भद्रश्रियं ग्रन्थिपर्णं लताकस्तूरिका तथा ॥२४३॥
लवङ्गागुरुकक्कोलजातीकोषफलानि च।
एलालवङ्गच्छल्ली च प्रत्येकं त्रिपलोन्मितम् ॥२४४॥
कस्तूरीषट्पलाचन्द्रात्पलं सार्द्धञ्च गृह्यते।
वेधार्थञ्च पुनश्चन्द्रमदौ देयौ तथोन्मितौ ॥२४५॥
महाप्रसारणी सेयं राजभोग्या प्रकीर्त्तिता।
गुणान् प्रसारणीनान्तु वहत्येषा बलोत्तमात् ॥२४६॥
अत शुक्तिविधिर्मण्डः प्रस्थः पञ्चाढकोन्मितम्।
काञ्जिकं कुडवं दध्नो गुडप्रस्थोऽम्लमूलकात् ॥२४७॥

पलान्यष्टौ शोधितात्सूतात् पलषोड़शकन्तथा ।
कणाजीरकार्पासमधूकहरिद्रामरिचं पृथक् ॥२४८॥
द्विपलं भाविते भाण्डे घृतेनाष्टदिनस्थितम् ।
सिद्धं भवति तच्चूर्णं यदावतार्य्य गृह्यते ॥२४९॥
तदा देयं चतुर्जातं पृथक् कर्षत्रयोन्मितम् ।
पञ्चपल्लवतोयेन गन्धानां क्षालनन्तथा ॥२५०॥
शोधनञ्चापि संस्कारो विशेषश्चात्र वक्ष्यते ।
आम्रजम्बूकपित्थानां वीजपूरकविल्वयोः ॥२५१॥
गन्धकर्मणि सर्वत्र पत्राणि पञ्चपल्लवम् ।
चण्डीगोमयतोयेन यदि वा तिन्तिड़ीजलैः ॥२५२॥
नखं संक्वाथयेदेभिरलाभे मृण्मयेन तु ।
पुनरुद्धृत्य प्रक्षाल्य भर्जयित्वा निषेचयेत् ।
गुड़पथ्याम्बुना ह्येवं शुध्यते नात्र संशयः ॥२५३॥

इति नखशुद्धिः ।

गोमूत्रे चालम्बुपके पक्वा पञ्चदलोदके ।
पुनः सुरभितोयेन वाष्पस्वेदेन स्वेदयेत् ॥२५४॥
गन्धोशा शुध्यते ह्येवं रजनी च विशेषतः ।
मुस्तकन्तु मनाक् क्षुण्णं काञ्जिके त्रिदिनोषितम् ॥२५५॥
पञ्चपल्लवपानीयस्विन्नमातपशोषितम् ।
गुड़ाम्बुना सिच्यमानं भर्जयेच्चूर्णयेत् ततः ॥२५६॥
शाजशोभाञ्जनजलैर्भावयेच्चेति शुध्यति ।
काञ्जिके क्वथितं शैलं भृष्टापथ्यागुड़ाम्बुना ॥२५७॥
सिक्तं देवं पुनः पुष्पैर्विविधैरधिवासयेत् ।

यथालाभमपामार्गक्षाराद्यिःसरवेपितम् ॥२५८॥
बाष्पस्वेदेन संस्वेद्य पूतिं निर्लोमतां नयेत्।
दोलापक्वं पचेत्पश्चात्पञ्चपल्लववारिणि ॥२५९॥
खलः साधुमिवोत्पिष्य ततो निःस्नेहतां नयेत्।
आनयोभाञ्जनजलैर्भावयेच्च पुनः पुनः ॥२६०॥
शिग्रुमूले च केतक्याः पुष्पपत्रपुटे च तम्।
पचेदेवं विशुद्धः सन् मृगनाभिसमो भवेत् ॥२६१॥
तुरुष्कं मधुना भाव्यं काश्मीरञ्चापि सर्पिषा।
रुधिरेणायसं प्राज्ञैर्गोमूत्रैर्ग्रन्थिपर्णकम् ॥२६२॥
मधूदकेन मधुरीं पत्रकं तण्डुलाम्बुना।
ईषत्पाटलगन्धा तु दग्धा याति न भस्मताम् ॥२६३॥
पीता केतकगन्धा च लघुस्निग्धा मृगोत्तमा।
पक्वात् कर्पूरतः प्राहुरपक्वं गुणवत्तरम् ॥२६४॥
तत्रापि स्याद्यद्भुरं स्फटिकाभं तदुत्तमम्।
पक्वञ्च सदलं स्निग्धं हरितद्युति चोत्तमम् ॥२६५॥
भङ्गे मनागपि न चेन्निपतन्ति ततः कणाः।
मृगशृङ्गोपमं कुष्ठं चन्दनं रक्तपीतकम् ॥२६६॥
काचतुण्डाकृतिः स्निग्धो गुरुश्चैवोत्तमो गुरुः।
स्निग्धाल्पकेशरस्त्वस्रं शालिजो वृत्तमांसलः ॥२६७॥
मुरा पीता वरा प्रोक्ता मांसी पिङ्गजटाकृतिः।
रेणुका मुद्गसंस्थाना शस्तमानूपजं घनम् ॥२६८॥
जातीफलं सशब्दञ्च स्निग्धं गुरु च शस्यते।
एला सूक्ष्मफला श्रेष्ठा प्रियङ्गुः श्यामपाण्डुरा ॥२६९॥
नखमश्वखुरं हस्तिकर्णञ्चैवात्र शस्यते।

एतेषामपरेषाञ्च नवता प्रबलो गुणः ॥२७०॥

महाराजप्रसारणीतैलम् ।

जिङ्गीचोरकदेवदारुसरलं व्याघ्रीवचाचेलक-
त्वक्पत्रैः सह गन्धकपत्रकशटीपथ्याचधात्रीघनैः ।
एतैः शोधितसंस्कृतैः पलयुगैत्याख्यातया संख्यया
तैलप्रस्थमवस्थितैः स्थिरमिति कल्कैः पचेद्गान्धिकम् ॥२७१

मांसीमुरादमनचम्पकसुन्दरीत्वक्-
ग्रन्थाम्बुकुष्ठवचकैर्द्वि पलैः सपृक्कैः ।
श्रीवासकुन्दुरुनखीनलिकामिषीणां
प्रत्येकतः पलमुपाय्य पुनः पचेत् तु ॥२७२॥

एलालवङ्गचलचन्दनजातिपूतिः
कक्कोलकागुरुलताघुसृणैः पलार्द्धैः ।
कस्तूरिकाचसहितामलदीप्तियुक्तैः
पक्का तु मन्दशिखिनैव महासुगन्धम् ॥२७३॥

पञ्चद्विकेन चार्द्धेन मदात् कर्पूरमिष्यते ।
कर्पूरमदयोरर्द्धं पत्रकल्कादिहेष्यते ॥२७४॥

पक्कपूतेऽप्युष्ण एव सम्यक् पेषणवर्त्तितम् ।
दीयते गन्धवृद्ध्यर्थं पत्रकल्कं तदुच्यते ॥२७५॥

प्रागुक्तौ शुद्धसंस्कारौ गन्धानामिह तैः पुनः ।
द्विगुणैर्लक्ष्मीविलासः स्यादयं तैलसत्तमः ॥२७६॥

पञ्चपत्राम्बुना चाद्यो द्वितीयो गन्धवारिणा ।
तृतीयोऽपि च तेनैव पाको वा धूपिताम्बुना ॥२७७

महासुगन्धितैललक्ष्मीविलासतैले ।

इति वातव्याधिचिकित्सा ।

## अथ वातरक्ताधिकारः।

वाह्यं लेपाभ्यङ्गसेकौ पानाद्यैर्वातशोणितम्।
विरेकस्थापनस्नेहपानैर्गम्भीरमाचरेत् ॥१॥
द्वयोर्मुञ्चेदसृक् शृङ्गसूच्यलावूजलौकसा।
देशाद् देशं व्रजेत् स्राव्यं शिराभिः प्रच्छनेन वा।
अङ्गग्लानौ च न स्राव्यं रूक्षे वातोत्तरे च यत् ॥२॥
अमृतनागरधन्याककर्षत्रयेण पाचनं सिद्धम्।
जयति सरक्तं वातं सामं कुष्ठान्यशेषाणि ॥३॥
वत्सादन्युद्भवः क्वाथः पीतो गुग्गुलुसंयुतः।
समीरणसमायुक्तं शोणितं संप्रसाधयेत् ॥४॥
वासागुडूचीचतुरङ्गुलानामेरण्डतैलेन पिवेत् कषायम्।
क्रमेण सर्वाङ्गजमप्यशेषं जयेदसृक् वातभवं विकारम् ॥५॥
लीढ्वा मुण्डितिकाचूर्णं मधुसर्पिःसमान्वितम्।
छिन्नाक्वाथं पिवन् हन्ति वातरक्तं सुदुस्तरम् ॥६॥
तिस्रोऽथवा पञ्च गुडेन पथ्या
जग्ध्वा पिवेच्छिन्नरुहाकषायम्।
तद्वातरक्तं शमयत्युदीर्ण-
माजानुसंभिन्नमपि द्व्यवश्यम् ॥७॥
घृतेन वातं सगुड़ा विवद्धं पित्तं सिताढ्या मधुना कफञ्च।
वातासृगुग्रं रुवुतैलमिश्रा शुण्ठ्यामवातं शमयेद् गुडूची ॥८॥
गुडूच्याः स्वरसं कल्कं चूर्णं वा क्वाथमेव वा।
प्रभूतकालमासेव्य मुच्यते वातशोणितात् ॥९॥
द्विमूलीशृतं क्षीरं सद्यः शूलनिवारणम्।
परिषेकोऽनिलप्राये तद्वत् कोष्णेन सर्पिषा ॥१०॥

पटोलकटुकाभीरुत्रिफलामृतसाधितम् ।
क्वाथं पीत्वा जयेज्जन्तुः सदाहं वातशोणितम् ॥११॥
गोधूमचूर्णाजपयो घृतञ्च सच्छागदुग्धो रुबुवीजकल्कः ।
लेपे विधेयं शतधौतसर्पिः सेके पयश्चाविकमेव शस्तम् ॥१२॥
लेपः पिष्टास्तिलास्तद्वद् भृष्टाः पयसि निर्वृताः ।
कटुकामृतयष्ट्याह्व शुण्ठीकल्कं समाक्षिकम् ॥१३॥
गोमूत्रपीतं जयति सकफं वातशोणितम् ।
धात्रीहरिद्रामुस्तानां कषायो वा कफाधिके ॥१४॥
कोकिलाचामृताक्वाथे पिबेत् कृष्णां कफाधिके ।
पथ्याभोजो त्रिसप्ताहान्मुच्यते वातशोणितात् ॥१५॥
कफरक्तप्रशमनं हृद्यं गुडघृतं स्मृतम् ।
संसर्गेषु यथोद्रेकं मिश्रं वा प्रतिकारयेत् ॥१६॥
सर्वेषु सगुडां पथ्यां गुडूचीक्वाथमेव वा ।
पिप्पलीवर्द्धमानं वा शीलयेत् सुसमाहितः ॥१७॥
त्रिफलानिम्बमञ्जिष्ठावचाकटुकरोहिणी ।
वत्सादनीदारुनिशाकषायो नवकार्षिकः ॥१८॥
वातरक्तं तथा कुष्ठं पामानं रक्तमण्डलम् ।
कुष्ठं कापालिकाकुष्ठं पानादेवापकर्षति ॥१९॥
पञ्चरक्तिकमाषेण कार्य्योऽयं नव कार्षिकः ।
किं त्वेवं साधिते क्वाथे योग्यमात्रा प्रदीयते ॥२०॥

नवकार्षिकः ।

गुडूचीक्वाथकल्काभ्यां सपयस्कं शृतं घृतम् ।
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम् ॥२१॥

गुडूचीघृतम् ।

शतावरीकल्कगर्भं रसे तस्याश्चतुर्गुणे।
क्षीरतुल्यं घृतं पक्वं वातशोणितनाशनम् ॥२२॥

शतावरीघृतम्।

अमृता मधुकं द्राक्षा त्रिफला नागरं बला।
वासारग्वधवृश्चीरदेवदारुत्रिकण्टकम् ॥२३॥
कटुकासवरीकृष्णाकाश्मर्य्यस्य फलानि च।
रास्नाक्षुरकगन्धर्व्ववृद्धदारघनोत्पलैः।
कल्कैरेभिः समैः कृत्वा सर्पिःप्रस्थं विपाचयेत् ॥२४॥
धात्रीरससमं दत्त्वा वारि त्रिगुणसंयुतम्।
सम्यक् सिद्धन्तु विज्ञाय भोज्यपाने च शस्यते ॥२५॥
बहुदोषान्वितं वातं रक्तेन सह मूर्च्छितम्।
उत्तानञ्चापि गम्भीरं त्रिकजङ्घोरुजानुजम् ॥२६॥
क्रोष्टुशीर्षे महाशूले चामवाते सुदारुणे।
वातरोगोपसृष्टस्य वेदनाश्चातिदुस्तराम् ॥२७॥
मूत्रकृच्छ्रमुदावर्त्तं प्रमेहं विषमज्वरम्।
एतान् सर्व्वान् निहन्त्याशु वातपित्तकफोत्थितान् ॥२८॥
सर्व्वकालोपयोगेन वर्णायुर्ब्बलवर्द्धनम्।
अश्विभ्यां निर्म्मितं श्रेष्ठं घृतमेतदनुत्तमम् ॥२९॥

अमृताद्यं घृतम्।

बलाकषायकल्काभ्यां तैलं क्षीरचतुर्गुणम्।
दशपाकं भवेदेतद्वातासृग्वातपित्तजित् ॥३०॥
धन्यं पुंसवनञ्चैव नराणां शुक्रवर्द्धनम्।
रेतोयोनिविकारघ्नमेतद्वातविकारनुत् ॥३१॥

दशपाकबलातैलम्।

गुडूचीक्वाथदुग्धाभ्यां तैलं लाक्षारसेन वा ।
सिद्धं मधुककाश्मर्य्यरसैर्वा वातरक्तनुत् ॥३२॥

गुडूच्यादितैलम् ।

पद्मकोशीरयष्ट्याह्वरजनीक्वाथसाधितम् ।
स्यात् पिष्टैः सर्जमञ्जिष्ठावीराकाकोलिचन्दनैः ।
खुड्डाकपद्मकमिदं तैलं वातास्रदोषनुत् ॥३३॥

खुड्डाकपद्मकतैलम् ।

शुद्धां पचेन्नागबलातुलान्तु
विस्राव्य तैलाढ़कमत्र दद्यात् ।
अजापयस्तुल्यविमिश्रितन्तु
नतस्य यष्टीमधुकस्य कल्कम् ॥३४॥
पृथक् पचेत् पञ्चपलं विपक्वं
तद्वातरक्तं शमयत्युदीर्णम् ।
वस्तिप्रदानादिह सप्तरात्रात्
पीतं दशाहात् प्रकरोत्यरोगम् ॥३५॥
तुला द्रव्ये जलद्रोणो द्रव्यतुला द्रोणे मता ॥३६॥

नागबलातैलम् ।

समधूच्छिष्टमञ्जिष्ठं ससर्जरसशारिवम् ।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम् ॥३७॥

पिण्डतैलम् ।

शारिवासर्जमञ्जिष्ठायष्टीसिक्थैः पयोन्वितैः ।
तैलं पक्वं विमञ्जिष्ठे रवोर्वा वातरक्तनुत् ॥३८॥

महापिण्डतैलम् ।

वरमहिषलोचनोदरसन्निभवर्णस्य गुग्गुलोः प्रस्थम्।
प्रक्षिप्य तोयराशौ त्रिफलाञ्च यथोक्तपरिमाणाम्॥३९॥
द्वात्रिंशच्छिन्नरुहापलानि देयानि यत्नेन।
विपचेदप्रमत्तो दर्व्या संघट्टयन् मुहुर्यावत्॥४०॥
अर्द्धक्षयितं तोयं जातं ज्वलनस्य सम्पर्कात्।
अवतार्य्य वस्त्रपूतं पुनरपि सम्पादयेत् पात्रे॥४१॥
सान्द्रीभूते तस्मिन्नवतार्य्य हिमोपलप्रख्ये।
त्रिफलाचूर्णार्द्धपलं त्रिकटोश्चूर्णं षड़क्षपरिमाणम्॥४२॥
क्रिमिरिपुचूर्णार्द्धपलं कर्षं त्रिवृद्दन्त्योः।
पलमेकञ्च गुडूच्या दत्त्वा संमूर्च्छ्य यत्नेन॥४३॥
उपयुज्य चानुपानं यूषं तोयं सुगन्धि सलिलेन।
इच्छाहारविहारी भेषजमुपयुज्य सर्वकालमिदम्॥४४॥
तनुरोधिवातशोणितमेकजमथ द्वन्द्वजं चिरोत्थञ्च।
जयति स्रुतं परिशुष्कं स्फुटितञ्चाजानुजञ्चापि॥४५॥
व्रणकासकुष्ठगुल्मं श्वयथूदरपाण्डुमेहांश्च।
मन्दाग्निञ्च विबद्धं प्रमेहपीड़कांश्च नाशयत्याशु॥४६॥
सततं निषेव्यमाणः कालवशाद्धन्ति सर्वगदान्।
अभिभूय जरादोषं याति कैशोरकं रूपम्॥४७॥
प्रत्येकं त्रिफलाप्रस्थो जलन्तत्र षड़ाढ़कम्।
गुड़वद्गुग्गुलोः पाकः सुगन्धस्तु विशेषतः॥४८॥

कैशोरको गुग्गुलुः।

प्रस्थमेकं गुडूच्यास्तु अर्द्धप्रस्थञ्च गुग्गुलोः।
प्रत्येकं त्रिफलायाश्च तत्प्रमाणं विनिर्दिशेत्॥४९॥
सर्वमेकत्र संक्षुद्य साधयेत्त्वर्मणेऽम्भसि।

पादशेषं परिस्राव्य पुनरग्नावधिश्रयेत् ॥५०॥
तावत्पचेत् कषायन्तु यावत्सान्द्रत्वमागतम् ।
दन्तीव्योषविड़ङ्गानि गुड़ूचीत्रिफलात्वचः ॥५१॥
ततश्चार्द्धपलं पूतं गृह्णीयाच्च प्रति प्रति ।
कर्षन्तु त्रिवृतायास्तु सर्वमेकत्र कारयेत् ॥५२॥
तस्मिन् सुसिद्धं विज्ञाय कवोष्णे प्रक्षिपेद् बुधः ।
ततश्चाग्निबलं ज्ञात्वा तस्य मात्रां प्रदापयेत् ॥५३॥
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ।
दुष्टव्रणप्रमेहांश्च सामवातं भगन्दरम् ॥५४॥
नाड्याढ्यवातश्वयथून् सर्वानेतान् व्यपोहति ।
अश्विभ्यां निर्मितः पूर्वममृताख्यो हि गुग्गुलुः ।
अर्द्धप्रस्थं त्रिफलायाः प्रत्येकमिह गृह्यते ॥५५॥

अमृताद्यो गुग्गुलुः ।

अमृतायाश्च द्विप्रस्थं प्रस्थमेकञ्च गुग्गुलोः ।
प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च ॥५६॥
सर्वमेतच्च संक्षुद्य क्वाथयेन्नवणाम्भसि ।
पुनः पचेत्पादशेषं यावत् सान्द्रत्वमागतम् ॥५७॥
दन्तीचित्रकमूलानां कणाविश्वफलात्रिकम् ।
गुड़ूचीत्वग्विड़ङ्गानां प्रत्येकार्द्धपलोन्मितम् ॥५८॥
त्रिवृता कर्षमेकन्तु सर्वमेकत्र चूर्णयेत् ।
सिद्धे चोष्णे क्षिपेत्तत्र त्वमृतागुग्गुलोः परम् ॥५९॥
यथार्वाङ्गबलं खादेदग्निपित्ती विशेषतः ।
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ॥६०॥
दुष्टव्रणप्रमेहांश्च सामवातं भगन्दरम् ।

माद्याच्चवातश्वयथून् हन्यात् सर्वामयानयम्।
अश्विभ्यां निर्मितो ह्येषोऽमृताख्यो गुग्गुलुः पुरा ॥६१॥

पुनर्नवागुग्गुलुः।

शतावरीनागबलावृद्धदारकमुस्तटाः।
पुनर्नवामृताकृष्णावाजिगन्धात्रिकण्टकम् ॥६२॥
पृथग्दशपलान्येषां श्लक्ष्णचूर्णानि कारयेत्।
तदर्द्धशर्करायुक्तं चूर्णं संमर्दयेद् बुधः ॥६३॥
स्थापयेत् सुदृढ़े भाण्डे मध्वर्द्धाढ़कसंयुतम्।
घृतप्रस्थे समालोड्य त्रिसुगन्धिपलेन तु ॥६४॥
तं खादेदिष्टचेष्टाद्यो यथावह्निबलं नरः।
वातरक्तं क्षयं कुष्ठं कार्श्यं पित्तास्रसम्भवम् ॥६५॥
वातपित्तकफोत्थांश्च रोगानन्यांश्च तद्विधान्।
हत्वा करोति पुरुषं वलीपलितवर्जितम्।
योगसारामृतो नाम लक्ष्मीकान्तिविवर्द्धनः ॥६६॥

योगसारामृतः।

दिवास्वप्नाग्निसन्तापं व्यायामं मैथुनं तथा।
कटूष्णगुर्वभिष्यन्दिलवणाम्लानि वर्जयेत् ॥६७॥

इति वातरक्तचिकित्सा।

## अथोरुस्तम्भाधिकारः।

श्लेष्मणः क्षपणं यत्स्यान्न च मारुतकोपनम्।
तत्सर्वं सर्वदा कार्य्यमूरुस्तम्भस्य भेषजम् ॥१॥
तस्य न स्नेहनं कार्य्यं न वस्तिर्न च रेचनम्।
सर्वो रूक्षः क्रमः कार्य्यस्तत्रादौ कफनाशनः ॥२॥

पश्चाद्वातविनाशाय कृत्स्नः कार्य्यः क्रियाक्रमः ।
शिलाजतु गुग्गुलुं वा पिप्पलीमथ नागरम् ॥३॥
ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलीरसेन वा ।
भल्लातकामृताशुण्ठीदारुपथ्यापुनर्नवाः ॥ ४ ॥
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिवर्हणाः ।
पिप्पलीपिप्पलीमूलभल्लातक्वाथ एव वा ॥५॥
कल्को वा समधुर्देय ऊरुस्तम्भविनाशनः ।
त्रिफलाचव्यकटुकग्रन्थिकं मधुना लिहेत् ॥६॥
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत् ।
लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम् ॥७॥
सुखाम्बुना पिबेद्वापि चूर्णं षड्धरणं नरः ।
पिप्पलीवर्द्धमानं वा माक्षिकेण गुडेन वा ॥८॥
ऊरुस्तम्भे प्रशंसन्ति गण्डीरारिष्टमेव वा ।
चव्याभयाग्निदारूणां समधुः स्यादूरुग्रहे ॥९॥
कल्को दिहेच्च मूत्राढ्यैः करञ्जफलसर्षपैः ।
क्षौद्रसर्षपवल्मीकमृत्तिकासंयुतं भिषक् ॥१०॥
गाढमुत्सादनं कुर्य्यादूरुस्तम्भे सलेपनम् ।
कफक्षयार्थं व्यायामेष्वेनं शक्येषु योजयेत् ॥११॥
स्थलान्याक्रामयेत् कल्यं प्रतिस्रोतोनदीस्तरेत् ।
पलाभ्यां पिप्पलीमूलनागराद्दष्टकट्वरः ॥१२॥
तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः ।
अष्टकट्वरतैलेऽत्र तैलं सार्षपमिष्यते ॥१३॥

अष्टकट्वरं तैलम् ।

कुष्ठश्रीवेष्टकोदीच्यं शरलं दारुकेशरम् ।

अजगन्धाश्वगन्धा च तैलं तैः सार्षपं पचेत् ॥१४॥
सक्षौद्रं मात्रया तस्मादूरुस्तम्भार्दितः पिबेत्।
सैन्धवाद्यं हितं तैलं वर्षाभ्वमृतगुग्गुलुः ॥१५॥
इति ऊरुस्तम्भचिकित्सा।

## अथामवाताधिकारः।

लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च।
विरेचनं स्नेहपानं वस्तयश्चाममारुते ॥१॥
सैन्धवाद्येनानुवास्य क्षारवस्तिः प्रशस्यते।
आमवाते पञ्चकोलसिद्धं पानान्नमिष्यते ॥२॥
रूक्षः स्वेदो विधातव्यो वालुकापुटकैस्तथा।
शटी शुण्ठ्यभया चोग्रा देवाह्वातिविषामृता ॥३॥
कषायमामवातस्य पाचनं रूक्षभोजनम्।
शटीविश्वौषधीकल्कं वर्षाभूक्वाथसंयुतम् ॥४॥
सप्तरात्रं पिबेज्जन्तुरामवातविपाचनम्।
दशमूलामृतैरण्डरास्नानागरदारुभिः।
क्वाथो रुवूकतैलेन सामं हन्त्यनिलं गुरुम् ॥५॥
रास्नादशमूलकम्।
दशमूलीकषायेण पिबेद्वा नागराम्भसा।
कुक्षिवस्तिकटीशूले तैलमेरण्डसम्भवम् ॥६॥
रास्नां गुडूचीमेरण्डं देवदारुमहौषधम्।
पिबेत् सर्वाङ्गिके वाते सामे सन्ध्यस्थिमज्जगे ॥७॥
रास्नापञ्चकम्।
रास्नामृतारग्वधदेवदारुत्रिकण्टकैरण्डपुनर्नवानाम्।

क्वाथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुपृष्ठत्रिकपार्श्वशूली ॥८॥

रास्नासप्तकम् ।

शुण्ठीगोक्षुरकक्वाथः प्रातः प्रातर्निषेवितः ।
सामवाते कटीशूले पाचनो रुक्प्रणाशनः ॥९॥
आमवाते कषायुक्तं दशमूलरसं पिबेत् ।
खादेद्वाप्यभयाविश्वं गुडूचीं नागरेण वा ॥१०॥
एरण्डतैलसंयुक्तां हरीतकीं भक्षयेन्नरो विधिवत् ।
आमानिलार्त्तियुक्तो गृध्रसीवृद्धयर्दितो नित्यम् ॥११॥
कर्षं नागरचूर्णस्य काञ्जिकेन पिबेत् सदा ।
आमवातप्रशमनं कफवातहरं परम् ॥१२॥
पञ्चकोलकचूर्णञ्च पिबेदुष्णेन वारिणा ।
मन्दाग्निशूलगुल्मामकफारोचकनाशनम् ॥१३॥
अमृतानागरगोक्षुरमुण्डतिकावरुणकैः कृतं चूर्णम् ।
मस्त्वारणालपीतमामानिलनाशनं ख्यातम् ॥१४॥
माणिमन्थस्य भागौ द्वौ यमान्यास्तद्वदेव तु ।
भागास्त्रयोऽजमोदाया नागराद्भागपञ्चकम् ॥१५॥
दश द्वौ च हरीतक्याः श्लक्ष्णचूर्णीकृताः शुभाः ।
मस्त्वारणालतक्रेण सर्पिषोष्णोदकेन वा ॥१६॥
पीतं जयत्यामवातगुल्मं हृद्बस्तिजान् गदान् ।
प्लीहानं हन्ति शूलादीनानाहं गुदजानि च ॥१७॥
विबन्धं जाठरान् रोगांस्तथा वै हस्तपादजान् ।
वातानुलोमनमिदं चूर्णं वैश्वानरं स्मृतम् ॥१८॥

वैश्वानरं चूर्णम् ।

अलम्बुषां गोक्षुरकं गुडूचीं वृद्धदारकम् ।

पिप्पलीं त्रिवृतां मुस्तं वरुणं सपुनर्नवम् ॥१९॥
त्रिफलां नागरञ्चैव सूक्ष्मचूर्णानि कारयेत्।
मस्त्वारनालतक्रेण पयोमांसरसेन वा।
आमवातं निहन्त्याशु श्वयथुं सन्धिसंस्थितम् ॥२०॥

अलम्बुषाद्यं चूर्णम्।

शतपुष्पा विडङ्गञ्च सैन्धवं मरिचं समम्।
चूर्णमुष्णाम्बुना पीतमग्निसन्दीपनं परम् ॥२१॥
हिङ्गु चव्यं विडं शुण्ठीकृष्णाजाजीसपौष्करम्।
भागोत्तरमिदं चूर्णं पीतं वातामजिद्भवेत् ॥२२॥

हिङ्ग्वाद्यं चूर्णम्।

चित्रकं पिप्पलीमूलं यमानीं कारवीन्तथा।
विडङ्गान्यजमोदाञ्च जीरकं सुरदारु च ॥२३॥
चव्यैलासैन्धवं कुष्ठं रास्नागोक्षुरधान्यकम्।
त्रिफलामुस्तकं व्योषं त्वगुशीरं यवाग्रजम् ॥२४॥
तालीशपत्रं पत्रञ्च सूक्ष्मचूर्णानि कारयेत्।
यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुम् ॥२५॥
संमर्द्य सर्पिषा गाढं स्निग्धे भाण्डे निधापयेत्।
ततो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि ॥२६॥
योगराज इति ख्यातो योगोऽयममृतोपमः।
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि ॥२७॥
प्लीहगुल्मोदरानाहदुर्नामानि विनाशयेत्।
अग्निञ्च कुरुते दीप्तं तेजोवृद्धिं बलन्तथा।
वातरोगान् जयत्येष सन्धिमज्जगतानपि ॥२८॥

योगराजगुग्गुलुः।

पलत्रयं कषायस्य त्रिफलायाः सुचूर्णितम् ।
सौगन्धिकपलञ्चैकं कौशिकस्य पलन्तथा ॥२८॥
कुडवं चित्रतैलस्य सर्वमादाय यत्नतः ।
पाचयेत् पाकविद्वैद्यः पात्रे लौहमये दृढे ॥३०॥
हन्ति वातं तथा पित्तं श्लेष्माणं खञ्जपङ्गुताम् ।
श्वासं सुदुर्जयं हन्ति कासं पञ्चविधं तथा ॥३१॥
कुष्ठानि वातरक्तञ्च गुल्मशूलोदराणि च ।
आमवातं जयेदेतदपि वैद्यविवर्जितम् ॥३२॥
एतदभ्यासयोगेन जरापलितनाशनम् ।
सर्पिस्तैलरसोपेतमश्नीयात् शालियष्टिकम् ॥३३॥
सिंहनाद इति ख्यातो रोगवारणदर्पहा ।
वह्निवृद्धिकरः पुंसां भाषितो दण्डपाणिना ॥३४॥

## सिंहनादगुग्गुलुः ।

अलम्बुषागोक्षुरकत्रिफलानागरामृताः ।
यथोत्तरं भागवृद्ध्या श्यामाचूर्णञ्च तत्समम् ॥३५॥
पिबेन्मस्तुसुरातक्रकाञ्जिकोष्णोदकेन वा ।
पीतं जयत्यामवातं सशोथं वातशोणितम् ।
त्रिकजानूरुसन्धिस्थं ज्वरारोचकनाशनम् ॥३६॥

## अलम्बुषाद्यं चूर्णम् ।

पथ्याक्षधात्रीत्रिफलाभागं वृद्धवयःक्रमः ।
पथ्याविश्वयमानीभिस्तुल्याभिश्चूर्णितं पिबेत् ॥३७॥
तक्रेणोष्णोदकेनाथ अथवा काञ्जिकेन च ।
आमवातं निहन्त्याशु शोथं मन्दाग्निताम् अपि ॥१८॥
अजमोदामरिचपिप्पलीविडङ्गसुरदारुचित्रकशताह्वाः ।

सैन्धवपिप्पलीमूलं भागा नवकस्य पलिकाः स्युः ॥३९॥
शुण्ठीदशपलिका स्यात् पलानि तावन्ति वृद्धदारस्य।
पथ्यापञ्चपलानि सर्वाण्येकत्र कारयेच्चूर्णम् ॥४०॥
समगुड़वटकां खादंस्तच्चूर्णं वाप्युष्णवारिणा पिबतः।
नश्यन्त्यामानिलजाः सर्वरोगाः सुकष्टास्तु ॥४१॥
विश्वचिकाप्रतितुनीतुनीहृद्रोगाश्च गृध्रसी चोग्रा।
कटिवस्तिगुदस्फुटनञ्चैवास्थिजङ्घयोस्तीव्रम् ॥४२॥
श्वयथुस्तथाङ्गसन्धिषु ये चान्येऽप्यामवातसम्भूताः।
सर्वे प्रयान्ति नाशं तम इव सूर्य्यांशुविध्वस्तम् ॥४३॥

अजमोदाद्यवटकः।

नागरक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्।
चतुर्गुणेन तेनाथ केवलेनोदकेन वा ॥४४॥
वातश्लेष्मप्रशमनमग्निसन्दीपनं परम्।
नागरं घृतमित्युक्तं कट्यामशूलनाशनम् ॥४५॥

शुण्ठीघृतम्।

अमृतायाः कषायेण कल्केन च महौषधात्।
मृद्वग्निना घृतप्रस्थं वातरक्तहरं परम् ॥४६॥
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि।
अर्शांसि गुल्मशूलञ्च नाशयत्याशु योजितम् ॥४७॥

गुडूचीघृतम्।

हिङ्गु त्रिकटुकं चव्यं माणिमन्थं तथैव च।
कल्कान् कृत्वा च पलिकान् घृतप्रस्थं विपाचयेत् ॥४८॥
आरणालाढ़कं दत्त्वा तत्सर्पिर्जठरापहम्।
शूलं विबन्धमानाहमामवातं कटीग्रहम्।

पलत्रयं कषायस्य त्रिफलायाः सुचूर्णितम् ।
सौगन्धिकपलञ्चैकं कौशिकस्य पलन्तथा ॥२८॥
कुड़वं चित्रतैलस्य सर्वमादाय यत्नतः ।
पाचयेत् पाकविद्वैद्यः पात्रे लौहमये दृढे ॥३०॥
हन्ति वातं तथा पित्तं श्लेष्माणं खञ्जपङ्गुताम् ।
श्वासं सुदुर्जयं हन्ति कासं पञ्चविधं तथा ॥३१॥
कुष्ठानि वातरक्तञ्च गुल्मशूलोदराणि च ।
आमवातं जयेदेतदपि वैद्यविवर्जितम् ॥३२॥
एतदभ्यासयोगेन जरापलितनाशनम् ।
सर्पिस्तैलरसोपेतमश्नीयात् शालियष्टिकम् ॥३३॥
सिंहनाद इति ख्यातो रोगवारणदर्पहा ।
वह्निवृद्धिकरः पुंसां भाषितो दण्डपाणिना ॥३४॥

सिंहनादगुग्गुलुः ।

अलम्बुषागोक्षुरकत्रिफलानागरामृताः ।
यथोत्तरं भागवृद्धा श्यामाचूर्णञ्च तत्समम् ॥३५॥
पिबेन्मस्तुसुरातक्रकाञ्जिकोष्णोदकेन वा ।
पीतं जयत्यामवातं सशोथं वातशोणितम् ।
त्रिकजानूरुसन्धिस्थं ज्वरारोचकनाशनम् ॥३६॥

अलम्बुषाद्यं चूर्णम् ।

पथ्याक्षधात्रीविफलाभागं वृद्धवयःक्रमः ।
पथ्याविश्वयमानीभिस्तुल्याभिश्चूर्णितं पिबेत् ॥३७॥
तक्रेणोष्णोदकेनाथ अथवा काञ्जिकेन च ।
आमवातं निहन्त्याशु शोथं मन्दाग्नितामपि ॥३८॥
अजमोदामरिचपिप्पलीविड़ङ्गसुरदारुचित्रकशताह्वाः ।

सैन्धवपिप्पलीमूलं भागा नवकस्य पलिकाः स्युः ॥३९॥
शुण्ठीदशपलिका स्यात् पलानि तावन्ति वृद्धदारस्य।
पथ्यापञ्चपलानि सर्वाण्येकत्र कारयेच्चूर्णम् ॥४०॥
समगुड़वटकां खादेत्तच्चूर्णं वाप्युष्णवारिणा पिबतः।
नश्यन्त्यामानिलजाः सर्वरोगाः सुकष्टास्तु ॥४१॥
विश्वचिकाप्रतितुनीतुनीहृद्रोगाश्च गृध्रसी चोग्रा।
कटिवस्तिगुदस्फुटनञ्चैवास्थिजङ्घयोस्तीव्रम् ॥४२॥
श्वयथुस्तथाङ्गसन्धिषु ये चान्येऽप्यामवातसम्भूताः।
सर्वे प्रयान्ति नाशं तम इव सूर्य्यांशुविध्वस्तम् ॥४३॥

अजमोदाद्यवटकः।

नागरक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्।
चतुर्गुणेन तेनाथ केवलेनोदकेन वा ॥४४॥
वातश्लेष्मप्रशमनमग्निसन्दीपनं परम्।
नागरं घृतमित्युक्तं कट्यामशूलनाशनम् ॥४५॥

शुण्ठीघृतम्।

अमृतायाः कषायेण कल्केन च महौषधात्।
मृद्वग्निना घृतप्रस्थं वातरक्तहरं परम् ॥४६॥
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि।
अर्शांसि गुल्मशूलञ्च नाशयत्याशु योजितम् ॥४७॥

गुडूचीघृतम्।

हिङ्गु त्रिकटुकं चव्यं माणिमन्थं तथैव च।
कल्कान् कृत्वा च पलिकान् घृतप्रस्थं विपाचयेत् ॥४८॥
आरणालाढ़कं दत्त्वा तत्सर्पिर्जठरापहम्।
शूलं विबन्धमानाहमामवातं कटीग्रहम्।

नाशयेद् ग्रहणीदोषं मन्दाग्नेर्दीपनं परम् ॥४९॥

कार्ञ्जिकषट्पलं घृतम् ।

पुष्ट्यर्थं पयसा साध्यं दध्ना विष्मूत्रसंग्रहे ।
दीपनार्थं मतिमता मस्तुना च प्रकीर्त्तितम् ॥५०॥
सर्पिर्नागरकल्केन सौवीरकचतुर्गुणम् ।
सिद्धमग्निकरं श्रेष्ठमामवातहरं परम् ॥५१॥

शुण्ठीघृतम् ।

रसोनस्य पलशतं तिलस्य कुड़वं तथा ।
हिङ्गु त्रिकटुकं क्षारौ पञ्चैव लवणानि च ॥५२॥
शतपुष्पा तथा कुष्ठं पिप्पलीमूलचित्रकौ ।
अजमोदा यमानी च धान्यकञ्चापि बुद्धिमान् ॥५३॥
प्रत्येकन्तु पलञ्चैषां सूक्ष्मचूर्णानि कारयेत् ।
घृतभाण्डे दृढ़े चैतत् स्थापयेद्दिनषोड़श ॥५४॥
प्रक्षिप्य तैलमानीञ्च प्रस्थार्द्धं काञ्जिकस्य च ।
खादेत् कर्षप्रमाणन्तु तोयं मद्यं पिबेदनु ॥५५॥
आमवाते तथा वाते सर्वाङ्गैकाङ्गसंश्रिते ।
अपस्मारेऽनले मन्दे कासे श्वासे गरेषु च ।
सोन्मादवातभङ्गे च शूले जन्तुषु शस्यते ॥५६॥

रसोनपिण्डः ।

प्रसारण्याढ़कक्काथे प्रस्थो गुड़रसोनतः ।
पक्वः पञ्चोषणरजः पादः स्यादामवातहा ॥५७॥

प्रसारणीसन्धानम् ।

बहलायाः सुरायास्तु सुपक्वायाः शतं घटे ।
ततोऽर्द्धेन रसोनन्तु संशुद्धं कुट्टितं क्षिपेत् ॥५८॥

पिप्पलीपिप्पलीमूलमजाजीकुष्ठचित्रकम्।
नागरं मरिचं चव्यं चूर्णितञ्चाचसम्मितम् ॥५९॥
समाहात् परतः पेया वातरोगामनाशिनी।
क्रिमिकुष्ठक्षयानाहगुल्मार्शःप्लीहमेहनुत्।
अग्निसन्दीपनी चैव पाण्डुरोगविनाशिनी ॥६०॥

रसोनसुरा।

सिद्धार्थकखलीप्रस्थं सुधौतं निस्तुषं जले।
मण्डप्रस्थं विनिक्षिप्य स्थापयेद्दिवसत्रयम् ॥६१॥
धान्यराशौ ततो दद्यात्सचूर्णं पलिकानि च।
अलम्बुषागोक्षुरकं शतपुष्पीपुनर्नवे ॥६२॥
प्रसारणीवरुणत्वक्शुण्ठीमदनमेव च।
सम्यक् पाकन्तु विज्ञाय सिद्धा तण्डुलमिश्रिता ॥६३॥
भृष्टा सर्षपतैलेन हिङ्गुसैन्धवसंयुता।
भक्षिता लवणोपेता जयेदामं महाज्वरम् ॥६४॥
एकजं द्वन्द्वजं साध्यं सान्निपातिकमेव च।
कट्यूरुवातमानाहजानुजं त्रिकमागतम्।
उदावर्त्तहरी पेया बलवर्णाग्निकारिणी ॥६५॥

शिण्डाकी।

त्वगादिहीनाः संशुष्काः प्रत्यग्राः सकुलादयः।
श्लक्ष्णचूर्णीकृतं तेषां शीते पलशतत्रयम् ॥६६॥
शतेन कटुतैलेऽस्य व्योषरामठधान्यकैः।
क्रिमिघ्नदीप्यकनिशाचविकाग्न्यिकार्द्रकैः।
जीरकद्वयहवीरसुरसार्जकशिग्रुकैः ॥६७॥
दशमूलाश्मगुप्ताभ्यां मार्कवैर्लवणैस्त्रिभिः।

चूर्णितैः पलिकैः सार्द्धमारग्वालपरिस्रुतैः ॥६८॥
विन्यसेत् स्नेहपात्रे च धान्यराशौ पुनर्न्यसेत् ।
सप्तरात्रात्समुद्धृत्य पानभक्षणभोजनैः ॥६९॥
सिद्धलेयं प्रयोक्तव्या सामे वाते विशेषतः ।
भग्नकग्नाभ्युपहताः कम्पिनः पीठसर्पिणः ॥७०॥
गृध्रसीमग्निसादञ्च शूलगुल्मोदराणि च ।
वलीपलितखालत्यं हत्वा स्युरमलेन्द्रियाः ॥७१॥

सिद्धला ।

दधिमत्स्यगुड़क्षीरपोतकीमाषपिष्टकम् ।
वर्जयेदामवातार्त्तो गुर्वभिष्यन्दकारि च ॥७२॥

इति आमवातचिकित्सा ।

## अथ शूलाधिकारः ।

वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः ।
क्षारचूर्णानि गुड़िकाः शस्यते शूलशान्तये ॥१॥
पुंसः शूलाभिपन्नस्य स्वेद एव सुखावहः ।
पायसैः कृशरैः पिष्टैः स्निग्धैर्वापि सितोत्करैः ॥२॥
वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः ।
ससैन्धवो व्योषयुतः सलावः सहिङ्गुसौवर्च्चलदाड़िमाढ्यः ॥३॥
बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरैः ।
सहिङ्गुलवणं पीतं सद्यो वा [illegible]जापहम् ॥४॥
शूली विवन्धकोष्ठोऽग्नि[illegible]र्णिताः पिबेत् ।
हिङ्गुप्रतिविषाव्योषवच[illegible]भयाः ॥५॥
तुम्बुरूण्यभयाहिङ्गुपौ[illegible]त्रयम् ।

पिबेत् यवाम्बुना वातशूलगुल्मापतन्द्रकी ॥६॥
श्यामाविड़ं शिग्रुफलानि पथ्याविड़ङ्गकम्पिल्लकमम्लमूवी।
कल्कं समं मद्ययुतञ्च पीत्वा शूलं निहन्यादनिलात्मकन्तु ॥७॥
यामिनीहिङ्गु सिन्धूत्थक्षारसौवर्च्चलाभयाः।
सुरामण्डेन पातव्या वातशूलनिसूदनाः ॥८॥
बिल्वमेरण्डजं मूलं क्वाथयित्वा जलं पिबेत्।
हिङ्गु सौवर्च्चलोपेतं सद्यः शूलनिवारणम् ॥९॥
हिङ्गुपुष्करमूलाभ्यां हिङ्गु सौवर्च्चलेन वा।
बिल्वैरण्डयवक्वाथः सद्यः शूलनिवारणः।
तद्वद्रुवुयवक्वाथो हिङ्गु सौवर्च्चलान्वितः ॥१०॥
हिङ्ग्वम्लकृष्णालवणं यमानीक्षाराभयासैन्धवतुल्यभागम्।
चूर्णं पिबेद्वारुणमण्डमिश्रं शूले प्रवृद्धेऽनिलजे शिवाय ॥११॥
सौवर्च्चलाम्लिकाजाजीमरिचैर्द्विगुणोत्तरैः।
मातुलुङ्गरसैः पिष्ट्वा गुड़िकानिलशूलनुत् ॥१२॥
हिङ्ग्वम्लवेतसव्योषयमानीलवणत्रिकैः।
वीजपूररसोपेतैर्गुड़िकावातशूलनुत् ॥१३॥
वीजपूरकमूलञ्च घृतेन सह पाययेत्।
जयेद्वातभवं शूलं कर्षमेकं प्रमाणतः ॥१४॥
विल्वमूलतिलैरण्डं पिष्ट्वा चाम्लतुषाम्भसा।
गुड़िकां भ्रामयेदुष्णां वातशूलविनाशिनीम् ॥१५॥
तिलैश्च गुड़िकां कृत्वा भ्रामयेज्जठरोपरि।
गुड़िका शमयत्येषा शूलञ्चैवातिदुःसहम् ॥१६॥
नाभिलेपाज्जयेच्छूलं मदनः काञ्जिकान्वितः।
जीवन्तीमूलकल्को वा सतैलः पार्श्वशूलनुत् ॥१७॥

गुडः शालिर्यवाः क्षीरं सर्पिःपानं विरेचनम् ।
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ॥१८॥
पैत्ते तु शूले वमनं पयोभी
रसैस्तथेक्षोः सपटोलनिम्बैः ।
शीतावगाहाः पुलिनाः सवाताः
कांस्यादिपात्राणि जलप्लुतानि ॥१९॥
विरेचनं पित्तहरञ्च शस्तं
रसाश्च शस्ताः शशलावकानाम् ।
सन्तर्पणं लाजमधूपपन्नं
योगाः सुशीता मधुसंप्रयुक्ताः ॥२०॥
छर्द्यां ज्वरे पित्तभवेऽपि शूले
घोरे विदाहे त्वतितर्षिते च ।
यवस्य पेयां मधुना विमिश्रां
पिबेत् सुशीतां मनुजः सुखार्थी ॥२१॥
धात्र्या रसं विदार्य्या वा त्रायन्ती गोस्तनाम्बु वा ।
पिबेत्सशर्करं सद्यः पित्तशूलनिसूदनम् ॥२२॥
शतावरीरसं क्षौद्रयुतं प्रातः पिबेन्नरः ।
दाहशूलोपशान्त्यर्थं सर्वपित्तामयापहम् ॥२३॥
बृहत्यौ गोक्षुरैरण्डकुशकाशेक्षुरालिकाः ।
पीताः पित्तभवं शूलं सद्यो हन्युः सुदारुणम् ॥२४॥
शतावरीसयष्ट्याह्ववाट्यालकुशगोक्षुरैः ।
शृतशीतं पिबेत्तोयं सगुडक्षौद्रशर्करम् ॥२५॥
पित्तासृग्दाहशूलघ्नं सद्यो दाहज्वरापहम् ।
त्रिफलानिम्बयष्ट्याह्वकटुकारग्वधैः शृतम् ॥२६॥

पाययेन्मधुसंमिश्रं दाहशूलोपशान्तये।
तैलमेरण्डजं वापि मधुकक्वाथसंयुतम् ॥२७॥
शूलं पित्तोद्भवं हन्याद् गुल्मं पैत्तिकमेव च।
त्रिफलारग्वधक्वाथं सक्षौद्रं शर्कराऽन्वितम् ॥२८॥
पाययेद्रक्तपित्तघ्नं दाहशूलनिवारणम्।
प्रलिह्यात्पित्तशूलघ्नं धात्रीचूर्णं समाक्षिकम् ॥२९॥

श्लेष्माधिके छर्दनलङ्घनानि
शिरोविरेकं मधुशीधुपानम्।
मधूनि गोधूमयवानरिष्टान्
सेवेत रूक्षान् कटुकांश्च सर्वान् ॥३०॥

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः।
यवागूर्दीपनीया स्याच्छूलघ्नी तोयसाधिता ॥३१॥
लवणत्रयसंयुक्तं पञ्चकोलं सरामठम्।
सुखोष्णेनाम्बुना पीतं कफशूलविनाशनम् ॥३२॥
बिल्वमूलमथैरण्डं चित्रकं विश्वभेषजम्।
हिङ्गु सैन्धवसंयुक्तं सद्यः शूलनिवारणम् ॥३३॥

मुस्तं वचां तिक्तकरोहिणीञ्च
तथाभयां निर्दहनीञ्च तुल्याम्।
पिबेत् तु गोमूत्रयुतां कफोत्थ-
शूले तथामस्य च पाचनार्थम् ॥३४॥

वचाब्दाग्न्यभयातिक्ताचूर्णं गोमूत्रसंयुतम्।
सक्षारं वा पिबेत् क्वाथं बिल्वादेः कफशूलनुत् ॥३५॥
मातुलुङ्गरसो वापि शिग्रुक्वाथस्तथापरः।
सक्षारो मधुना पीतः पार्श्वहृद्बस्तिशूलनुत् ॥३६॥

आमशूले क्रिया कार्य्या कफशूलविनाशिनी ।
सेव्यमामहरं सर्वं यदग्निबलवर्द्धनम् ॥३७॥
सहिङ्गुतुम्बुरुव्योषयमानीचित्रकाभयाः ।
सक्षारलवणाश्चूर्णं पिबेत् प्रातः सुखाम्बुना ॥३८॥
विश्वमूत्रानिलशूलघ्नं पाचनं वह्निदीपनम् ।
चित्रकं ग्रन्थिकैरण्डशुण्ठीधान्यं जलैः शृतम् ॥३९॥
शूलानाहविबन्धेषु सहिङ्गु विड़दाड़िमम् ।
दीप्यकं सैन्धवं पथ्या नागरञ्च चतुःसमम् ।
भृष्टं शूलं जयत्याशु मन्दास्याग्नेश्च दीपनम् ॥४०॥
समाचिकं बृहत्यादि पिबेत् पित्तानिलात्मके ।
व्यामिश्रं वा विधिं कुर्य्याच्छूले पित्तानिलात्मके ॥४१॥
पित्तजे कफजे वापि या क्रिया कथिता पृथक् ।
एकीकृत्य प्रयुञ्जीत तां क्रियां कफपित्तजे ॥४२॥
पटोलत्रिफलारिष्टक्काथं मधुयुतं पिबेत् ।
पित्तश्लेष्मज्वरच्छर्द्दिदाहशूलोपशान्तये ॥४३॥
रसोनं मधुसंमिश्रं पिबेत् प्रातः प्रकाङ्क्षितः ।
वातश्लेष्मभवं शूलं निहन्तुं वह्निदीपनम् ॥४४॥

विश्वोरुबूकद्वयमूलयवाग्रसा तु
हिङ्गारहिङ्गुलवणत्रयपुष्कराणाम् ।
चूर्णं पिबेत् हृदयपार्श्वकटीग्रहाम-
पक्काशयांसभुग्नरुक्ज्वरशूलशूली ॥४५॥

क्काथेन चूर्णपानं यत्तत्र क्काथप्रमाणता ।
प्रवर्त्तते न तेनात्र चूर्णपिष्टं चतुर्द्रवः ॥४६॥

बृहद्विश्वादिः ।

चूर्णं समं रुचकहिङ्गुमहौषधानां
शुण्ठ्यम्बुना कफसमीरणसम्भवासु।
हृत्पार्श्वपृष्ठजठरार्त्तिविसूचिकासु
पेयन्तथा यवरसेन तु विड्विबन्धे ॥४७॥
समं शुण्ठ्यम्बुनेत्येवं योजना क्रियते बुधैः।
तेनाल्पमानमेवात्र हिङ्गु संपरिदीयते ॥४८॥

रुचकादिः।

हिङ्गु सौवर्चलं पथ्याविड़सैन्धवतुम्बुरु।
पौष्करञ्च पिबेच्चूर्णं दशमूलयवाम्भसा ॥४९॥
पार्श्वहृत्कटिपृष्ठांसशूले तन्द्रापतानके।
शोथे श्लेष्मप्रसेके च कर्णरोगे च शस्यते ॥५०॥
एरण्डबिल्वबृहतीद्वयमातुलुङ्ग-
पाषाणभित्त्रिकटमूलकृतः कषायः।
सक्षारहिङ्गुलवणोरुबूतैलमिश्रः
श्रोण्यंसमेढ्रहृदयस्तनरुक्षु पेयः ॥५१॥ एरण्डसप्तकः।
हिङ्गु त्रिकटुकं कुष्ठं यवक्षारोऽथ सैन्धवम्।
मातुलुङ्गरसोपेतं प्लीहशूलापहं रजः ॥५२॥
दग्धमनिर्गतधूमं मृगशृङ्गं गोघृतेन सह पीतम्।
हृदयनितम्बजशूलं हरति शिखी दारुनिवहमिव ॥५३॥
क्रिमिरिपुचूर्णं लीढं स्वरसेन वङ्गसेनस्य।
क्षपयत्यचिरान्नियतं सेहाऽजीर्णोद्भवं शूलम् ॥५४॥
विदारीदाड़िमरसः सव्योषलवणान्वितः।
क्षौद्रयुक्तो जयत्याशु शूलं दोषत्रयोद्भवम् ॥५५॥
एरण्डफलमूलानि बृहतीद्वयगोक्षुरम्।

पर्ण्यः सहदेवा च सिंहपुच्छी खुरालिका ॥५६॥
तुल्यैरेतैः शृतं तोयं यवक्षारयुतं पिबेत् ।
पृथग्दोषभवं शूलं हन्यात् सर्वभवं तथा ॥५७॥

एरण्डद्वादशकम् ।

गोमूत्रसिद्धं मण्डूरं त्रिफलाचूर्णसंयुतम् ।
विलिहन्मधुसर्पिभ्यां शूलं हन्ति त्रिदोषजम् ॥५८॥
शङ्खचूर्णं सलवणं सहिङ्गुत्र्योषसंयुतम् ।
उष्णोदकेन तत्पीतं शूलं हन्ति त्रिदोषजम् ॥५९॥
तीक्ष्णायसचूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम् ।
प्रयोज्यं मधुसर्पिभ्यां सर्वशूलनिवारणम् ॥६०॥
मूत्रान्तःपाचितां शुद्धां लौहचूर्णसमन्विताम् ।
सगुड़ामभयामद्यात् सर्वशूलप्रशान्तये ॥६१॥
पिप्पलीनागरं विल्वं कारवीचव्यचित्रकम् ।
हिङ्गु दाड़िमवृक्षाम्लवचाक्षाराम्लवेतसम् ॥६२॥
वर्षाभूकृष्णलवणमजाजीवीजपूरकम् ।
दधि त्रिगुणितं सर्पिस्तत्सिद्धं दाधिकं स्मृतम् ॥६३॥
गुल्माशःप्लीहहृत्पार्श्वशूलयोनिरुजापहम् ।
दोषसंशमनं श्रेष्ठं दाधिकं परमं स्मृतम् ॥६४॥

दाधिकं घृतम् ।

कम्बलावृतगात्रस्य प्राणायामं प्रकुर्वतः ।
कटुतैलाक्तशक्तूनां धूपः शूलहरः परः ॥६५॥
व्यायामं मैथुनं मद्यं लवणं कटुवैदलम् ।
वेगरोधं शुचं क्रोधं वर्जयेच्छूलवान् नरः ॥६६॥

इति शूलचिकित्सा ।

# अथ परिणामशूलाधिकारः ।

वमनं तिक्तमधुरैर्विरेकश्चापि शस्यते ।
वस्तयश्च हिताः शूले परिणामसमुद्भवे ॥१॥
विडङ्गतण्डुलव्योषं त्रिवृद्दन्तीसचित्रकम् ।
सर्वाण्येतानि संस्कृत्य सूक्ष्मचूर्णानि कारयेत् ॥२॥
गुडेन मोदकं कृत्वा भक्षयेत् प्रातरुत्थितः ।
उष्णोदकानुपानन्तु स्यादग्निविवर्द्धनम् ।
जयेत्त्रिदोषजं शूलं परिणामसमुद्भवम् ॥३॥
नागरं तिलगुडकल्कं पयसा संसाध्य यः पुमानद्यात् ।
उग्रं परिणतिशूलं तस्यापैति त्रिसप्तरात्रेण ॥४॥
शम्बूकजं भस्म पीतं जलेनोष्णेन तत्क्षणात् ।
पक्तिजं विनिहन्त्येव तच्छूलं विष्णुरिवासुरान् ॥५॥
अक्षधात्र्यभयाकृष्णाचूर्णं मधुयुतं लिहेत् ।
दध्ना लूनसारेणाद्यात् सतीलयवसक्तुकान् ॥६॥
अचिरान्मुच्यते शूलान्नरोऽनुपरिवर्त्तनात् ।
तिलनागरपथ्यानां भागं शम्बूकभस्मनाम् ॥७॥
द्विभागं गुडसंयुक्तं गुडीं कृत्वाक्षभागिकाम् ।
शीताम्बुपानां पूर्वाह्णे भक्षयेत् क्षीरभोजनः ॥८॥
सायाह्ने रसकं पीत्वा नरो मुच्येत दुर्जयात् ।
परिणामसमुत्थाच्च शूलाच्चिरभवादपि ॥९॥
शम्बूकं त्र्यूषणञ्चैव पञ्चैव लवणानि च ।
समांशां गुडिकां कृत्वा कलम्बूरसकेन वा ॥१०॥
प्रातर्भोजनकाले वा भक्षयेत्तु यथाबलम् ।

शूलाद्विमुच्यते जन्तुः सहसा परिणामजात् ॥११॥
यः पिबति सशर्करान् शक्तूनेकान् कलाययूषेण ।
स जयति परिणामरुजं चिरजामपि किमुत नूतनजाम्॥१२॥
लौहचूर्णं वरायुक्तं विलीढं मधुसर्पिषा ।
परिणामशूलं शमयेत् तच्चलं वा प्रयोजितम् ॥१३॥
कृष्णाभयालौहचूर्णं गुडेन सह भक्षयेत् ।
पक्तिशूलं निहन्त्येतज्जठराग्निमन्दताम् ।
आमवातविकारांश्च शोथञ्चैवापकर्षति ॥१४॥
पथ्यालौहरजः शुण्ठीचूर्णं माक्षिकसर्पिषा ।
परिणामरुजं हन्ति वातपित्तकफात्मिकाम् ॥१५॥
सामुद्रं सैन्धवं क्षारो रुचकं रौमकं विडम् ।
दन्तीलौहरजः किट्टं त्रिवृच्छूरणकं समम् ॥१६॥
दधिगोमूत्रपयसा मन्दपावकपाचितम् ।
तद् यथाग्निबलं चूर्णं पिबेदुष्णेन वारिणा ॥१७॥
जीर्णे जीर्णे तु भुञ्जीत मांसादिघृतसाधितम् ।
नाभिशूलं यकृच्छूलं गुल्मप्लीहकृतञ्च यत् ॥१८॥
विद्रध्यष्ठीलिकां हन्ति कफवातोद्भवांस्तथा ।
शूलानामपि सर्वेषामौषधं नास्ति तत्परम् ।
परिणामसमुत्थस्य विशेषेणान्तकृन्मतम् ॥१९॥

सामुद्राद्यं चूर्णम् ।

नारिकेलं सतोयञ्च लवणेन प्रपूरितम् ।
विपक्वमग्निना सम्यक् परिणामजशूलनुत् ॥२०॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
मधुकं त्रिफलाचूर्णमयोरजः समं लिहन् ॥२१॥

मधुसर्पिर्युतं सम्यक् गव्यं क्षीरं पिबेदनु।
छर्दिं सतिमिरां शूलमम्लपित्तं ज्वरं क्लमम्।
आनाहं मूत्रसङ्गञ्च शोथञ्चैव निहन्ति सः॥२२॥

सप्तामृतं लौहम्।

सपिप्पलीगुडं सर्पिः पचेत् क्षीरचतुर्गुणे।
विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम्॥२३॥

गुड़पिप्पलीघृतम्।

क्वाथेन कल्केन च पिप्पलीनां
सिद्धं घृतं माक्षिकसंप्रयुक्तम्।
क्षीरानुपस्यैव निहन्त्यवश्यं
शूलं प्रवृद्धं परिणामसंज्ञम्॥२४॥

पिप्पलीघृतम्।

कोलाग्रन्थिकशृङ्गवेरचपलाक्षारैः समं चूर्णितं
मण्डूरं सुरभीजलेऽष्टगुणिते पक्वाथ सान्द्रीकृतम्।
तं खादेदशनादिमध्यविरतौ प्रायेण दुग्धान्नभुक्
जेतुं वातकफामयान् परिणतौ शूलञ्च शूलानि च॥२५॥

कोलादिमण्डूरम्।

कोलाग्रन्थिकसहितैर्विश्वौषधमागधीयवक्षारैः।
प्रस्थमयोरजसां पलिकांशैश्चूर्णितैर्मिश्रैः॥२६॥
अष्टगुणमूत्रयुक्तं क्रमपाकात्पिण्डितां नयेत् सर्वम्।
कोलप्रमाणा गुड़िकास्तिस्रो भोज्यादिमध्याविरतौ च २७
रससर्पिर्यूषपयोमांसैरश्नन्तो निवारयति।
अन्नविवर्त्तनं गुल्मं प्लीहाग्निसादांश्च॥२८॥

भीमवटकमण्डूरम्।

लोहकिट्टपलान्यष्टौ गोमूत्रार्द्धाढके पचेत् ।
क्षीरप्रस्थेन तत् सिद्धं पक्तिशूलहरं नृणाम् ॥२८॥

क्षीरमण्डूरम् ।

लोहकिट्टपलान्यष्टौ गोमूत्रेऽष्टगुणे पचेत् ।
चविकानागरक्षारपिप्पलीमूलपिप्पली: ॥३०॥
सञ्चूर्ण्य निक्षिपेत्तस्मिन् पलांशा: सान्द्रतां गते ।
गुड़िका: कल्पयेत्तेन पक्तिशूलनिवारिणी: ॥३१॥

चविकादिमण्डूरम् ।

मण्डूरं शोधितं पथ्यां लौहजां वा गुड़ेन तु ।
भक्षयेन्मुच्यते शूलात्परिणामसमुद्भवात् ॥३२॥
संशोध्य चूर्णितं कृत्वा मण्डूरस्य पलाष्टकम् ।
शतावरीरसस्याष्टौ दध्नस्तु पयसस्तथा ॥३३॥
पलान्यादाय चत्वारि तथा गव्यस्य सर्पिष: ।
विपचेत् सर्वमेकध्यं यावत् पिण्डत्वमागतम् ॥३४॥
सिद्धन्तु भक्षयेन्मध्ये भोजनस्याग्रतोऽपि वा ।
वातात्मकं पित्तभवं शूलञ्च परिणामजम् ॥३५॥
निहन्त्येव हि योगोऽयं मण्डूरस्य न संशय: ॥३६॥

शतावरीमण्डूरम् ।

विड़ङ्गं चित्रकं चव्यं त्रिफलात्र्यूषणानि च ।
नवभागानि चैतानि लोहकिट्टसमानि च ॥३७॥
गोमूत्रं द्विगुणं दत्त्वा मूत्रार्द्धिकगुड़ान्वितम् ।
शनैर्मृद्वग्निना पक्वा सुसिद्धं पिण्डतां गतम् ॥३८॥
स्निग्धे भाण्डे विनिक्षिप्य भक्षयेत् कोलमात्रया ।
प्राग्मध्यादिषु मेषैव भोजनस्य प्रयोजितम् ॥३९॥

योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम्।
कामलां पाण्डुरोगञ्च शोथं मन्दाग्नितामपि ॥४०॥
अर्शांसि ग्रहणीदोषं क्रिमिगुल्मोदराणि च।
नाशयेदम्लपित्तञ्च स्थौल्यञ्चैवापकर्षति ॥४१॥
वर्जयेच्छुष्कशाकानि विदाह्यम्लकटूनि च।
पक्तिशूलान्तको ह्येष गुडो मण्डूरसंज्ञकः।
शूलार्त्तानां कृपाहेतोस्तारया परिकीर्त्तितः ॥४२॥

तारामण्डूरगुडः।

वशिरं श्वेतवाट्यालं मधुपर्णीमयूरकम्।
तण्डुलीयञ्च कर्षांशं दत्त्वाधश्चोर्द्धमेव च ॥४३॥
पाक्यं सुजीर्णं मण्डूरं गोमूत्रेण दिनद्वयम्।
अन्तर्बाष्पमदग्धञ्च तथा स्थाप्यं दिनत्रयम् ॥४४॥
विचूर्ण्य द्विगुणेनैव गुडेन सुविमर्दितम्।
भोजनस्यादिमध्यान्ते भक्ष्यं कर्षं त्रिभागतः ॥४५॥
तक्रानुपानं वर्ज्यञ्च वार्त्तमम्लकमत्र तु।
आम्लपित्ते च शूले च हितमेतद् यथामृतम् ॥४६॥

राममण्डूरम्।

पथ्याचूर्णं द्विपलं गन्धाश्मलोहकिट्टञ्च।
शुद्धरसस्यार्द्धपलं भृङ्गस्य रसञ्च केशराजस्य ॥४७॥
प्रक्षोभितञ्च दत्त्वा लौहे पात्रेऽथ दण्डघृष्टम्।
शुष्कं घृतमधुयुतं मर्दितं स्थाप्यञ्च भाण्डे स्निग्धे ॥४८॥
उपयुक्तमेतदचिरान्निहन्ति कफपित्तजान् रोगान्।
शूलं तथाम्लपित्तं ग्रहणीञ्च कामलामुग्राम् ॥४९॥

रसमण्डूरम्।

अथामलकशिवानां स्वरसेन पक्वं सुलोहजचूर्णम्।
सगुड़ं यस्तुपभुङ्क्ते मुञ्चति त्रिदोषजं शूलम् ॥५०॥

त्रिफलालौहः।

लौहस्य रजसो भागस्त्रिफलायास्तथा त्रयः।
गुड़स्याष्टौ तथा भागा गुड़ान्मूत्रं चतुर्गुणम् ॥५१॥
एतत् सर्वञ्च विपचेद् गुड़पाकविधानवित्।
लिह्याच्च तद् यथाशक्ति चये शूले च पाकजे ॥५२॥

लौहगुड़िका।

धात्रीचूर्णस्याष्टौ पलानि चत्वारि लौहचूर्णस्य।
यष्टीमधुकरजश्च द्विपलं दद्यादुपले घृष्टम् ॥५३॥
अमृताक्वाथेनैतच्चूर्णं भाव्यञ्च सप्ताहम्।
चण्डातपेषु शुष्कं भूयः पिष्ट्वा नवे घटे स्थाप्यम् ॥५४॥
घृतमधुना सह युक्तं भुक्तादौ मध्यतोऽन्ते च।
त्रीनपि वारान् खादेत् पथ्यं दोषानुबन्धेन ॥५५॥
भक्तस्यादौ नाशयति व्याधीन् पित्तानिलोद्भवान्।
मध्येऽवविष्टम्भं जयति नृणां विदह्यते नान्नम् ॥५६॥
पानान्नकृतान् भुक्त्यन्ते शीलितं जयति।
एवं जीर्य्यति चान्ने शूलं नृणां सुकष्टमपि ॥५७॥
हरति सहसा युक्तो योगवाय जरत्पित्तम्।
चक्षुष्यः पलितघ्नः कफपित्तसमुद्भवान् जयेद्रोगान्।
प्रसादयत्यपि रक्तं पाण्डुत्वं कामलां जयति ॥५८॥

धात्रीलौहम्।

तनूनि लौहपात्राणि तिलोत्सेधसमानि च।
कणिकामूलकल्केन संलिप्य सर्षपेण वा ॥५९॥

विशोष्य सूर्य्यकिरणैः पुनरेवावलेपयेत्।
त्रिफलाया जले धातं वापयेच्च पुनः पुनः ॥६०॥
ततः संचूर्णितं कृत्वा कर्पटेन तु छानयेत्।
भक्षयेन्मधुसर्पिर्भ्यां यथाग्नि तत् प्रयोगतः ॥६१॥
माषकं त्रिगुणं वाथ चतुर्गुणमथापि वा।
छागस्य पयसः कुर्य्यादनुपानमभावतः ॥६२॥
गवां घृतेन दुग्धेन चतुःषष्टिगुणेन च।
पक्तिशूलं निहन्त्येतन्मासेनैकेन निश्चितम् ॥६३॥
लोहामृतमिदं श्रेष्ठं ब्रह्मणा निर्मितं पुरा।
ककारपूर्वकं यच्च यच्चाम्लं परिकीर्त्तितम्।
सेव्यं तत्र भवेदत्र मांसं चानूपसम्भवम् ॥६४॥

लोहामृतम्।

स्विन्नपीड़ितकुष्माण्डात् तुलार्द्धं मृष्टमाज्यतः।
प्रस्थार्द्धे खण्डतुल्यन्तु पचेदामलकीरसात् ॥६५॥
प्रस्थे सुस्विन्नकुष्माण्डरसप्रस्थे विघट्टयन्।
दर्व्या पाकं गते तस्मिंश्चूर्णीकृत्य विनिक्षिपेत् ॥६६॥
द्वे द्वे पले कणाजाजीशुण्ठीनां मरिचस्य च।
पलं तालीशधन्याकचातुर्जातकमुस्तकम् ॥६७॥
कर्षप्रमाणं प्रत्येकं प्रस्थार्द्धं माक्षिकस्य च।
पक्तिशूलं निहन्त्येतद्दोषत्रयभवञ्च यत् ॥६८॥
छर्द्यम्लपित्तमूर्च्छाश्च श्वासकासावरोचकम्।
हृच्छूलं रक्तपित्तञ्च पृष्ठशूलञ्च नाशयेत्।
रसायनमिदं श्रेष्ठं खण्डामलकसंज्ञितम् ॥६९॥

खण्डामलकी।

कुडवमितमिह स्यान्नारिकेलं सुपिष्टं
पलपरिमितसर्पि:पाचितं खण्डतुल्यम् ।
निजपयसि तदेतत् प्रस्थमात्रे विपक्कं
गुड़वदथ सुशीते शाणभागान् क्षिपेच्च ॥७०॥
धन्याकपिप्पलीपयोदतुगाद्विजीरान्
शाणं त्रिजातमिभकेशरवह्निचूर्णं ।
हन्त्यम्लपित्तमरुचिं क्षयमस्रपित्तं
शूलं वमिं सकलपौरुषकारि हारि ॥७१॥

नारिकेलखण्ड: ।

कलायचूर्णभागौ द्वौ लोहचूर्णस्य चापर: ।
कारवेल्लपलाशानां रसेनैव विमर्दित: ॥७२॥
कर्षमात्रां ततश्चैकां भक्षयेद् गुड़िकां नर: ।
मण्डानुपानात् सा हन्ति जरत्पित्तं सुदारुणम् ॥७३॥
लिह्याद्वा त्रैफलं चूर्णमयश्चूर्णसमन्वितम् ।
यष्टीचूर्णेन वा युक्तं लिह्यात् क्षौद्रेण तद्गदे ॥७४॥
पित्तान्तं वमनं कृत्वा कफान्तञ्च विरेचनम् ।
अन्नद्रवे च तत्कार्य्यं जरत्पित्ते यदीरितम् ॥७५॥
आमपक्वाशये शुद्धे गच्छेदन्नद्रव: शमम् ।
माषेण्डरी सतुषिका स्विन्ना सर्पिर्युता हिता ॥७६॥
गोधूममण्डकं तत्र सर्पिषा गुड़संयुतम् ।
ससितं शीतदुग्धेन क्वथितं वाञ्छितं मतम् ॥७७॥
शालितण्डुलमण्डं वा कवोष्णं सिक्थवर्जितम् ।
वाट्यं क्षीरेण संसिद्धं घृतपूरं सशर्करम् ॥७८॥
शर्करां भक्षयित्वा वा क्षीरमुत्क्वथितं पिबेत्

घटोलपत्रयूषेण खादेच्छ्वक्तुकान् ॥७९॥
अन्नद्रवे जरत्यित्ते वह्निर्मन्दो भवेद्यतः।
तस्मादन्नानपानानि मात्राहीनानि कल्पयेत् ॥८०॥
इति परिणामशूलचिकित्सा।

## अथोदावर्त्ताधिकारः।

त्रिवृत्सुधापत्रतिलादिशाक-
ग्राम्यौदकानूपरसैर्यवान्नम्।
अन्यैश्च सृष्टानिलमूत्रविड्भि-
रद्यात् प्रसन्नागुड़सीधुपायी ॥१॥
आस्थापनं मारुतजे स्निग्धस्विन्नस्य शस्यते।
पुरीषजे तु कर्त्तव्यो विधिरानाहिकश्च यः ॥२॥
क्षारवैतरणौ वस्ती गुल्मगात् तत्र चिकित्सकः।
श्यामादन्तीद्रवन्तीलम्प्रहाश्यामाकुहीविहत् ॥३॥
सप्तलाशङ्खिनीश्वेताराजवृक्षः सतिल्वकः।
कम्पिल्लकं करञ्जश्च हेमक्षीरीत्ययं गणः ॥४॥
सर्पिस्तैलरजःक्वाथकल्केष्वन्यतमेषु च।
उदावर्त्तोदरानाहविषगुल्मविनाशनः ॥५॥
त्रिवृत्कृष्णाहरीतक्यो द्विचतुःपञ्चभागिकाः।
गुड़िका गुड़तुल्यास्ता विड्विबन्धगदापहाः ॥६॥
हरीतकीयवक्षारपिलूनि त्रिवृता तथा।
घृतैश्चूर्णमिदं पेयमुदावर्त्तविनाशनम् ॥७॥
हिङ्गुकुष्ठवचास्वर्जिविड़ञ्चेति द्विरुत्तरम्।
पीतं मद्येन तच्चूर्णमुदावर्त्तहरं परम् ॥८॥

खण्डपलं त्रिवृता सममुपकुल्याकर्षचूर्णितं श्लक्ष्णम्।
प्राग्भोजने च समधुविड़ालपदकं लिहेत् प्राज्ञः॥९॥
एतद्गाढ़पुरीषे पित्ते कफे च विनियोज्यम्।
सुस्वादुर्मृदुपयोग्योऽयं चूर्णो नाराचको नाम्ना॥१०॥

नाराचचूर्णम्।

रसोनं मद्यसंमिश्रं पिबेत् प्रातः प्रकाङ्क्षितः।
गुल्मोदावर्त्तशूलघ्नं दीपनं बलवर्द्धनम्॥११॥
हिङ्गुमाक्षिकसिन्धूत्थैः पक्त्वा वर्त्तिं सुनिर्मिताम्।
घृताभ्यक्तां गुदे दद्यादुदावर्त्तविनाशिनीम्॥१२॥
मदनं पिप्पली कुष्ठं वचागौराश्च सर्षपाः।
गुड़क्षारसमायुक्ताः फलवर्त्तिः प्रशस्यते॥१३॥
आगारधूमसिन्धूत्थतैलयुक्ताम्लमूलकम्।
कुष्ठं निर्गुण्डिपत्रं वा स्विन्ने पायौ क्षिपेद् बुधः॥१४॥
सौवर्च्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत्।
एलां वाप्यथ मद्येन क्षीरं वारि पिबेच्च सः॥१५॥
दुःस्पर्शास्वरसं वापि कषायं ककुभस्य च।
एर्वारुवीजं तोयेन पिबेद्वा लवणीकृतम्॥१६॥
पञ्चमूलीशृतं क्षीरं द्राक्षारसमथापि वा।
सर्व्वथैवोपयुञ्जीत मूत्रकृच्छ्राश्मरी विधिम्॥१७॥
स्नेहस्वेदैरुदावर्त्तं जृम्भजं समुपाचरेत्।
अश्रुमोक्षोऽश्रुजे कार्य्यः स्वप्नो मद्यं प्रियाः कथाः॥१८॥
क्षवजे क्षरपत्रेण घ्राणस्थेनानयेत् क्षवम्।
तथोर्द्ध्वजत्रुकोऽभ्यङ्गः स्वेदो धूमः सनावनः॥१९॥
हितं वातघ्नमद्यञ्च घृतञ्चोत्तरभक्तिकम्।

उद्गारजे क्रमोपेतं स्नेहिकं धूममाचरेत् ॥२०॥
छर्द्याघातं यथादोषं नस्यस्नेहादिभिर्जयेत्।
भुक्त्वा प्रच्छर्दनं धूमो लङ्घनं रक्तमोक्षणम् ॥२१॥
रूक्षान्नपाने व्यायामो विरेकश्चात्र शस्यते।
वस्तिशुद्धिकरावापं चतुर्गुणजलं पयः ॥२२॥
आवारिनाशात् क्वथितं पीतवन्तं प्रकामतः।
रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरम् ॥२३॥
अत्राभ्यङ्गावगाहाश्च मदिराश्चरणायुधाः।
शालिः पयो निरूहाश्च शस्तं मैथुनमेव च ॥२४॥
क्षुद्विघाते हितं स्निग्धमुष्णमल्पञ्च भोजनम्।
तृष्णाघाते पिबेन्मन्थं यवागूं वापि शीतलाम् ॥२५॥
रसेनाद्यात् सुविश्रान्तः श्रमश्वासातुरो नरः।
निद्राघाते पिबेत् क्षीरं स्वप्नः संवाहनानि च।
उदावर्त्तक्रियानाहे सामे लङ्घनपाचनम् ॥२६॥

हिरुत्तराहिङ्गुवचा सकुष्ठा
सुवर्च्चिका चेति विड़ङ्गचूर्णम्।
सुखाम्बुनानाहविसूचिकार्त्ति-
हृद्रोगगुल्मोर्द्ध्वसमीरणघ्नम् ॥२७॥
वचाभयाचित्रकयावशूकान्
सपिप्पलीकातिविषान् सकुष्ठान्।
उष्णाम्बुनानाहविमूढ़वातान्
पीत्वा जयेदाशु हितोदनाशी ॥२८॥

त्रिवृद्धरीतकीश्यामाः स्नुही क्षीरेण भावयेत्।
वटिका मूत्रपीतास्ताः श्रेष्ठाश्चानाहभेदिकाः ॥२९॥

फलञ्च मूलञ्च विरेचनोक्तं
हिङ्गर्कमूलं दशमूलमग्रम् ।
स्नुक्चित्रकौ चैव पुनर्नवा च
तुल्यानि सर्वैर्लवणानि पञ्च ॥२०॥
स्नेहैः समूत्रैः सह जर्जराणि
शरावसन्धौ विपचेत् सुलिप्ते ।
पक्कं सुपिष्टं लवणं तदन्नैः
पानैस्तथानाहरुजाघ्नमग्रम् ॥२१॥
वाठधूमविडव्योषगुड़मूत्रैर्विपाचिता ।
गुदेऽङ्गुष्ठसमावर्त्तिर्विधेयानाहशूलनुत् ॥२२॥
वर्त्तिस्त्रिकटुकसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः ।
मधुनि गुड़े पक्वा पायौ्रिताङ्गुष्ठमाना ॥२३॥
वर्त्तिरियं दृष्टफला शनैः शनैः प्रणिहिता गुदे घृताभ्यक्ता ।
आनाहोदावर्त्तप्रशमनी जठरगुल्मनिवारिणी ॥२४॥
मूलकं शुष्कमार्द्रञ्च वर्षाभूपञ्चमूलकम् ।
आरेवतफलञ्चापि पिष्ट्वा तेन पचेद् घृतम् ।
तत्पीयमानं शमयेदुदावर्त्तमसंशयम् ॥२५॥
शुष्कमूलाद्यं घृतम् ।
स्थिरादिवर्गस्य पुनर्नवायाः
सम्पाकपूतीकरञ्जयोश्च ।
सिद्धः कषाये द्विपलांशिकानां
प्रस्थो घृतात्स्यात् प्रतिरुद्धवाते ॥२६॥
स्थिराद्यं घृतम् ।
इति उदावर्त्तचिकित्सा ।

## अथ गुल्माधिकारः।

लङ्घनं दीपनं स्निग्धमुष्णं वातानुलोमनम्।
वृंहणं यद्भवेत् सर्वं तद्धितं सर्वगुल्मिनाम्॥१॥
स्निग्धस्य भिषजास्वेदः कर्त्तव्यो गुल्मशान्तये।
स्रोतसां मार्द्दवं कृत्वा जित्वा मारुतमुल्बणम्॥२॥
भित्त्वा विबद्धं स्निग्धस्य स्वेदो गुल्ममपोहति।
कुम्भीपिण्डेष्टकास्वेदान् कारयेत् कुशलो भिषक्॥३॥
उपानाहाश्च कर्त्तव्याः सुखोष्णाः शाल्वणादयः।
स्थानावसेको रक्तस्य बाहुमध्ये शिराव्यधः॥४॥
स्वेदानुलोमनञ्चैव प्रशस्तं सर्वगुल्मिनाम्।
पेया वातहरैः सिद्धाः कौलत्था धन्वजा रसाः॥५॥
खडाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः।
मातुलुङ्गरसो हिङ्गु दाडिमं विड्सैन्धवम्॥६॥
सुरामण्डेन पातव्यं वातगुल्मरुजापहम्।
नागरार्द्धपलं पिष्टं द्वे पले लुञ्चितस्य च॥७॥
तिलस्यैकं गुड़पलं क्षीरेणोष्णेन पाययेत्।
वातगुल्ममुदावर्त्तं योनिशूलञ्च नाशयेत्॥८॥
पिबेदेरण्डतैलं वा वारुणीमण्डमिश्रितम्।
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः॥९॥
साधयेच्छुष्कशुष्कस्य लशुनस्य चतुःपलम्।
क्षीरोदकेऽष्टगुणिते क्षीरशेषञ्च पाययेत्॥१०॥
वातगुल्ममुदावर्त्तं गृध्रसीविषमज्वरम्।
हृद्रोगं विद्रधिं शोषं शमयत्याशु तत्पयः॥११॥

एवन्तु साधिते क्षीरे स्नेहमप्यत्र दीयते।
सर्जिकाकुष्ठसहितः क्षारः केतकिजोऽपि वा ॥१२॥
तैलेन पीतः शमयेद् गुल्मं पवनसम्भवम्।
वातगुल्मे कफे वृद्धे वान्तिश्चूर्णादिरिष्यते ॥१३॥
पैत्ते तु रेचनं स्निग्धं रक्ते रक्तस्य मोक्षणम्।
स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम् ॥१४॥
रूक्षोष्णेन तु सम्भूते सर्पिः प्रशमनं परम्।
काकोल्यादिमहातिक्तवासाद्यैः पित्तगुल्मिनम् ॥१५॥
स्नेहितं स्रंसयेत् पश्चात् योजयेद्वस्तिकर्मणा।
स्निग्धोष्णजे पित्तगुल्मे काम्पिल्लं मधुना लिहेत् ॥१६॥
रेचनार्थी रसं वापि द्राक्षायाः सगुडं पिबेत्।
दाहशूलाऽनिलक्षोभस्वप्ननाशारुचिज्वरैः ॥१७॥
विदह्यमानं जानीयाद् गुल्मं तमुपनाहयेत्।
पक्वे तु व्रणवत् कार्य्यं व्यधशोधनरोपणम् ॥१८॥
स्वयमूर्द्ध्वमधो वापि स चेद्दोषः प्रपद्यते।
द्वादशाहमुपेक्षेत रक्षन्नन्यानुपद्रवान् ॥१९॥
परन्तु शोधनं सर्पिः शुद्धे समधुतिक्तकम्।
रोहिणी कटुका निम्बं मधुकं त्रिफलात्वचः ॥२०॥
कर्षांशास्त्रायमाणा च पटोलत्रिवृतापले।
द्विपलञ्च मसूराणां साध्यमष्टगुणेऽम्भसि ॥२१॥
घृताच्छेषं घृतसमं सर्पिषश्च चतुःपलम्।
पिबेत् संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः ॥२२॥
ज्वरस्तृष्णा च शूलञ्च भ्रममूर्च्छारतिस्तथा।
दीप्ताग्नयो महाकायाः स्नेहसात्म्याश्च ये नराः ॥२३॥

गुल्मिनः सर्पदृष्टाश्च विसर्पोपहताश्च ये ।
ज्येष्ठां मात्रां पिबेयुस्ते पलान्यष्टौ विशेषतः ॥२४॥
लङ्घनोल्लेखने स्वेदे कृतेऽग्नौ संप्रधुक्षिते ।
घृतं सक्षारकटुकं पातव्यं कफगुल्मिना ॥२५॥
मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता ।
सोत्क्लेशा चारुचिर्यस्य स गुल्मो वमनोपमः ॥२६॥
मन्देऽग्नावनिले मूढे ज्ञात्वा सस्नेहमाशयम् ।
गुड़िकाश्चूर्णनिर्यूहाः प्रयोज्याः कफगुल्मिनाम् ॥ २७॥
क्षाराऽरिष्टगणश्चापि दाहशोषे विधीयते ।
पञ्चमूलीकृतं तोयं पुराणं वारुणीरसम् ॥२८॥
कफगुल्मी पिबेत् काले जीर्णं माध्वीकमेव वा ।
तिलैरण्डातसीबीजसर्षपैः परिलिप्य वा ॥२९॥
श्लेष्मगुल्ममयःपात्रैः सुखोष्णैः स्वेदयेद्भिषक् ।
यमानीचूर्णितं तक्रं विडेन लवणीकृतम् ॥३०॥
पिबेत् सन्दीपनं वातमूत्रवर्चोऽनुलोमनम् ।
व्यामिश्रदोषे व्यामिश्रः सर्व एव क्रियाक्रमः ॥३१॥
सन्निपातोद्भवे गुल्मे त्रिदोषघ्नो विधिर्हितः ।
वचाविड़ाभयाशुण्ठीहिङ्गुकुष्ठाग्निदीप्यकाः ॥३२॥
द्वित्रिषट्चतुरे वाष्टसप्तपञ्चांशिकाः क्रमात् ।
चूर्णं मद्यादिभिः पीतं गुल्मानाहोदरापहम् ॥३३॥
शूलार्शःश्वासकासघ्नं ग्रहणीदीपनं परम् ।
यमानीहिङ्गुसिन्धूत्थक्षारसौवर्चलाभयाः ॥३४॥
सुरामण्डेन पातव्या गुल्मशूलनिवारणाः ।
हिङ्गु त्रिकटुकं पाठां हवुषामभयां शठीम् ॥३५॥

अजमोदाजगन्धे च तिन्तिड़ीकाम्लवेतसौ ।
दाडिमं पौष्करं धान्यमजाज्यौ चित्रकं वचाम् ।
द्वौ चारौ लवणे द्वे च चव्यञ्चैकत्र चूर्णयेत् ॥३६॥
चूर्णमेतत् प्रयोक्तव्यमन्नपानेष्वनत्ययम् ।
प्राग्भक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥३७॥
पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे च गुदयोनिरुजासु च ॥३८॥
ग्रहण्यर्शोविकारेषु प्लीह्नि पाण्ड्वामयेऽरुचौ ।
उरोविबन्धे हिक्कायां श्वासे कासे गलग्रहे ॥३९॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा ।
बहुशो गुडिकाः कार्य्याः कार्षिकाः स्युस्ततोऽधिकम् ॥४०

हिङ्ग्वाद्यं चूर्णम् ।

पूतीकपत्रगजचिर्भिटिचव्यवह्नि-
व्योषञ्च संस्तरचितं लवणोपधानम् ।
दग्ध्वा विचूर्ण्य दधिमण्डयुतं प्रयोज्यं
गुल्मोदरश्वयथुपाण्डुगदोद्भवेषु ॥४१॥

हिङ्गु पुष्करमूलानि तुम्बुरूणि हरीतकीम् ।
श्यामाविड़ं सैन्धवञ्च यवचारं महौषधम् ।४२॥
यवक्वाथोदकेनैतद् घृतभृष्टन्तु पाययेत् ।
तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः ॥४३॥
वचाहरीतकीहिङ्गुसैन्धवं साम्लवेतसम् ।
यवचारं यमानीञ्च पिबेदुष्णेन वारिणा ॥४४॥
एतद्धि गुल्मनिचयं सशूलं सपरिग्रहम् ।
भिनत्ति सप्तरात्रेण वह्नेर्दीप्तिं करोति च ।४५॥

पिप्पलीपिप्पलीमूलचित्रकाजाजीसैन्धवैः।
युक्ता पीता सुरा हन्ति गुल्ममाशु सुदुस्तरम् ॥४६॥
नादेयीकुटजार्कशिग्रु बृहतीयुग्मिल्लभल्लातक-
व्याघ्रीकिंशुकपारिभद्रकजटाऽपामार्गनीपाग्निकम्।
वासामुष्ककपाटला: सलवणा दग्धा जले पाचितं
हिङ्ग्वादिप्रतिवापमेतदुदितं गुल्मोदराष्ठीलिषु ॥४७॥
हिङ्गूग्रगन्धाविड़शुण्ठ्यजाजीहरीतकीपुष्करमूलकुष्ठम्।
भागोत्तरं चूर्णितमेतदिष्टं गुल्मोदराजीर्णविसूचिकासु ॥४८॥

हिङ्ग्वादि।

त्रिफलाकाञ्चनक्षीरीसप्तलागोलिनीवचाः।
त्रायन्तीहवुषातिक्ताविवृत्सैन्धवपिप्पलीः ॥४९॥
पिबेत् सञ्चूर्ण्य मूत्रोष्णवारिमांसरसादिभिः।
सर्वगुल्मोदरप्लीहकुष्ठार्शःशोथपीड़ितः ॥५०॥
शटीपुष्करमूलञ्च दन्तीं चित्रकमाढ़कीम्।
शृङ्गवेरं वचाञ्चैव पलिकानि समाहरेत् ॥५१॥
त्रिवृतायाः पलञ्चैव कुर्य्यात् त्रीणि च हिङ्गुनः।
यवक्षारपले द्वे च द्वे पले चाम्लवेतसात् ॥५२॥
यमान्यजाजीमरिचं धान्यकञ्चेति कार्षिकम्।
उपकुञ्च्यजमोदाभ्यां तथा चाष्टमिकामपि ॥५३॥
मातुलुङ्गरसेनैव गुड़िकाः कारयेद्भिषक्।
तासामेकां पिबेद् द्वे च तिस्रो वापि सुखाम्बुना ॥५४॥
अम्लैश्च मद्यैर्यूषैश्च घृतेन पयसाथवा।
एषा काङ्कायनेनोक्ता गुड़िका गुल्मनाशिनी ॥५५॥
अर्शोहृद्रोगशमनी क्रिमीणाञ्च विनाशिनी।

गोमूत्रयुक्ता शमयेत् कफगुल्मं चिरोत्थितम् ॥५६॥
क्षीरेण पित्तगुल्मघ्न मद्यैरम्लैश्च वातिकम् ।
त्रिफलारसमूत्रैश्च नियच्छेत् सान्निपातिकम् ।
रक्तगुल्मे च नारीणामुष्ट्रीक्षीरेण पाययेत् ॥५७॥

काङ्कायनगुडिका ।

हवुषाव्योषपृथ्वीकाचव्यचित्रकसैन्धवैः ।
साजाजीपिप्पलीमूलदीप्यकैर्विपचेद् घृतम् ॥५८॥
सकोलमूलकरसं सक्षीरं दधि दाडिमम् ।
तत्परं वातगुल्मघ्नं शूलानाहविबन्धनुत् ॥५९॥
योन्यर्शोग्रहणीदोषश्वासकासाऽरुचिज्वरम् ।
पार्श्वहृद्बस्तिशूलञ्च घृतमेतद् व्यपोहति ॥६०॥

हवुषाद्यं घृतम् ।

पिप्पल्याः पिचुरध्यर्द्धो दाडिमाद् द्विपलं पलम् ।
धान्यात् पञ्च घृताच्छुण्ठ्याः कर्षः क्षीरं चतुर्गुणम् ॥६१॥
सिद्धमेतद्घृतं सद्यो वातगुल्मं चिकित्सति ।
योनिशूलं शिरःशूलमर्शांसि विषमज्वरान् ॥६२॥

पञ्चपलकं घृतम् ।

त्रायन्तीत्रिफलाधान्यविडङ्गचव्यचित्रकैः ।
कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥६३॥

त्रायन्त्याद्यं घृतम् ।

जले दशगुणे साध्यं त्रायमाणाचतुःपलम् ।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः ॥६४॥
रोहिणीकटुकामुस्तत्रायमाणादुरालभाः ।
कल्कैस्तामलकीवीराजीवन्तीचन्दनोत्पलैः ॥६५॥

रसस्यामलकीनाञ्च क्षीरस्य च घृतस्य च।
पलानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत् ॥६६॥
पित्तगुल्मं रक्तगुल्मं वीसर्पं पैत्तिकं ज्वरम्।
हृद्रोगं कामलां कुष्ठं हन्यादेतद् घृतोत्तमम् ॥६७॥
पलोन्मिते त्वागते माने न द्वैगुण्यमिहेष्यते।
चत्वारिंशत्पलं तेन तोयं दशगुणं भवेत् ॥६८॥

त्रायमाणाद्यं घृतम्।

द्राक्षामधुकखर्जूरं विदारीं सशतावरीम्।
परूषकाणि त्रिफलां साधयेत्पलसम्मिताम् ॥६९॥
जलाढके पादशेषे रसमामलकस्य च।
घृतमिक्षुरसं क्षीरमभयाकल्कपादिकम् ॥७०॥
साधयेत् तु घृतं सिद्धं शर्कराक्षौद्रपादिकम्।
योजयेत्पित्तगुल्मघ्नं सर्वपित्तविकारनुत् ॥७१॥
साहचर्यादिह पृथग्घृतादेः क्काथतुल्यता ॥७२॥

द्राक्षाद्यं घृतम्।

धात्रीफलानां स्वरसे षड्ङ्गं पाचयेद् घृतम्।
शर्करासैन्धवोपेतं तद्धितं सर्वगुल्मिनाम् ॥७३॥

धात्रीषट्पलकं घृतम्।

प्रत्येकभिः पलैर्मगधजाफलमूलचव्य-
विश्वौषधज्वलनयावजकल्कपक्कम्।
प्रस्थं घृतस्य दशमूल्युरुबूकभार्गी-
क्वाथेऽप्यथो पयसि दध्नि च षट्पलाख्यम् ॥७४॥
गुल्मोदरारुचिभगन्दरवह्निसाद-
कासज्वरक्षयशिरोग्रहणीविकारान्।

सद्यः शमं नयति ये च कफानिलोत्था-
भार्ग्याख्यषट्पलमिदं प्रवदन्ति तज्ज्ञाः ॥७५॥

भार्गीषट्पलकम् ।

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
पलिकैः सयवक्षारैः सर्पिःप्रस्थं विपाचयेत् ॥७६॥
क्षीरप्रस्थेन तत् सर्पिर्हन्ति गुल्मं कफात्मकम् ।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥७७॥

क्षीरषट्पलकं घृतम् ।

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम् ।
साध्यं विदारीगन्धाद्यमापोत्थसलिलाढ़के ॥७८॥
पादावशेषे पूते च पिप्पलीं नागरं वचाम् ।
विडङ्गं सैन्धवं हिङ्गु यावशूकं विड़ं शटीम् ॥७९॥
चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमान् भिषक् ।
प्रस्थञ्च पयसो दत्त्वा घृतप्रस्थं विपाचयेत् ॥८०॥
एतद्भल्लातकं नाम कफगुल्महरं परम् ।
प्लीहपाण्ड्वामयश्वासग्रहणीकासगुल्मनुत् ॥८१॥

भल्लातकं घृतम् ।

रसोनस्वरसे सर्पिः पञ्चमूलरसान्वितम् ।
सुरारणालदध्यम्लमूलकस्वरसैः सह ॥८२॥
व्योषदाड़िमवृक्षाम्लयमानीचव्यसैन्धवैः ।
हिङ्ग्वम्लवेतसाजाजीदीप्यकैश्च पलान्वितैः ॥८३॥
सिद्धं गुल्मग्रहण्यर्शःश्वासोन्मादक्षयज्वरान् ।
कासाऽपस्मारमन्दाग्निप्लीहशूलानिलान् जयेत् ॥८४॥

रसोनाद्यं घृतम् ।

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः ।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च ॥८५॥
तेनाष्टभागशेषेण पचेद्दन्तीसमं गुडम् ।
तास्वाभयात्रिवृच्चूर्णातैलाच्चापि चतुःपलम् ॥८६॥
पलमेकं कणाशुण्ठ्योः सिद्धे लेहे च शीतले ।
क्षौद्रं तैलसमं दद्याच्चातुर्जातपलन्तथा ॥८७॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम् ।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ॥८८॥
प्लीहश्वयथुगुल्मार्शोहृत्पाण्डुग्रहणीगदाः ।
शाम्यन्त्युत्क्लेशविषमज्वरकुष्ठान्यरोचकाः ॥८९॥

दन्तीहरीतकी ।

द्वक्षीरमुरुबूकञ्च वर्षाह्वं बृहतीद्वयम् ।
चित्रकञ्च जलद्रोणे पचेत्पादावशेषितम् ॥९०॥
मागधीचित्रकक्षौद्रलिप्तकुम्भे निधापयेत् ।
मधुनः प्रस्थमावाप्य पथ्याचूर्णार्द्धसंयुतम् ॥९१॥
व्युषोषितं दशाहञ्च जीर्णभक्तः पिबेन्नरः ।
अरिष्टोऽयं जयेद् गुल्ममविपाकं सुदुस्तरम् ॥९२॥

द्वक्षीराद्यरिष्टः ।

रौधिरस्य तु गुल्मस्य गर्भकालव्यतिक्रमे ।
स्निग्धस्विन्नशरीरायै दद्यात् स्निग्धं विरेचनम् ॥९३॥
शताह्वाचिरविल्वत्वग्दारुभार्गीकणोद्भवः ।
कल्कः पीतो हरेद् गुल्मं तिलक्वाथेन रक्तजम् ॥९४॥
तिलक्वाथो गुड़व्योषहिङ्गुभार्गीयुतो भवेत् ।
पानं रक्तभवे गुल्मे नष्टपुष्पे च योषिताम् ॥९५॥

सक्षारं त्र्यूषणं मद्यं प्रपिबेदस्रगुल्मिनी।
पलाशक्षारतोयेन सिद्धं सर्पिः पिबेच्च सा ॥९६॥
उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः।
न प्रभिद्येत यद्येवं दद्याद्योनिविशोधनम् ॥९७॥
क्षारेण युक्तं पललं सुधाक्षीरेण वा पुनः।
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहरी क्रिया ॥९८॥
भल्लातकात्कल्ककषायपक्वं सर्पिः पिबेच्छर्करया विमिश्रम्।
तद्रक्तपित्तं विनिहन्ति पीतं बलाशगुल्मं मधुना समेतम्॥९९
वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम्।
न खादेच्चालुकं गुल्मी मधुराणि फलानि च ॥१००॥
इति गुल्मचिकित्सा।

## अथ हृद्रोगाधिकारः।

वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम्।
द्विपञ्चमूलीक्वाथेन सस्नेहलवणेन च ॥१॥
पिप्पल्येलावचाहिङ्गुयवक्षारोऽथ सैन्धवम्।
सौवर्चलमथो शुण्ठीमजमोदावचूर्णितम् ॥२॥
फलधान्याम्लकौलत्थदधिमद्यासवादिभिः।
पाययेच्छुद्धदेहञ्च स्नेहेनान्यतमेन वा ॥३॥
नागरं वा पिबेदुष्णं कषायञ्चाग्निवर्द्धनम्।
कासश्वासानिलहरं शूलहृद्रोगनाशनम् ॥४॥
श्रीपर्णीमधुकक्षौद्रसितागुडजलैर्वमेत् ॥५॥
पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतम्।
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान् ॥६॥

शीताः प्रदेहाः परिषेचनानि
तथा विरेको हृदि पित्तदुष्टे।
द्राक्षासिताक्षौद्रपरूषकैः स्या-
च्छुद्धे च पित्तापहमन्नपानम् ॥७॥
पिष्ट्वा पिबेद्वापि सिताजलेन
यष्ट्याह्वयं तिक्तकरोहिणीञ्च ॥८॥

अर्जुनस्य त्वचा सिद्धं क्षीरं योज्यं हृदामये।
सितया पञ्चमूल्या वा बलया मधुकेन वा ॥९॥

घृतेन दुग्धेन गुडाम्भसा वा पिबन्ति चूर्णं ककुभत्वचो ये।
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते ॥१०॥

वचानिम्बकषायाभ्यां वान्तं हृदि कफोत्थिते।
वातहृद्रोगहृच्चूर्णं पिप्पल्यादिञ्च योजयेत् ॥११॥

त्रिदोषजे लङ्घनमादितः स्या-
दन्नञ्च सर्वेषु हितं विधेयम्।
हीनाधिमध्यत्वमवेक्ष्य चैव
कार्य्यं त्रयाणामपि कर्म्म शस्तम् ॥१२॥

चूर्णं पुष्करजं लिह्यान्माक्षिकेण समायुतम्।
हृच्छूलकासश्वासघ्नं क्षयहिक्कानिवारणम् ॥१३॥

तैलाज्यगुडविपक्वं चूर्णं गोधूमं पार्थजं वापि।
पिबति पयोऽनुचयं स भवति जितसकलहृदामयः पुरुषः ॥१४॥

गोधूमककुभचूर्णं छागपयोगव्यसर्पिषा विपक्वम्।
मधुशर्क्करासमेतं शमयति हृद्रोगमुद्धतं पुंसाम् ॥१५॥

मूलं नागबलायास्तु चूर्णं दुग्धेन पाययेत्।
हृद्रोगश्वासकासघ्नं ककुभस्य च वल्कलम् ॥१६॥

रसायनं परं बल्यं वातजिन्मांसयोजितम् ।
संवत्सरप्रयोगेण जीवेद्दर्षशतद्वयम् ॥१७॥

हिङ्गूग्रगन्धाविडविश्वकृष्णा-
कुष्ठाभयाचित्रकयावशूकम् ।
पिबेच्च सौवर्चलपुष्कराढ्यं
यवाम्भसा शूलहृदामयेषु ॥१८॥

दशमूलीकषायन्तु लवणक्षारयोजितम् ।
कासं श्वासञ्च हृद्रोगं गुल्मं शूलञ्च नाशयेत् ॥१९॥
पाठां वचां यवक्षारमभयामम्लवेतसम् ।
दुरालभां चित्रकञ्च त्र्यूषणञ्च पलत्रिकम् ॥२०॥
शटीं पुष्करमूलञ्च तिन्तिडीकं सदाडिमम् ।
मातुलुङ्गस्य मूलानि श्लक्ष्णचूर्णानि कारयेत् ॥२१॥
सुखोदकेन मद्यैर्वा चूर्णान्येतानि पाययेत् ।
अर्शःशूलानि हृद्रोगं गुल्मञ्चाशु व्यपोहति ॥२२॥
पुटदग्धमश्मपिष्टं हरिणविषाणन्तु सर्पिषा पिबतः ।
हृत्पृष्ठशूलमुपशममुपयात्यचिरेण कष्टमपि ॥२३॥
क्रिमिहृद्रोगिणं स्निग्धं भोजयेत् पिशितौदनम् ।
दध्ना च पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥२४॥
सुगन्धिभिः सलवणैर्योगैः साजाजिशर्करैः ।
विडङ्गगाढं धान्याम्लं पाययेद्धितमुत्तमम् ॥२५॥
क्रिमिजे च पिबेन्मूत्रं विडङ्गामयसंयुतम् ।
हृदि स्थिता पतन्त्येवमधस्तात् क्रिमयो नृणाम् ।
यवाह्नं वितरेच्चास्मै सविडङ्गमतः परम् ॥२६॥
मुस्थं शतांशञ्च हरीतकीनां सौवर्चलस्यापि पलद्वयञ्च ।

पक्वं घृतं वल्लभकेतिनाम्ना हृच्छ्वासशूलोदरमारुतघ्नम् ॥२७॥

वल्लभघृतम् ।

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्य्यकतृणम् ।
दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिरा ॥२८॥
पलिकान् साधयेत् तेषां रसे क्षीरे चतुर्गुणे ।
कल्कैः स्वगुप्तर्षभकमेदाजीवन्तिजीरकैः ॥२९॥
शतावर्य्यृद्धिमृद्वीकाशर्कराश्रावणीविषैः ।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्रोगशूलनुत् ॥३०॥
मूत्रकृच्छ्रप्रमेहार्शःश्वासकासक्षयापहः ।
धनुःस्त्रीमद्यभाराध्वक्षीणानां बलमांसदः ॥३१॥

श्वदंष्ट्राद्यं घृतम् ।

घृतं बलानागबलार्जुनाम्बुसिद्धं सयष्टीमधुकल्कपादम् ।
हृद्रोगशूलक्षतरक्तपित्तकासानिलासृक् शमयत्युदीर्णम् ॥३२॥

बलाद्यं घृतम् ।

पार्थस्य कल्कस्वरसेन सिद्धं शस्तं घृतं सर्वहृदामयेषु ॥३३॥

अर्जुनघृतम् ।

इति हृद्रोगचिकित्सा ।

## अथ मूत्रकृच्छ्राधिकारः ।

अभ्यञ्जनस्नेहनिरूहवस्तिस्वेदोपनाहोत्तरवस्तिसेकान् ।
स्थिरादिभिर्वातहरैश्च सिद्धान् दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥१॥
अमृतानागरं धात्रीवाजिगन्धात्रिकण्टकान् ।
प्रपिबेद्वातरोगार्त्तः सशूली मूत्रकृच्छ्रवान् ॥२॥
सेकावगाहाः शिशिराः प्रदेहा

येषो विधिर्वस्तिपयोविकाराः।
द्राक्षाविदारीक्षुरसैर्घृतैश्च
कृच्छ्रेषु पित्तप्रभवेषु कार्य्याः ॥३॥

कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम्।
पित्तकृच्छ्रहरं पञ्च मूलं वस्तिविशोधनम्।
एतत् स्निग्धं पयःपीतं मेढ्रगं हन्ति शोणितम् ॥४॥

शतावरीकाशकुशश्वदंष्ट्राविदारीशालीक्षुकशेरुकाणाम्।
क्वाथं सुशीतं मधुशर्करान्तं पिबन् जयेत् पैत्तिकमूत्रकृच्छ्रम् ॥५॥

हरीतकीगोक्षुरराजवृक्षपाषाणभिद्धन्वयवासकानाम्।
क्वाथं पिबेन्माक्षिकसंप्रयुक्तं कृच्छ्रे सदाहे सरुजे विबन्धे ॥६॥

गुडेनामलकं वृष्यं श्रमघ्नं तर्पणं परम्।
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रनिवारणम् ॥७॥

एर्वारुबीजं मधुकं सदार्वीं पैत्ते पिबेत् तण्डुलधावनेन।
दार्वीं तथैवामलकीरसेन समाक्षिकां पैत्तिकमूत्रकृच्छ्रे ॥८॥

क्षारोष्णतीक्ष्णौषधमन्नपानं
स्वेदो यवान्नं वमनं निरूहाः।
तक्रं सतिक्तौषधसिद्धतैला-
न्यभ्यङ्गपानं कफमूत्रकृच्छ्रे ॥९॥

मूत्रेण सुरया वापि कदलीस्वरसेन वा।
कफकृच्छ्रविनाशाय श्लक्ष्णं पिष्ट्वा त्रुटिं पिबेत् ॥१०॥

तक्रेण युक्तं शितिमारकस्य
बीजं पिबेत् कृच्छ्रविनाशहेतोः।
पिबेत् तथा तण्डुलधावनेन
प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥११॥

श्वदंष्ट्राविश्वतोयं वा कफकृच्छ्रविनाशनम् ॥१२॥

सर्वं त्रिदोषप्रभवे तु वायोः
स्थानानुपूर्व्या प्रसमीक्ष्य कार्य्यम्।
त्रिभ्योऽधिके प्राग्वमनं कफे स्यात्
पित्ते विरेकः पवने तु वस्तिः ॥१३॥

वृहतीधावनीपाठायष्टीमधुकलिङ्गकाः।
पाचनीयो वृहत्यादिः कृच्छ्रदोषत्रयापहः ॥१४॥
तथाभिघातजे कुर्य्यात् सद्यो व्रणचिकित्सितम्।
मूत्रकृच्छ्रे सदा चास्य कार्य्या वातहरी क्रिया ॥१५॥
स्वेदचूर्णक्रियाभ्यङ्गवस्तयः स्युः पुरीषजे।
क्वाथं गोक्षुरवीजस्य यवक्षारयुतं पिबेत् ॥१६॥
मूत्रकृच्छ्रं शकृज्जञ्च पीतं शीघ्रं निवारयेत् ॥१७॥

हिता क्रिया त्वश्मरिशर्करायां
या मूत्रकृच्छ्रे कफमारुतोत्थे ॥१८॥

लेह्यं शुक्रविबन्धोत्थे शिलाजतु समाक्षिकम्।
वृष्यैर्वृंहितधातोश्च विधेयाः प्रमदोत्तमाः ॥१९॥
एलाहिङ्गुयुतं क्षीरं सर्पिर्मिश्रं पिबेन्नरः।
मूत्रदोषविशुद्ध्यर्थं शुक्रदोषहरञ्च तत् ॥२०॥

यन्मूत्रकृच्छ्रे विहितन्तु पैत्ते
तत् कारयेच्छोणितमूत्रकृच्छ्रे ॥२१॥

त्रिकण्टकारग्वधदर्भकाश-
दुरालभापर्वतभेदपथ्याः।
निघ्नन्ति पीता मधुनाश्मरीञ्च
सम्प्राप्तमृत्योरपि मूत्रकृच्छ्रम् ॥२२॥

कषायोऽतिबलामूलसाधितः सर्वकृच्छ्रजित् ॥२३॥

एलाश्मभेदकशिलाजतुपिप्पलीनां
चूर्णानि तण्डुलजलैर्लुलितानि पीत्वा ।
यद्वा गुड़ेन सहितान्यवलिह्य तानि
चासन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥२४॥

अयोरजः श्लक्ष्णपिष्टं मधुना सह योजितम् ।
मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः ॥२५॥
सितातुल्यो यवक्षारः सर्वकृच्छ्रनिवारणः ।
निदिग्धिकारसो वापि सक्षौद्रः कृच्छ्रनाशनः ॥२६॥

शतावरीकाशकुशश्वदंष्ट्रा-
विदारिकेक्ष्वामलकेषु सिद्धम् ।
सर्पिः पयो वा सितया विमिश्रं
कृच्छ्रेषु पित्तप्रभवेषु योज्यम् ॥२७॥

शतावरीघृतं क्षीरञ्च ।

त्रिकण्टकैरण्डकुशाद्यभीरु-
कर्कारुकेक्षुस्वरसेन सिद्धम् ।
सर्पिर्गुड़ार्द्धांशयुतं प्रपेयं
कृच्छ्राश्मरीमूत्रविघातहेतोः ॥२८॥

त्रिकण्टकाद्यं घृतम् ।

पुनर्नवामूलतुलादशमूलं शतावरी ।
बला तुरगगन्धा च तृणमूलं त्रिकण्टकम् ॥२९॥
विदारी गन्धा नागाह्वगुडूच्यतिबला तथा ।
पृथक् दशपलान् भागान् जलद्रोणे विपाचयेत् ॥३०॥
तेन पादावशेषेण घृतस्यार्द्धाढ़कं पचेत् ।

मधुकं शृङ्गवेरञ्च द्राक्षासैन्धवपिप्पली: ॥२१॥
द्विपलिकाः पृथग्दद्यात् यमान्याः कुड़वस्तथा ।
त्रिंशत्कुड़पलान्यत्र तैलस्यैरण्डजस्य च ॥२२॥
प्रस्थं दत्त्वा समालोड्य सम्यङ्मृद्वग्निना पचेत् ।
एतदीश्वरपुत्राणां प्राग्भोजनमनिन्दितम् ॥२३॥
राज्ञां राजसमानाश्च बहुस्त्रीपतयश्च ये ।
मूत्रकृच्छ्रे कटिस्तम्भे तथा गाढ़पुरीषिणाम् ॥२४॥
मेढ्रवङ्क्षणशूले च योनिशूले च शस्यते ।
यथोक्तानाञ्च गुल्मानां वातशोणितकाश्च ये ॥२५॥
वल्यं रसायनं शीतं सुकुमारकुमारकम् ।
पुनर्नवाशते द्रोणो देयोऽन्येषु तथापरः ॥२६॥

सुकुमारकुमारकम् ।

इति मूत्रकृच्छ्रचिकित्सा ।

## अथ मूत्राघाताधिकारः ।

मूत्राघातान् यथादोषं मूत्रकृच्छ्रहरैर्जयेत् ।
वस्तिमुत्तरवस्तिञ्च दद्यात् स्निग्धं विरेचनम् ॥१॥
कल्कमेर्वारुवीजानामक्षमात्रं ससैन्धवम् ।
धान्याम्लयुक्तं पीत्वैव मूत्राघाताद्विमुच्यते ॥२॥
पाटल्या यावशूकाच्च पारिभद्रात्तिलादपि ।
क्षारोदकेन मदिरां त्वगेलोषणसंयुताम् ॥३॥
पिबेद् गुड़ोपदंशान्वा लिह्यादेतान् पृथक् पृथक् ।
त्रिफलाकल्कसंयुक्तं लवणं वापि पाययेत् ॥४॥
निदिग्धिकायाः स्वरसं पिबेद् वातान्तरस्तुतम् ।

कषायोऽतिबलामूलसाधितः सर्वकृच्छ्रजित् ॥२३॥

एलाश्मभेदकशिलाजतुपिप्पलीनां
चूर्णानि तण्डुलजलैर्लुलितानि पीत्वा ।
यद्वा गुडेन सहितान्यवलिह्य तानि
चासन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥२४॥

अयोरजः श्लक्ष्णपिष्टं मधुना सह योजितम् ।
मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः ॥२५॥
सितातुल्यो यवक्षारः सर्वकृच्छ्रनिवारणः ।
निदिग्धिकारसो वापि सक्षौद्रः कृच्छ्रनाशनः ॥२६॥

शतावरीकाशकुशश्वदंष्ट्रा-
विदारिकेक्ष्वामलकेषु सिद्धम् ।
सर्पिः पयो वा सितया विमिश्रं
कृच्छ्रेषु पित्तप्रभवेषु योज्यम् ॥२७॥

शतावरीघृतं क्षीरञ्च ।

त्रिकण्टकैरण्डकुशाद्यभीरु-
कर्कारुकेक्षुस्वरसेन सिद्धम् ।
सर्पिर्गुडार्द्धांशयुतं प्रपेयं
कृच्छ्राश्मरीमूत्रविघातहेतोः ॥२८॥

त्रिकण्टकाद्यं घृतम् ।

पुनर्नवामूलतुलादशमूलं शतावरी ।
बला तुरगगन्धा च तृणमूलं त्रिकण्टकम् ॥२९॥
विदारी गन्धा नागाह्वगुडूच्यतिबला तथा ।
पृथक् दशपलान् भागान् जलद्रोणे विपाचयेत् ॥३०॥
तेन पादावशेषेण घृतस्यार्द्धाढकं पचेत् ।

मधुकं शृङ्गवेरञ्च द्राक्षासैन्धवपिप्पली: ॥२१॥
द्विपलिका: पृथग्दद्यात् यमान्या: कुड़वस्तथा ।
त्रिंशत् कुपलान्यत्र तैलस्यैरण्डजस्य च ॥२२॥
प्रस्थं दत्त्वा समालोड्य सम्यङ्मृदग्निना पचेत् ।
एतदीश्वरपुत्राणां प्राग्भोजनमनिन्दितम् ॥२३॥
राज्ञां राजसमानाश्च बहुस्त्रीपतयश्च ये ।
मूत्रकृच्छ्रे कटिस्तम्भे तथा गाढ़पुरीषिणाम् ॥२४॥
मेढ्रवङ्क्षणशूले च योनिशूले च शस्यते ।
यथोक्तानाञ्च गुल्मानां वातशोणितकाश्च ये ॥२५॥
बल्यं रसायनं शीतं सुकुमारकुमारकम् ।
पुनर्नवाशते द्रोणो देयोऽन्येषु तथापरः ॥२६॥

सुकुमारकुमारकम् ।

इति मूत्रकृच्छ्रचिकित्सा ।

## अथ मूत्राघाताधिकारः ।

मूत्राघातान् यथादोषं मूत्रकृच्छ्रहरैर्जयेत् ।
वस्तिमुत्तरवस्तिञ्च दद्यात् स्निग्धं विरेचनम् ॥१॥
कल्कमेर्वारुवीजानामक्षमात्रं ससैन्धवम् ।
धान्याम्लयुक्तं पीत्वैव मूत्राघाताद्विमुच्यते ॥२॥
पाटल्या यावशूकाच्च पारिभद्रात्तिलादपि ।
क्षारोदकेन मदिरां त्वगेलोषणसंयुताम् ॥३॥
पिबेद् गुड़ोपदंशान्वा लिह्यादेतान् पृथक् पृथक् ।
त्रिफलाकल्कसंयुक्तं लवणं वापि पाययेत् ॥४॥
निदिग्धिकाया: स्वरसं पिबेद् वातान्तरस्नुतम् ।

जले कुङ्कुमकल्कं वा सक्षौद्रमुषितं निशि ॥५॥
सतैलं पाटलाभस्मक्षारवद्वा परिस्रुतम् ।
सुरां सौवर्चलवतीं मूत्राघाती पिबेन्नरः ॥६॥
दाड़िमाम्बुयुतं मुख्यमेलावीजं सनागरम् ।
पीत्वा सुरां सलवणां मूत्रघाताद्विमुच्यते ॥७॥
पिबेच्छिलाजतु क्वाथे गणे वीरतरादिके ।
रसं दुरालभाया वा कषाये वासकस्य वा ॥८॥
त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपञ्चमूलैः ।
गुड़प्रगाढ़ं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत् ॥९॥
नलकुशकाशेक्षुशिफां क्वथितां प्रातः सुशीतलां सुशीताम् ।
पिबतः प्रयाति नियतं मूत्रग्रह इत्युवाच कचः ॥१०॥
गोधावत्या मूलं क्वथितं घृततैलगोरसैर्मिश्रम् ।
पीतं निरुद्धमचिराद्भिनत्ति मूत्रस्य संघातम् ॥११॥
जलेन खदिरीवीजं मूत्राघाताश्मरीहरम् ।
मूलन्तु त्रिजटायाश्च तक्रपीतं तदर्थकृत् ॥१२॥
मूत्रे विबद्धे कर्पूरचूर्णं लिङ्गे प्रवेशयेत् ।
शृतशीतपयोऽश्नाशी चन्दनं तण्डुलाम्बुना ॥१३॥
पिबेत् सशर्करं श्रेष्ठमुष्णवाते सशोणिते ।
शीतोऽवगाह आवस्तिमुष्णवातनिवारणः ॥१४॥
कुष्माण्डकरसश्चापि पीतः सक्षारशर्करः ।
स्त्रीणामतिप्रसङ्गेन शोणितं यस्य सिच्यते ॥१५॥
मैथुनोपरमश्चास्य बृंहणीयो हितो विधिः ।
श्वगुप्ताफलमृद्वीकाकृष्णेक्षुरसितारजः ॥१६॥
समांशमर्द्धभागानि क्षीरक्षौद्रघृतानि च ।

सर्वं सम्यग्विमथ्याच्चमानं लीढ़ा पयः पिबेत् ॥१७॥
हन्ति शुक्राशयोत्थांश्च दोषान् बन्ध्यासुतप्रदम्।
श्विरकं शारिवा चैव बलाकालानुशारिवा ॥१८॥
द्राक्षाविशालापिप्पल्यस्तथा चित्रफला भवेत्।
तथैव मधुकं दद्याद्दद्यादामलकानि च ॥१९॥
घृताढ़कं पचेदेभिः कल्कैरक्षसमन्वितैः।
क्षीरद्रोणे जलद्रोणे तत्सिद्धमवतारयेत् ॥२०॥
शीतं परिस्रुतञ्चैव शर्कराप्रस्थसंयुतम्।
तुगाक्षीर्य्याश्च तत् सर्वं मतिमान् प्रतिमिश्रयेत् ॥२१॥
ततो मितं पिबेत् काले यथादोषं यथाबलम्।
वातरेताः पित्तरेताः श्लेष्मरेताश्च यो भवेत् ॥२२॥
रक्तरेता ग्रन्थिरेताः पिबेदिच्छन्नरोगताम्।
जीवनीयञ्च वृष्यञ्च सर्पिरेतन्महागुणम् ॥२३॥
प्रजाहितञ्च धन्यञ्च सर्वरोगापहं शिवम्।
सर्पिरेतत् प्रयुञ्जाना स्त्री गर्भं लभतेऽचिरात् ॥२४॥
असृग्दोषान् जयेच्चैव योनिदोषांश्च संहतान्।
मूत्रदोषेषु सर्वेषु कुर्य्यादेतच्चिकित्सितम् ॥२५॥

चित्रकाद्यं घृतम्।

इति मूत्राघातचिकित्सा।

## अथाश्मर्य्यधिकारः।

वरुणस्य त्वचं श्रेष्ठां शुण्ठीगोक्षुरसंयुताम्।
यवक्षारगुड़ं दत्त्वा क्वाथयित्वा पिबेद्धिताम् ॥१॥
अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम्।

वीरतरः सहचरी दर्भो वृक्षादनी नलः ॥२॥
गुन्द्राकाशकुशावश्मभेदमोरटटुण्टुकाः ।
कुरण्टिका च वसिरो वसुकः साग्निमन्थकः ॥३॥
इन्दीवरी श्वदंष्ट्रा च तथा कापोतवक्रकौः ।
वीरतरादिरित्येष गणो वातविकारनुत् ॥४॥
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ।
शुण्ठ्यग्निमन्थपाषाणशिग्रुवरुणगोक्षुरैः ॥५॥
अभयारग्वधफलैः क्वाथं कुर्य्याद्विचक्षणः ।
रामठक्षारलवणचूर्णं दत्त्वा पिबेन्नरः ॥६॥
अश्मरीमूत्रकृच्छ्रघ्नं पाचनं दीपनं परम् ।
हन्यात् कोष्ठाश्रितं वातं कट्यूरुगुदमेढ्रगम् ॥७॥
पाषाणभेदो वसुको वसिरोऽश्मन्तकस्तथा ।
शतावरी श्वदंष्ट्रा च वृहती कण्टकारिका ॥८॥
कपोतवक्रार्त्तगलकाञ्चनोशीरगुल्मकाः ।
वृक्षादनीभल्लूकश्च वरुणः शाकजं फलम् ॥९॥
यवाः कुलत्थाः कोलानि कतकस्य फलानि च ।
ऊषकादिप्रतिवापमेषां क्वाथे शृतं घृतम् ॥१०॥
भिनत्ति वातसम्भूतामश्मरीं क्षिप्रमेव तु ।
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च ।
भोजनानि च कुर्वीत वर्गेऽस्मिन् वातनाशने ॥११॥

कशाद्यं घृतम् ।

ऊषकं सैन्धवं हिङ्गु काशीशद्वयगुग्गुलुः ।
शिलाजतुतुत्थकञ्च ऊषकादिरुदाहृतः ॥१२॥
ऊषकादिः कफं हन्ति गणो मेदोविशोधनः ।

अश्मरीशर्करामूत्रशूलघ्नः कफगुल्मनुत् ॥१३॥

ऊषकादिः।

कुशः काशः शरो गुन्द्र इत्कटो मोरटोऽश्मभित्।
दर्भो विदारी वाराही शालिमूलं त्रिकण्टकः ॥१४॥
भल्लूकः पाटली पाठा पत्तूरोऽथ कुरण्टिका।
पुनर्नवे शिरीषश्च क्वथितास्तेषु साधितम् ॥१५॥
घृतं शिलाह्वमधुकं बीजैरिन्दीवरस्य च।
त्रपुषैर्वारुकाणां वा बीजैश्चावापितं शृतम् ॥१६॥
भिनत्ति पित्तसम्भूतामश्मरीं क्षिप्रमेव तु।
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च।
भोजनानि च कुर्वीत वर्गेऽस्मिन् पित्तनाशने ॥१७॥

कुशाद्यं घृतम्।

मणे वरुणकादौ च गुग्गुल्वेलाहरेणुभिः।
कुष्ठमुस्ताह्वमरिचचित्रकैः ससुराह्वयैः ॥१८॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च।
भिनत्ति कफसम्भूतामश्मरीं क्षिप्रमेव तु ॥१९॥
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च।
भोजनानि प्रकुर्वीत वर्गेऽस्मिन् कफनाशने ॥२०॥
वरुणार्त्तगलः शिग्रुतर्क्कारीमधुशिग्रुकाः।
मेषशृङ्गीकरञ्जौ च विम्बाग्निमन्थमोरटाः ॥२१॥
शैरीयौ शिरीषो दर्भो वरीवसुकचित्रकौ।
विल्वं चैवाजशृङ्गी च बृहतीद्वयमेव च ॥२२॥
वरुणादिगणो ह्येष कफमेदोनिवारणः।

विनिहन्ति शिर:शूलं गुल्माद्यन्तरविद्रधीन् ॥२३॥

वरुणादिगणः वरुणादिघृतम् ।

वरुणत्वक्कषायन्तु पीतञ्च गुड़संयुतम् ।
अश्मरीं पातयत्याशु वस्तिशूलनिवारणम् ॥२४॥
यवक्षारं गुड़ोन्मिश्रं पिबेत् पुष्पफलोद्भवम् ।
रसं मूत्रविबन्धघ्नं शर्कराश्मरिविनाशनम् ॥२५॥
पिबेत् वरुणमूलत्वक्क्वाथं तत्कल्कसंयुतम् ।
क्वाथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरीघातकः ॥२६॥
नागरवरुणगोक्षुरपाषाणभेदकपोतवङ्कजः क्वाथः ।
गुड़यावशूकमिश्रः पीतो हन्त्यश्मरीमुग्राम् ॥२७॥
वरुणत्वक्शिलाभेदशुण्ठीगोक्षुरकैः कृतः ।
कषायः क्षारसंयुक्तः शर्कराञ्च भिनत्त्यपि ॥२८॥
श्वदंष्ट्रैरण्डपत्राणि नागरं वरुणत्वचम् ।
एतत् क्वाथवरं प्रातः पिबेदश्मरिभेदनम् ॥२९॥

मूलं श्वदंष्ट्रेक्षुरकोरुवूकात्
क्षीरेण पिष्टं वृहतीद्वयाच्च ।
आलोड्य दध्ना मधुरेण पेयं
दिनानि सप्ताश्मरिभेदनार्थम् ॥३०॥

पक्वेक्षाकुरसः क्षारः सितायुक्तोऽश्मरीहरः ।३१॥
पाषाणरोगपीड़ां सौवर्चलयुक्ता सुरा जयति ।
तद्वन्मधुदुग्धयुता त्रिरात्रं तिलनालभूतिश्च ॥३२॥

एलोपकुल्यामधुकाश्मभेद-
कौन्तीश्वदंष्ट्रावृषकोरुवूकैः ।
क्वाथं पिबेदश्मजतुप्रगाढ़ं

सशर्करे साश्मरिमूत्रकृच्छ्रे ॥२३॥

एलादिः ।

त्रिकण्टकस्य वीजानां चूर्णं माक्षिकसंयुतम् ।
अवीक्षीरेण सप्ताहं पिवेदश्मरीनाशनम् ।
शुक्राश्मर्य्यान्तु सामान्यो विधिरश्मरिनाशनः ॥२४॥

पाषाणभेदं वृषकं श्वदंष्ट्रा-
पाठाभयाव्योषशटीनिकुम्भाः ।
हिंस्राखराश्वासितिमारकाणा-
मेर्वारुकाणाल पुषाश्च वीजम् ॥२५॥
उकुञ्चिकाहिङ्गु सवेतसाम्लं
स्याद् द्वे वृहत्यौ हवुषा वचा च ।
चूर्णं पिवेदश्मरिभेदि पक्कं
सर्पिश्च गोमूत्रचतुर्गुणं तैः ॥२६॥

पाषाणभेदाद्यं चूर्णं घृतञ्च ।

कुलत्थसिन्धूत्थविडङ्गसारं
सशर्करं शीतलियावशूकम् ।
वीजानि कुष्माण्डकगोक्षुराभ्यां
घृतं पचेन्नावरुणस्य तोये ॥२७॥
दुःसाध्यसर्व्वाश्मरिमूत्रकृच्छ्रं
मूत्राभिघातञ्च समूत्रबन्धम् ।
एतानि सर्व्वाणि निहन्ति शीघ्रं
प्ररूढवृक्षानिव वज्रपातः ॥२८॥

कुलत्थाद्यं घृतम् ।

शरादिपञ्चमूल्या वा कषायेण पचेद् घृतम् ।

प्रस्थं गोक्षुरकल्केन सिद्धमध्यात्मशर्करम् ।
अश्मरीमूत्रकृच्छ्रघ्नं रेतोमार्गरुजापहम् ॥ ३९ ॥

शरादिपञ्चमूल्यादिघृतम् ।

वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत् ।
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत् ॥ ४० ॥
वरुणं कदलीबिल्वं तृणजं पञ्चमूलकम् ।
अमृताश्माश्मजं देयं बीजञ्चात्र पुषोद्भवम् ॥ ४१ ॥
शतपर्व्वतिलक्षारं पलाशक्षारमेव च ।
यूथिकायाश्च मूलानि कार्षिकाणि समावपेत् ॥ ४२ ॥
अस्य मात्रां पिबेज्जन्तुर्देशकालाद्यपेक्षया ।
जीर्णे तस्मिन् पिबेत् पूर्व्वं गुड़ं जीर्णन्तु मस्तुना ।
अश्मरीं शर्कराञ्चैव मूत्रकृच्छ्रञ्च नाशयेत् ॥ ४३ ॥

वरुणाद्यं घृतम् ।

वृष्णाधिकारे यत् तैलं सैन्धवाद्यं प्रकीर्त्तितम् ।
तत् तैलं द्विगुणक्षीरं पचेद् वीरतरादिना ॥ ४४ ॥
क्वाथेन पूर्व्वकल्केन साधितन्तु भिषग्वरैः ।
एतत् तैलवरं श्रेष्ठमश्मरीणां विनाशनम् ॥ ४५ ॥
मूत्राघाते तत्र कृच्छ्रे पिच्छिते मथिते तथा ।
भग्ने श्रमाभिपन्ने च सर्व्वथैव प्रशस्यते ॥ ४६ ॥

वीरतराद्यं तैलम् ।

त्वक्पत्रमूलपुष्पस्य वरुणात् सत्रिकण्टकात् ।
कषायेण पचेत् तैलं वस्तिना स्थापनेन च ।
शर्कराश्मरीशूलघ्नं मूत्रकृच्छ्रनिवारणम् ॥ ४७ ॥

वरुणाद्यं तैलम् ।

शस्त्रविस्रामशाम्यन्तीं प्रत्याख्याय समुद्धरेत्।
पायुञ्चिमाङ्गुलीभ्यान्तु गुदमेढ्रान्तरे गताम् ॥४८॥
सेवन्याः सव्यपार्श्वे च यवमात्रं विमुच्य तु।
व्रणं कृत्वाश्मरीमात्रं कर्षेत् तां शस्त्रकर्मवित् ॥४९॥
भिन्ने तु वस्तौ दुर्ज्ञानान्मृत्युः स्यादश्मरीं विना।
निःशेषामश्मरीं कुर्य्याद्वस्तौ रक्तञ्च निर्हरेत् ॥५०॥
हृताश्मरीकदुष्णाम्भो गाहयेद्भोजयेच्च तम्।
गुडं मूत्रविशुद्ध्यर्थं मध्वाज्याक्तव्रणं ततः ॥५१॥
दद्यात् साज्यां त्र्यहं पेयां साधितां मूत्रशोधिभिः।
आदशाहं ततो दद्यात् पयसा मृदुनोदनम् ॥५२॥
स्वेदयेत्तमध्वाज्यं कषायैः चालयेद् व्रणम्।
प्रपौण्डरीकमञ्जिष्ठायष्टिलोध्रैश्च लेपयेत् ॥५३॥
एतैश्च सलिलैः सिद्धं घृतमभ्यञ्जने हितम्।
अप्रशान्ते तु सप्ताहाद् व्रणे दाहोऽपि चेष्यते।
दैवान्नाभ्यां तु या लग्ना तां विपाट्यापकर्षयेत् ॥५४॥

इत्यश्मरीशर्कराचिकित्सा।

## अथ प्रमेहाधिकारः।

श्यामाककोद्रवोद्दालगोधूमचणकाढकी।
कुलत्थाश्च हिता भोज्ये पुराणमेहिनां सदा ॥१॥
जाङ्गलं तिक्तशाकानि यवान्नञ्च तथा मधु।
पारिजातजयानिम्बवह्निगायत्रिणां पृथक् ॥२॥
पाठायाः सागुरोः पीता हयस्य शारदस्य च।
जलेक्षुमद्यसिकतांशनैर्लवणपिष्टकान्।

सान्द्रमेहान् क्रमात् घ्नन्ति अष्टौ क्वाथाः समाक्षिकाः ॥३॥
दूर्वाकशेरुपूतीकपुंभीकल्ववशैवलम् ।
जलेन क्वथितं पीतं शुक्रमेहहरं परम् ॥४॥
त्रिफलारग्वधद्राक्षाकषायो मधुसंयुतः ।
पीतो निहन्ति फेनाख्यं प्रमेहं नियतं नृणाम् ॥५॥

लोध्राभयाकट्फलमुस्तकानां
विड़ङ्गपाठार्जुनधन्वनानाम् ।
कदम्बशालार्ज्जुनदीप्यकानां
विड़ङ्गदार्वीधवशल्लकीनाम् ॥६॥

चत्वार एते मधुना कषायाः कफप्रमेहेषु निषेवणीयाः ॥७॥

अश्वत्थाश्वतुरङ्गुल्या न्यग्रोधादेः फलत्रिकात् ।
सजिङ्गिरक्तसाराच्च क्वाथाः पञ्च समाक्षिकाः ॥८॥
नीलहरिद्रफेनाख्यक्षारमञ्जिष्ठकाह्वयान् ।
मेहान् हन्युः क्रमादेते सक्षौद्रो रक्तमेहनुत् ।
क्वाथः खर्जूरकाश्मर्य्यतिन्दुकास्थ्यमृताकृतः ॥८॥

लोध्रार्ज्जुनोशीरकुचन्दनाना-
मरिष्टसेव्यामलकाभयानाम् ।
धात्र्यर्जुनारिष्टकवत्सकानां
नीलोत्पलैलातिनिशार्ज्जुनानाम् ॥१०॥

चत्वार एते विहिताः कषायाः पित्ते प्रमेहे मधुसंप्रयुक्ताः ११

छिन्नावह्निकषायेण पाठाकुटजरामठम् ।
तिक्तां कुष्ठञ्च सञ्चूर्ण्य सर्पिर्मेहे पिबेन्नरः ॥१२॥
कदरखदिरपुगक्वाथं क्षौद्रान्वये पिबेत् ।
अग्निमन्थकषायन्तु वसामेहे प्रयोजयेत् ॥१३॥

पाठाग्निरोषदुष्पर्णमुर्वाकिंशुकतिन्दुक-
कपित्थानां भिषक् क्वाथं हस्तिमेहे प्रयोजयेत् ॥१४॥
कम्पिल्लसप्तच्छदशालजानि
विभीतरौहीतककौटजानि।
कपित्थपुष्पाणि च चूर्णितानि
क्षौद्रेण लिह्यात् कफपित्तमेही ॥१५॥
सर्वमेहहरो धात्र्या रसः क्षौद्रनिशायुतः।
कषायस्त्रिफलादारुमुस्तकैरथवा कृतः ॥१६॥
फलत्रिकं दारुनिशां विशालां
मुस्तञ्च निष्क्वाथ्य निशांशकल्कम्।
पिबेत् कषायं मधुसंप्रयुक्तं
सर्वेषु मेहेषु समुत्थितेषु ॥१७॥
कटं कटेरीमधुकत्रिफलाचित्रकैः समैः।
सिद्धः कषायः पातव्यः प्रमेहाणां विनाशनः ॥१८॥
त्रिफलादारुदार्व्यब्दक्वाथः क्षौद्रेण मेहहा।
कुटजाशनदार्व्यब्दफलत्रयभवोऽथवा ॥१९॥
त्रिफलालोहशिलाजतुपथ्याचूर्णञ्च लीढमेकैकम्।
मधुनामरास्वरस इव सर्वान्मेहान्निरस्यति ॥२०॥
शालमुष्ककम्पिल्लकल्कमक्षसमं पिबेत्।
धात्रीरसेन सक्षौद्रं सर्वमेहहरं परम् ॥२१॥
न्यग्रोधोडुम्बराश्वत्थश्योणाकारग्वधाशनम्।
आम्रजम्बूकपित्थञ्च पियालं ककुभं धवम् ॥२२॥
मधुको मधुकं लोध्रं वरुणम् पारिभद्रकम्।
पटोलं मेषशृङ्गी च दन्ती चित्रकमाढ़की ॥२३॥

करञ्जत्रिफलाशक्रभल्लातकफलानि च ।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥२४॥
न्यग्रोधाद्यमिदं चूर्णं मधुना सह लेहयेत् ।
फलत्रयरसञ्चानुपिबेन्मूत्रं विशुध्यति ॥२५॥
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च ।
प्रशमं यान्ति योगेन पीड़का न च जायते ।
न्यग्रोधाद्यमिदन्त्वत्र चाम्रजम्ब्वस्थि गृह्यते ॥२६॥

न्यग्रोधाद्यं चूर्णम् ।

त्रिकण्टकाश्मन्तकसोमवल्कै:
भल्लातकैः सातिविषैः सलोध्रैः ।
वचापटोलार्जुननिम्बमुस्तै:
हरिद्रया दीप्यकपद्मकैश्च ॥२७॥
मञ्जिष्ठपाठागुरुचन्दनैश्च
सर्वैः समस्तैः कफवातजेषु ।
मेहेषु तैलं विपचेद् घृतन्तु
पित्तेषु मिश्रं त्रिषु लक्षणेषु ॥२८॥
त्रिकण्टकाद्यं तैलं घृतं यमकञ्च ।

कफमेहहरक्वाथसिद्धं सर्पिः कफे हितम् ।
पित्तमेहघ्ननिर्यूहसिद्धं पित्ते हितं घृतम् ॥२९॥
दशमूलं करञ्जौ द्वौ देवदारुहरीतकी ।
वर्षाभूवरुणो दन्ती चित्रकं सपुनर्नवम् ॥३०॥
सुधानीपकदम्बाश्च बिल्वभल्लातकानि च ।
शटीपुष्करमूलञ्च पिप्पलीमूलमेव च ॥३१॥
पृथक् दशपलान् भागान् ततस्तोयार्मणे पचेत् ।

यवकोलकुलत्थानां प्रस्थं प्रस्थञ्च दापयेत्।
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥३२॥
निचुलं त्रिफला भार्गी रोहिषं गजपिप्पली।
शृङ्गवेरं विडङ्गानि वचा कम्पिल्लकन्तथा ॥३३॥
गर्भेणानेन तत् सिद्धं पाययेत् तु यथाबलम्।
एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम् ॥३४॥
कुष्ठं गुल्मं प्रमेहांश्च श्वयथुं वातशोणितम्।
प्लीहोदरं तथार्शांसि विद्रधिं पीडकाश्च याः।
अपस्मारं तथोन्मादं सर्पिरेतन्नियच्छति ॥३५॥
पृथक्तोयामणे तत्र पचेद्द्रव्याच्छतं शतम्।
शतत्रयाधिके तोयमुत्सर्गक्रमतो भवेत् ॥३६॥

धान्वन्तरं घृतम्।

त्रिकटु त्रिफलाचूर्णतुल्ययुक्तन्तु गुग्गुलुम्।
गोक्षुरक्वाथसंयुक्तं गुड़िकां कारयेद्भिषक् ॥३७॥
दोषकालबलापेक्षी भक्षयेच्चानुलोमिकीम्।
न चात्र परिहारोऽस्ति कर्म कुर्य्याद्यथेप्सितम्।
प्रमेहान् मूत्रघातांश्च बालरोगोदरं जयेत् ॥३८॥

त्र्यूषणादिगुड़िका।

शालसारादितोयेन भावितं यच्छिलाजतु।
पिबेत्तेनैव संशुद्धदेहः पिष्टं यथाबलम् ॥३९॥
जाङ्गलानां रसैः सार्द्धं तस्मिन् जीर्णे च भोजनम्।
कुर्य्यादेवं तुलां यावदुपयुञ्जीत मानवः ॥४०॥
मधुमेहं विहायासौ शर्करामश्मरीन्तथा।

वपुर्वर्णबलोपेतः शतं जीवत्यनामयः ॥४१॥

शिलाजतुप्रयोगः ।

विड़ङ्गत्रिफलामुस्तैः कणया नागरेण च ।
जीरकाभ्यां युतो हन्ति प्रमेहानतिदुस्तरान् ।
लौहो मूत्रविकारांश्च सर्वमेव न संशयः ॥४२॥

विड़ङ्गादिलौहः ।

माक्षिकं धातुमप्येवं युञ्ज्यात्तस्याप्ययं गुणः ।
शालसारादिवर्गस्य क्वाथे तु घनतां गते ॥४३॥
दन्तीलोध्रशिवाकान्तलौहताम्ररजः क्षिपेत् ।
घनीभूतमदग्धञ्च प्राश्य मेहान् व्यपोहति ॥४४॥
व्यायामजातमखिलं भजन्मेहान् व्यपोहति ।
पादत्रच्छत्ररहितो भैक्षाशी मुनिवद्यतः ॥४५॥
योजनानां शतं गच्छेदधिकं वा निरन्तरम् ।
मेहान् जेतुं बलेनापि नीवारामलकाशनः ॥४६॥
शराविकाद्याः पीड़काः साधयेच्छोथवद्भिषक् ।
पक्वाश्चिकित्सेद् व्रणवत् तासां पाने प्रशस्यते ॥४७॥
क्वाथं वनस्पतेर्वास्तं मूत्रञ्च व्रणशोधनम् ।
एलादिकेन कुर्वीत तैलञ्च व्रणरोपणम् ॥४८॥
आरग्वधादिना कुर्य्यात् क्वाथमुद्वर्त्तनानि च ।
शालसारादिसेकञ्च भोज्यादिष्व कषादिना ॥४९॥
सौवीरकं सुरां शुक्तं तैलं क्षीरं घृतं गुड़म् ।
अम्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ॥५०॥

इति प्रमेहमधुमेहपीड़काधिकारः ।

---

# अथ स्थौल्याधिकारः ।

श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रियः ।
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनः ॥१॥
अस्वप्नञ्च व्यवायञ्च व्यायामं चिन्तनानि च ।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणातिप्रवर्द्धयेत् ॥२॥
प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम् ।
उष्णमन्नस्य मण्डं वा पिबन् कृशतनुर्भवेत् ॥३॥
सचव्यजीरकव्योषहिङ्गुसौवर्चलानलाः ।
मस्तुना शक्तवः पीता मेदोघ्ना वह्निदीपनाः ॥४॥
विड़ङ्गनागरक्षारकाललोहरजो मधु ।
यवामलकचूर्णन्तु प्रयोगः स्थौल्यनाशनः ॥५॥
व्योषं विड़ङ्गशिग्रूणि त्रिफलां कटुरोहिणीम् ।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम् ॥६॥
हिङ्गुकेवूकमूलानि यमानिधान्यचित्रकम् ।
सौवर्चलमजाजीञ्च हवुषाञ्चेति चूर्णयेत् ॥७॥
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः ।
शक्तूनां षोड़शगुणो भागः सन्तर्पणं पिबेत् ॥८॥
प्रयोगात् तस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः ।
प्रमेहा मूढ़वाताश्च कुष्ठान्यर्शांसि कामलाः ॥९॥
प्लीहपाण्ड्वामयः शोथो मूत्रकृच्छ्रमरोचकः ।
हृद्रोगो राजयक्ष्मा च कासश्वासौ गलग्रहाः ॥१०॥
क्रिमयो ग्रहणीदोषाः श्वैत्रं स्थौल्यमतीव च ।
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च जायते ॥११॥

व्योषाद्यशक्तुप्रयोगः ।

बदरी पत्रकल्केन पेया काञ्जिकसाधिता ।
स्थौल्यनुत्स्यात्साग्निमन्थरसं वापि शिलाजतु ॥१२॥
अमृतात्रुटिवेल्लवत्सकं कलिङ्गपथ्यामलकानि गुग्गुलुः ।
क्रमवृद्धमिदं मधुप्लुतं पीडकास्थौल्यभगन्दरं जयेत् ॥१३॥

अमृताद्यो गुग्गुलुः ।

व्योषाग्नित्रिफलामुस्तविडङ्गैर्गुग्गुलुं समम् ।
खादन् सर्वान् जयेद्व्याधीन् मेदःश्लेष्मामवातजान् ॥१४॥

नवकगुग्गुलुः ।

गुग्गुलुस्तालमूली च त्रिफला खदिरं वृषम् ।
त्रिवृतालम्बुषा स्नुक् च निर्गुण्डी चित्रकस्तथा ॥१५॥
एषां दशपलान् भागांस्तोये पञ्चाढ़के पचेत् ।
पादशेषं ततः कृत्वा कषायमवतारयेत् ॥१६॥
पलद्वादशकं देयं तीक्ष्णलोहं सुचूर्णितम् ।
पुराणसर्पिषः प्रस्थं शर्कराष्टपलोन्मितम् ॥१७॥
पचेत्ताम्रमये पात्रे सुशीते चावतारिते ।
प्रस्थार्द्धं माक्षिकं देयं शिलाजतुपलद्वयम् ॥१८॥
एलात्वक् च पलार्द्धञ्च विडङ्गानि पलद्वयम् ।
मरिचं चाञ्जनं कृष्णाद्विपलं त्रिफलान्वितम् ॥१९॥
पलद्वयन्तु काशीशं सूक्ष्मचूर्णीकृतं बुधैः ।
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥२०॥
ततः संशुद्धदेहस्तु भक्षयेदक्षमात्रकम् ।
अनुपानं पिबेत् क्षीरं जाङ्गलानां रसं तथा ॥२१॥
वातश्लेष्महरं श्रेष्ठं कुष्ठमेहोदरापहम् ।
कामलां पाण्डुरोगञ्च श्वयथुं सभगन्दरम् ॥२२॥

मूर्च्छामीहविषोन्मादगराणि विविधानि च ।
स्थूलानां कर्षणं श्रेष्ठं मेदुरे परमौषधम् ॥२३॥
कर्षयेच्चातिमात्रेण कुक्षिं पातालसन्निभम् ।
बल्यं रसायनं मेध्यं वाजीकरणमुत्तमम् ॥२४॥
श्रीकरं पुत्रजननं वलीपलितनाशनम् ।
नाश्नीयात्कदलीकन्दं काञ्जिकं करमर्दकम् ।
करीरं कारवेल्लञ्च षट् ककाराणि वर्जयेत् ॥२५॥

लौहरसायनम् ।

त्रिफलातिविषामूर्वात्रिवृच्चित्रकवासकैः ।
निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाद्वयैः ॥२६॥
गुडूचीन्द्रसुराकृष्णाकुष्ठसर्षपनागरैः ।
तैलमेभिः समं पक्वं सुरसादिरसाप्लुतम् ॥२७॥
पानाभ्यञ्जनगण्डूषनस्यवस्तिषु योजितम् ।
स्थूलतालस्यकण्ड्वादीन् जयेत्कफकृतान् गदान् ॥२८॥

त्रिफलाद्यं तैलम् ।

शिरीषलामज्जकहेमलोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः ।
पत्राम्बुलौहाभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ॥२९॥
वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः ।
विल्वपत्ररसैर्वापि गात्रदौर्गन्ध्यनाशनः ॥३०॥

हरीतकीलोध्रमरिष्टपत्रं
चूतत्वचो दाड़िमवल्कलञ्च ।
एषोऽङ्गरागः कथितोऽङ्गनानां
जङ्घाकषायश्च नराधिपानाम् ॥३१॥

दलजलदलघुमलयाभवविलेपनं हरति देहदौर्गन्ध्यम् ।

विमलारग्वधसहितं पीतमिवाम्बुषाचूर्णम् ॥२२॥

गोमूत्रपिष्टं विनिहन्ति कुष्ठं
वर्णोज्ज्वलं गोपयसा च युक्तम् ।
कक्षादिदौर्गन्ध्यहरं पयोभिः
शस्तं वशीकृज्जनीदयेन ॥२३॥

चिञ्चापत्रस्वरसमर्चितं कक्षादियोजितं जयति ।
दग्धहरिद्रोद्वर्त्तनमचिराद्देहदौर्गन्ध्यम् ॥२४॥

हस्तपादस्रुतौ योज्यं गुग्गुलुं पञ्चतिक्तकम् ।
अथवा पञ्चतिक्ताख्यं घृतं खादेदतन्द्रितः ॥२५॥

इति स्थौल्यदौर्गन्ध्यचिकित्सा ।

## अथोदराधिकारः ।

उदरे दोषसम्पूर्णे कुक्षौ मन्दो यतोऽनलः ।
तस्माद्भोज्यानि योज्यानि दीपनानि लघूनि च ॥१॥

रक्तशालीन् यवान् मुद्गान् जाङ्गलांश्च मृगद्विजान् ।
पयोमूत्रासवारिष्टमधुशीधु तथा पिबेत् ॥२॥

वातोदरं बलवतः पूर्वं स्नेहैरुपाचरेत् ।
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेहविरेचनम् ॥३॥

हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम् ।
तथास्यानवकाशत्वाद्वायुना ध्मापयेत् पुनः ॥४॥

दोषातिमात्रोपचारात् स्रोतोमार्गनिरोधनात् ।
सम्भवत्युदरं तस्मान्नित्यमेनं विरेचयेत् ॥५॥

विरिक्ते च यथा दोषहरैः पेया शृता हिता ।
वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ॥६॥

शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत्।
यमानीसैन्धवाजाजीव्योषयुक्तं कफोदरी ॥७॥
पिबेन्मधुयुतं तक्रं व्यक्ताम्लं नातिपेलवम्।
मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ॥८॥
युक्तं प्लीहोदरीजातं सव्योषन्तु दकोदरी।
बद्धोदरी तु हवुषादीप्यकाजाजीसैन्धवैः ॥९॥
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम्।
त्र्यूषणक्षारलवणैर्युक्तन्तु निचयोदरी ॥१०॥
गौरवारोचकार्त्तानां समन्दाग्न्यतिसारिणाम्।
तक्रं वातकफार्त्तानाममृतत्वाय कल्पते ॥११॥
वातोदरे पयोऽभ्यासो निरूहो दशमूलकः।
सोदावर्त्तवातघ्नाम्लशृतैरण्डानुवासनः ॥१२॥
सामुद्रसौवर्च्चलसैन्धवानि क्षारं यवानामजमोदकञ्च।
सपिप्पलीचित्रकशृङ्गवेरं हिङ्गु विडञ्चेति समानि कुर्यात् १३
एतानि चूर्णानि घृतप्लुतानि भुञ्जीत पूर्वं कवलं प्रशस्तम् १४
वातोदरं गुल्ममजीर्णभुक्तं
वायुप्रकोपं ग्रहणीञ्च दुष्टाम्।
अर्शांसि दुष्टानि च पाण्डुरोगं
भगन्दरञ्चेति निहन्ति सद्यः ॥१५॥

सामुद्राद्यं चूर्णम्।

पित्तोदरे तु बलिनं पूर्वमेव विरेचयेत्।
अनुवास्याबलं क्षीरवस्तिशुद्धं विरेचयेत् ॥१६॥
पयसा सत्रिवृत्कल्केनोरुवूकशृतेन वा।
सातलात्रायमाणाभ्यां शृतेनारग्वधेन वा ॥१७॥

कफादुदरिणं शुद्धं कटुक्षारान्नभोजितम्।
मूत्रारिष्टायस्कृतिभिर्योजयेच्च कफापहैः ॥१८॥
सन्निपातोदरे सर्वां यथोक्तां कारयेत् क्रियाम्।
प्लीहोदरे प्लीहहरं कर्मोदरहरन्तथा ॥१९॥
स्विन्नाय बद्धोदरिणे मूत्रं तीक्ष्णौषधान्वितम्।
सतैलं लवणं दद्यान्निरूहं सानुवासनम् ॥२०॥
परिस्रंसीनि चान्नानि तीक्ष्णञ्चैव विरेचनम्।
छिद्रोदरमृते स्वेदात् श्लेष्मोदरवदाचरेत् ॥२१॥
जातं जातं जलं स्राव्यं शास्त्रोक्तं शस्त्रकर्म च।
जलोदरे विशेषेण द्रवसेवां विवर्जयेत् ॥२२॥
देवदारुपलाशार्कहस्तिपिप्पलीशिग्रुकैः।
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं शनैः ॥२३॥
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत्।
स्नुहीपयोभावितानां पिप्पलीनां पयोऽशनः ॥२४॥
सहस्रञ्च प्रयुञ्जीत शक्तितो जठरामयी।
शिलाजतूनां मूत्राणां गुग्गुलोस्त्रैफलस्य च।
स्नुहीक्षीरप्रयोगश्च शमयत्युदरामयम् ॥२५॥
स्नुक्पयसा परिभावितपण्डुलचूर्णैर्निर्मितः पूतः।
उदरमुदारं हिंस्याद्योगोऽयं सप्तरात्रेण ॥२६॥
पिप्पलीवर्द्धमानं वा कल्पदृष्टं प्रयोजयेत्।
जठराणां विनाशाय नास्ति तेन समं भुवि ॥२७॥
पटोलमूलं रजनीविडङ्गं त्रिफलात्वचम्।
कम्पिल्लकं नीलिनीञ्च त्रिवृताञ्चेति चूर्णयेत् ॥२८॥
षडाद्यान् कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान्।

कृत्वा चूर्णं ततो मुष्टिं गवां मूत्रेण ना पिबेत् ॥२९॥
विरिक्तो जाङ्गलरसैर्भुञ्जीत मृदुमोदनम्।
मण्डं पेयाञ्च पीत्वा च सव्योषं षडहः पयः ॥३०॥
शृतं पिबेत् तु तच्चूर्णं पिबेदेवं पुनः पुनः।॥३१॥
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि।
कामलां पाण्डुरोगञ्च श्वयथुञ्चापकर्षति।३२॥

पटोलाद्यं चूर्णम्।

यमानी हवुषा धान्यं त्रिफला सोपकुञ्चिका।
कारवी पिप्पलीमूलमजगन्धा शटी वचा ॥३३॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरीसचित्रकम्।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम्।३४॥
विडङ्गञ्च समांशानि दन्त्या भागत्रयन्तथा।
त्रिवृद्विशाले द्विगुणे शातला स्याच्चतुर्गुणाः ॥३५॥
एष नारायणो नाम चूर्णो रोगगणापहः।
नैनं प्राप्याभिवर्द्धन्ते रोगा विष्णुमिवासुराः ॥३६॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्वदराम्बुना।
आनद्धवाते सुरया वातरोगे प्रसन्नया ॥३७॥
दधिमण्डेन विट्सङ्गे दाडिमाम्बुभिरर्शसि।
परिकर्त्ते च वृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥३८॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे।
हृद्रोगे ग्रहणीदोषे कोष्ठे मन्दानले ज्वरे ॥३९॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥४०॥

नारायणं चूर्णम्।

दन्ती वचा गवाची च शङ्खिनी तिल्वकं त्रिवृत् ।
गोमूत्रेण पिबेत् कल्कं जठरामयनाशनम् ॥४१॥
सचीरं माहिषं मूत्रं निराहारः पिबेन्नरः ।
शाम्यत्यनेन जठरं सप्ताहादिति निश्चयः ॥४२॥
गवाचीशङ्खिनीदन्तीनीलिनीकल्कसंयुतम् ।
सर्वोदरविनाशाय गोमूत्रं पातुमाचरेत् ॥४३॥
अर्कपत्रं सलवणमन्तर्धूमं दहेत्ततः ।
मस्तुना तत्पिबेत् चीरं गुल्मप्लीहोदरापहम् ॥४४॥
पीतः प्लीहोदरं हन्यात्पिप्पलीमरिचान्वितः ।
अम्लवेतससंयुक्तः शिग्रुक्वाथः ससैन्धवः ॥४५॥
गृहीत्वा यस्य संज्ञां पाटयित्वेन्द्रवारुणीमूलम् ।
प्रक्षिप्यते सुदूरे शाम्यते प्लीहोदरं तस्य ॥४६॥
रोहितकाभयाचोद्भावितं मूत्रमम्बु वा ।
पीतं सर्वोदरप्लीहमेहार्शःक्रिमिगुल्मनुत् ॥४७॥

देवद्रुमं शिग्रुमयूरकञ्च
गोमूत्रपिष्टानथवाऽश्वगन्धान् ।
पीत्वाशु हन्यादुदरं प्रवृद्धं
क्रिमीन् सशोथानुदरञ्च दूष्यम् ॥४८॥

दशमूलदारुनागरच्छिन्नरुहापुनर्नवाभयाक्वाथः ।
जयति जलोदरशोथश्लीपदगलगण्डवातरोगांश्च ॥४९॥
हरीतकीनागरदेवदारुपुनर्नवाच्छिन्नरुहाकषायः ।
सगुग्गुलुर्मूत्रयुतश्च पेयः शोथोदराणां प्रवरः प्रयोगः ॥५०॥

एरण्डतैलं दशमूलमिश्रं
गोमूत्रयुक्तस्त्रिफलारसो वा ।

निहन्ति वातोदरशोथशूलं
क्काथ: समूत्रो दशमूलजश्च ॥५१॥
पुनर्नवानिम्बपटोलशुण्ठी-
तिक्ताभयादार्वमृताकषाय:।
सर्वाङ्गशोथोदरकासशूल-
श्वासान्वितं पाण्डुगदं निहन्ति ॥५२॥

पुनर्नवाष्टक:।

पुनर्नवां दार्वभयां गुडूचीं पिबेत् समूत्रां महिषाक्षयुक्ताम्।
त्वग्दोषशोथोदरपाण्डुरोगस्थौल्यप्रसेकोर्द्धकफामयेषु ॥५३॥
गोमूत्रयुक्तं महिषीपयो वा
क्षीरं गवां वा त्रिफलाविमिश्रम्।
क्षीरान्नभुक् केवलमेव गव्यं
मूत्रं पिबेद्वा श्वयथूदरेषु ॥५४॥
पुनर्नवा दार्वमृता पाठा विल्वं श्वदंष्ट्रिका।
बृहत्यौ द्वे रजन्यौ द्वे पिप्पल्यश्चित्रकं वृषम्।
समभागानि संचूर्ण्य गवां मूत्रेण ना पिबेत् ॥५५॥
बहुप्रकारं श्वयथुं सर्वगात्रविसारिणम्।
हन्ति शूलोदराण्यष्टौ व्रणांश्चैवोद्धतानपि ॥५६॥
पुराणं माणकं पिष्ट्वा द्विगुणीकृततण्डुलम्।
साधितं क्षीरतोयाभ्यामभ्यसेत्पायसं तत: ॥५७॥
हन्ति वातोदरं शोथं ग्रहणीं पाण्डुतामपि।
सिद्धो भिषग्भिराख्यात: प्रयोगोऽयं निरत्यय: ॥५८॥
दशमूलतुलार्द्धरसे सक्षारै: पञ्चकोलै: पलिकै:।

सिद्धं घृतार्द्धपात्रं द्विमस्तुकमुदरगुल्मघ्नम् ॥५९॥

दशमूलकषट्पलकं घृतम् ।

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात्पले ।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥६०॥

चित्रकघृतम् ।

अर्कक्षीरपले द्वे च स्नुहीक्षीरपलानि षट् ।
पथ्याकम्पिल्लकं श्यामासम्पाकं गिरिकर्णिका ॥६१॥
नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकन्तथा ।
एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥६२॥
अथास्य मलिने कोष्ठे विन्दुमात्रं प्रदापयेत् ।
यावतोऽस्य पिबेद्विन्दूंस्तावद्वारान् विरिच्यते ॥६३॥
कुष्ठं गुल्ममुदावर्त्तं श्वयथुं सभगन्दरम् ।
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्यथा ।
एतद्विन्दुघृतं नाम येनाभ्यक्तो विरिच्यते ॥६४॥

विन्दुघृतम् ।

दधिमण्डाढ़के सिद्धात् स्नुक्क्षीरपलकल्कितात् ।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये ॥६५॥
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत् ।
स्नुक्क्षीरपलकल्केन त्रिवृता षट्पलेन च ॥६६॥

स्नुक्क्षीरदन्तीत्रिफलाविडङ्ग-
सिंहीत्रिवृच्चित्रककल्कयुक्तम् ।
घृतं विपक्वं कुड़वप्रमाणं
तोयेन तस्याक्षमथार्द्धकर्षम् ॥६७॥
पीत्वोष्णमम्भोऽनुपिबेद्विरिक्ते

पेयां सुखोष्णां वितरेद्विधिज्ञः।
नाराचमेतज्जठरामयानां
युक्तोप्रयुक्तं शमनं प्रदिष्टम् ॥६८॥
नाराचघृतम्।
इति सर्वोदरचिकित्सा।

## अथ प्लीहाधिकारः।

यमानिकाचित्रकयावशूक-
षड्ग्रन्थिदन्तीमगधोद्भवानाम्।
प्लीहानमेतद्विनिहन्ति चूर्णम्
उष्णाम्बुना मस्तुसुरासवैर्वा ॥१॥
पिप्पलीं किंशुकक्षारभावितां संप्रयोजयेत्।
गुल्मप्लीहापहां वह्निदीपनीञ्च रसायनीम् ॥२॥
विड्ङ्गान्यग्निसिन्धूत्थशक्तून् दग्ध्वा वचान्वितान्।
पिबेत् क्षीरेण संचूर्ण्य गुल्मप्लीहोदरापहम् ॥३॥
तालपुष्पभवः क्षारः सगुड़ः प्लीहनाशनः।
क्षारं वा बिड़कृष्णाभ्यां पूतीकस्याम्लनिस्नुतम् ॥४॥
प्लीहयकृत्प्रशान्त्यर्थं पिबेत् प्रातर्यथाबलम्।
पातव्यो युक्तितः क्षारः क्षीरेणोदधिशुक्तिजः ॥५॥
पयसा वा प्रयोक्तव्याः पिप्पल्यः प्लीहशान्तये।
भल्लातकाभयाजाजीगुडेन सह मोदकः ॥६॥
सप्तरात्रान्निहन्त्याशु प्लीहानमतिदारुणम्।
शोभाञ्जनकनिर्यूहं सैन्धवाग्निकणान्वितम् ॥७॥
मलाशक्षारयुक्तं वा यवक्षारं प्रयोजयेत्।

सिद्धं घृतादिपात्रं हिमसुकमुदरगुल्मघ्नम् ॥५९॥

दशमूलकषट्पलकं घृतम् ।

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात्पले ।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥६०॥

चित्रकघृतम् ।

अर्कक्षीरपले द्वे च स्नुहीक्षीरपलानि षट् ।
पथ्याकम्पिल्लकं श्यामासम्पाकं गिरिकर्णिका ॥६१॥
नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकन्तथा ।
एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥६२॥
अथास्य मलिने कोष्ठे बिन्दुमात्रं प्रदापयेत् ।
यावतोऽस्य पिबेद्बिन्दूंस्तावद्वारान् विरिच्यते ॥६३॥
कुष्ठं गुल्ममुदावर्त्तं श्वयथुं सभगन्दरम् ।
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्यथा ।
एतद्विन्दुघृतं नाम येनाभ्यक्तो विरिच्यते ॥६४॥

बिन्दुघृतम् ।

दधिमण्डाढ़के सिद्धात् स्नुक्क्षीरपलकल्किातात् ।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये ॥६५॥
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत् ।
स्नुक्क्षीरपलकल्केन त्रिवृता षट्पलेन च ॥६६॥

स्नुक्क्षीरदन्तीत्रिफलाविडङ्ग-
सिंहीत्रिवृच्चित्रककल्कयुक्तम् ।
घृतं विपक्वं कुड़वप्रमाणं
तोयेन तस्याक्षमथार्द्धकर्षम् ॥६७॥
पीत्वोष्णमम्भोऽनुपिबेद्विरिक्ते

पेयां सुखोष्णां वितरेद्विधिज्ञः।
नाराचमेतज्जठरामयानां
युक्तोप्रयुक्तं शमनं प्रदिष्टम् ॥६८॥
नाराचघृतम्।
इति सर्वोदरचिकित्सा।

## अथ प्लीहाधिकारः।

यमानिकाचित्रकयावशूक-
षड्ग्रन्थिदन्तीमगधोद्भवानाम्।
प्लीहानमेतद्विनिहन्ति चूर्णम्
उष्णाम्बुना मस्तुसुरासवैर्वा ॥१॥

पिप्पलीं किंशुकक्षारभाविता संप्रयोजयेत्।
गुल्मप्लीहापहां वह्निदीपनीञ्च रसायनीम् ॥२॥
विडङ्गाग्निसिन्धूत्थशक्तून् दग्ध्वा वचान्वितान्।
पिबेत् क्षीरेण संचूर्ण्य गुल्मप्लीहोदरापहम् ॥३॥
तालपुष्पभवः क्षारः सगुड़ः प्लीहनाशनः।
क्षारं वा विड़कृष्णाभ्यां पूतीकस्याग्निसंस्रुतम् ॥४॥
प्लीहयकृत्प्रशान्त्यर्थं पिबेत् प्रातर्यथाबलम्।
पातव्यो युक्तितः क्षारः क्षीरेणोदधिशुक्तिजः ॥५॥
पयसा वा प्रयोक्तव्याः पिप्पल्यः प्लीहशान्तये।
भल्लातकाभयाजाजीगुडेन सह मोदकः ॥६॥
सप्तरात्रान्निहन्त्याशु प्लीहानमतिदारुणम्।
शोभाञ्जनकनिर्यूहं सैन्धवाग्निकणान्वितम् ॥७॥
पलाशक्षारयुक्तं वा यवक्षारं प्रयोजयेत्।

तिलान् सलवणांश्चैव घृतं षट्पलकं तथा ॥८॥
प्लीहोद्दिष्टां क्रियां सर्वां यकृतः संप्रयोजयेत् ।
लशुनं पिप्पलीमूलमभयाञ्चैव भक्षयेत् ॥९॥
पिबेद्गोमूत्रगण्डूषं प्लीहरोगविमुक्तये ।
प्लीहजिच्छरपुङ्खायाः कल्कस्तक्रेण सेवितः ॥१०॥
शरपुङ्खैव संचर्व्य जग्ध्वापेयाभयाथवा ।
शर्द्दिष्टानिर्यूहः ससैन्धवतिन्तिडीकमिश्रः ॥११॥
प्लीहव्युपरमो योगः पक्वाम्ररसोऽथवा समधुः ।
दध्ना भुक्तवतो वामबाहुमध्ये शिरां भिषक् ॥१२॥
विध्येत प्लीहविनाशाय यकृन्नाशाय दक्षिणे ।
प्लीहानं मर्दयेद्गाढं दुष्टरक्तप्रवृत्तये ॥१३॥
माणमार्गामृतावासास्थिराचित्रकसैन्धवम् ।
नागरं तालमण्डञ्च प्रत्यग्रन्तु त्रिकार्षिकम् ॥१४॥
विड़सौवर्चलक्षारपिप्पल्यश्चापि कार्षिकाः ।
एतच्चूर्णीकृतं सर्वं गोमूत्रस्याढ़के पचेत् ॥१५॥
सान्द्रीभूते गुड़ीं कुर्य्याद्दत्त्वा त्रिपलमाक्षिकम् ।
यकृत्प्लीहोदरहरो गुल्मार्शोग्रहणीहरः ।
योगः परिकरो नाम्ना चाग्निसन्दीपनः परः ॥१६॥

माणाद्यगुड़िका ।

रोहितकाभयाक्षोदभावितं मूत्रमम्बु वा ।
पीतं सर्वोदरप्लीहमेहार्शःक्रिमिगुल्मनुत् ॥१७॥
पिप्पली नागरं दन्ती समांशं द्विगुणाभयम् ।
चूर्णं पीतं विड़ार्द्धांशं प्लीहघ्नमुष्णवारिणा ॥१८॥
क्रमवृद्ध्या दशाहानि दशपिप्पलिकं दिनम् ।

वर्द्धयेत्पयसा सार्द्धं तथैवापनयेत् पुनः ॥१९॥
जीर्णे जीर्णे च भुञ्जीत यष्टिकं क्षीरसर्पिषा।
पिप्पलीनां प्रयोगोऽयं सहस्रस्य रसायनः ॥२०॥
दशपिप्पलीकः श्रेष्ठो मध्यमः षट् प्रकीर्त्तितः।
यस्त्रिपिप्पलिपर्य्यन्तः प्रयोगः सोऽवरः स्मृतः ॥२१॥
बृंहणं बृष्यमायुष्यं प्लीहोदरविनाशनम्।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥२२॥
पञ्चपिप्पलिकश्चापि दृश्यते वर्द्धमानकः।
पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः।
शीतीकृता ह्रस्वबलैर्देहदोषामयान् प्रति ॥२३॥

पिप्पलीवर्द्धमानानि।

पिप्पलीचित्रकाम्मूलं पिष्ट्वा सम्यक् विपाचयेत्।
घृतं चतुर्गुणक्षीरं यकृत्प्लीहोदरापहम् ॥२४॥

चित्रकघृतम्।

पिप्पलीकल्कसंयुक्तं घृतं क्षीरचतुर्गुणम्।
पिबेत् प्लीहाग्निसादादियकृद्रोगहरं परम् ॥२५॥

पिप्पलीघृतम्।

चित्रकस्य तुलाक्वाथे घृतप्रस्थं विपाचयेत्।
आरनालं तद्द्विगुणं दधिमण्डं चतुर्गुणम् ॥२६॥
पञ्चकोलकतालीशक्षारैर्लवणसंयुतैः।
द्विजीरकनिशायुग्मैर्मरिचं तत्र दापयेत् ॥२७॥
प्लीहगुल्मोदराध्मानपाण्डुरोगारुचिज्वरान्।
वस्तिहृत्पार्श्वकट्यूरुशूलोदावर्त्तपीनसान् ॥२८॥
हन्यात् पीतं तदर्शोघ्नं शोथघ्नं वह्निदीपनम्।

बलवर्णकरश्चापि भस्मकञ्च नियच्छति ॥२९॥

चित्रकघृतम् ।

रोहितकत्वचः श्रेष्ठाः पलानां पञ्चविंशतिः ।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥३०॥
पलिकैः पञ्चकोलैश्च तत्सर्वैश्चापि तुल्यया ।
रोहितकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥३१॥
प्लीहाभिवृद्धिं शमयेदेतदाशु प्रयोजितम् ।
तथा गुल्मज्वरश्वासक्रिमिपाण्डुत्वकामलाः ॥३२॥

रोहितकं घृतम् ।

रोहितकात्पलशतं क्षोदयेद्दराढ़कम् ।
साधयित्वा जलद्रोणे चतुर्भागावशेषिते ॥३३॥
घृतप्रस्थं समावाप्य छागक्षीरचतुर्गुणम् ।
तस्मिन् दद्यादिमान् कल्कान् सर्वांस्तानक्षसम्मितान् ३४
व्योषं फलत्रिकं हिङ्गु यमानीं तुम्बुरुं विड़म् ।
अजाजीकृष्णलवणं दाड़िमं देवदारु च ॥३५॥
पुनर्नवां विशालाञ्च यवक्षारं सपौष्करम् ।
विड़ङ्गं चित्रकञ्चैव हवुषाञ्चविकां वचाम् ॥३६॥
एतैर्घृतं विपक्वन्तु स्थापयेद्भाजने दृढ़े ।
पाययेत्त्रिपलां मात्रां व्याधिं बलमपेक्ष्य च ॥३७॥
रसकेनाथ यूषेण पयसा वापि भोजयेत् ।
उपयुक्ते घृते तस्मिन् व्याधीन् हन्यादिमान् बहून् ॥३८॥
यकृत्प्लीहोदरञ्चैव प्लीहशूलं यकृत्तथा ।
कुक्षिशूलञ्च हृच्छूलं पार्श्वशूलमरोचकम् ॥३९॥
विबन्धशूलं शमयेत्पाण्डुरोगं सकामलम् ।

छर्द्यतीसारशमनं तन्द्राज्वरविनाशनम्।
महारोहितकं नाम प्लीहघ्नन्तु विशेषतः॥४०॥

महारोहितकं घृतम्।

इति प्लीहयकृच्चिकित्सा।

## अथ शोथाधिकारः।

शुण्ठीपुनर्नवैरण्डपञ्चमूलशृतं जलम्।
वातिके श्वयथौ शस्तं पानाहारपरिग्रहे।
दशमूलं सर्वथा च शस्तं वाते विशेषतः॥१॥

क्षीराशनः पित्तकृतेऽथ शोथे
त्रिवृद्गुडूचीत्रिफलाकषायम्।
पिबेन्नवां मूत्रविमिश्रितं वा
फलत्रिकाचूर्णमथाक्षमात्रम्॥२॥

अभयादारुमधुकतिक्ता दन्ती सपिप्पली।
पटोलं चन्दनं दार्वी त्रायमाणेन्द्रवारुणी॥३॥
एषां क्वाथः ससर्पिष्कः श्वयथुज्वरदाहहा।
विसर्पतृष्णासन्तापसन्निपातविषापहा।
शीतवीर्य्यैर्हिमजलैरभ्यङ्गादींश्च कारयेत्॥४॥

पुनर्नवाविश्वत्रिवृद्गुडूची-
सम्पाकपथ्यामरदारुकल्कम्।
शोथे कफोत्थे महिषाक्षयुक्तं
मूत्रं पिबेद्वा सलिलं तथैषाम्॥५॥

कफे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगुमाप्रलेपः।
कुलत्थशुण्ठीजलमूत्रसेकश्चण्डागुरुभ्यामनुलेपनञ्च॥६॥

अजाजिपाठाघनपञ्चकोलव्याघ्रीरजन्यः सुखतोयपीताः ।
शोथं त्रिदोषं चिरजं प्रवृद्धं निघ्नन्ति भूनिम्बमहौषधे च ॥७॥
पुनर्नवानिम्बपटोलशुण्ठीतिक्तामृतादार्व्वभयाकषायः ।
सर्व्वाङ्गशोथोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति ॥८॥

पुनर्नवाष्टकः ।

आर्द्रकस्य रसः पीतः पुराणगुड़मिश्रितः ।
अजाचीराशिनां शीघ्रं सर्व्वशोथहरो भवेत् ॥९॥
पुनर्नवादारुशुण्ठीक्वाथे मूत्रे च केवले ।
दशमूलरसे वापि गुग्गुलुः शोथनाशनः ॥१०॥
बिल्वपत्ररसं पूतं शोषणं श्वयथौ त्रिजे ।
विट्सङ्गे चैव दुर्नाम्नि विदध्यात् कामलास्वपि ॥११॥
गुड़पिप्पलीशुण्ठीनां चूर्णं श्वयथुनाशनम् ।
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम् ॥१२॥
पुरो मूत्रेण सेव्येत पिप्पली वा पयोऽन्विता ।
गुड़ेन वाभयातुल्या विश्वं वा शोथरोगिणाम् ॥१३॥

गुड़ार्द्रकं वा गुड़नागरं वा
गुड़ाभयं वा गुड़पिप्पलीं वा ।
कर्षाभिवृद्ध्या त्रिपलप्रमाणं
खादेन्नरः पक्षमथापि मासम् ॥१४॥
शोथप्रतिश्यायगलास्यरोगान्
सश्वासकासारुचिपीनसांश्च ।
जीर्णज्वरार्शोग्रहणीविकारान्
हन्यात् तथान्यान् कफवातरोगान् ॥१५॥

स्थलपद्ममयं कल्कं पयसालोड्य पाययेत् ।

शीहामयहरश्चैव सर्वाङ्गैकाङ्गशोथजित् ॥१६॥
दारुगुग्गुलुशुण्ठीनां कल्को मूत्रेण शोथजित् ।
वर्षाभूशृङ्गवेराभ्यां कल्को वा सर्वशोथजित् ॥१७॥
सिंहास्यामृतभण्टाकीक्वाथं कृत्वा समाक्षिकम् ।
पीत्वा शोथं जयेज्जन्तुः श्वासं कासं वमिं ज्वरम् ॥१८॥
भूनिम्बविश्वकल्कं जग्ध्वा पेयः पुनर्नवाक्वाथः ।
अपहरति नियतमाशु शोथं सर्वाङ्गगं नृणाम् ॥१९॥
शोथनुत् कोकिलाक्षस्य भस्म मूत्रेण वाम्भसा ।
क्षीरं शोथहरं दारुवर्षाभूनागरैः शृतम् ।
पेयं वा चित्रकव्योषत्रिवृद्दारुप्रसाधितम् ॥२०॥

पुनर्नवामूलकपित्थदारु-
छिन्नोद्भवाचित्रकमूलसिद्धाः ।
रसा यवाग्वश्च पयांसि यूषाः
शोथे प्रदेया दशमूलगर्भाः ॥२१॥

क्षारद्वयं स्याल्लवणानि चत्वा-
र्ययोरजोव्योषफलत्रिके च ।
सपिप्पलीमूलविडङ्गसारं
मुस्ताजमोदामरदारुबिल्वम् ॥२२॥
कलिङ्गकाश्चित्रकमूलपाठे
यष्ट्याह्वयं सातिविषं पलाशम् ।
सहिङ्गु कर्षं त्वथ शुष्कचूर्णं
द्रोणस्तथा मूलकशुण्ठकानाम् ॥२३॥
स्याद्भस्मनस्तत्सलिलेन साध्यम्
आलोड्य या वह्निनमप्यदग्धम् ।

स्यानन्ततः कोलसमाञ्च मात्रां
कृत्वा सुशुष्कां विधिना प्रयुञ्ज्यात् ॥२४॥
प्लीहोदरश्वित्रहलीमकार्शः-
पाण्ड्वामयारोचकशोथशोषान् ।
विसूचिकागुल्मगराश्मरीश्च
सश्वासकासान् प्रणुदेत् सकुष्ठान् ॥२५॥
सौवर्च्चलं सैन्धवञ्च विड़मौद्भिदमेव च ।
चतुर्लवणमत्र स्याज्जलमष्टगुणं भवेत् ॥२६॥

क्षारगुड़िका ।

पुनर्नवाचित्रकदेवदारु-
पञ्चोषणक्षारहरीतकीनाम् ।
कल्केन पक्वं दशमूलतोये
घृतोत्तमं शोथनिसूदनञ्च ॥२७॥

पुनर्नवाद्यं घृतम् ।

पुनर्नवाक्काथकल्कसिद्धं शोथहरं घृतम् ।
विश्वौषधस्य कल्केन दशमूलजले शृतम् ।
घृतं निहन्याच्छ्वयथुं ग्रहणीं पाण्डुतामयम् ॥२८॥

शुण्ठीघृतम् ।

सचित्रकाधान्ययमानीपाठाः
सदीप्यकत्र्यूषणवेतसाम्लाः ।
विल्वात् फलं दाड़िमयावशूकं
सपिप्पलीमूलमथापि चव्यम् ॥२९॥
पिष्टाक्षमात्राणि जलाढ़केन
पक्त्वा घृतप्रस्थमथोपयुञ्ज्यात् ।

अर्शांसि गुल्मान् श्वयथुञ्च कृच्छ्रं
निहन्ति वह्निञ्च करोति दीप्तम् ॥ २० ॥

चित्रकाद्यं घृतम् ।

रसे विपाचयेत् सर्पिः पञ्चकोलकुलत्थयोः ।
पुनर्नवायाः कल्केन घृतं शोथविनाशनम् ॥२१॥

पञ्चकोलाद्यं घृतम् ।

क्षीरं घटे चित्रककल्कलिप्ते
दध्यागतं साधु विमथ्य तेन ।
तज्जं घृतं चित्रकमूलकल्कं
तक्रेण सिद्धं श्वयथुघ्नमग्र्याम् ॥२२॥
अर्शोऽतिसारानिलगुल्ममेहां-
स्तद्धन्ति संवर्द्धयते बलञ्च ॥२३॥

चित्रकघृतम् ।

माणकक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत् ।
एकजं द्वन्द्वजं शोथं त्रिदोषञ्च व्यपोहति ॥२४॥

माणकं घृतम् ।

स्थलपद्मपलान्यष्टौ त्र्यूषणस्य चतुःपलम् ।
घृतप्रस्थं पचेदेभिः क्षीरं दत्त्वा चतुर्गुणम् ।
पञ्च कासान् हरेच्छीघ्रं शोथञ्चैव सुदुस्तरम् ॥२५॥

स्थलपद्मकं घृतम् ।

शैलेयकुष्ठागुरुदारुकौन्ती-
त्वक्पद्मकैलाम्बुपलाशमुस्तैः ।
प्रियङ्गुथौणेयकहेममांसी-
तालीशपत्रप्लवपत्रधान्यैः ॥२६॥

श्रीवेष्टकध्यामकपिप्पलीभिः
पृक्कानखैर्वापि यथोपलाभम् ।
वातान्वितेऽभ्यङ्गमुषन्ति तैलं
सिद्धं सुपिष्टैरपि च प्रदेहम् ॥३७॥

शैलेयाद्यं तैलम् ।

शुष्कमूलकवर्षाभूदारुरास्नामहौषधैः ।
पक्वमभ्यञ्जनात्तैलं सशूलं श्वयथुं जयेत् ॥३८॥

शुष्कमूलाद्यं तैलम् ।

पुनर्नवामृतादारुदशमूलरसाढ़के ।
आर्द्रकस्वरसे प्रस्थे गुड़स्य तु तुलां पचेत् ॥३९॥
तत्सिद्धं व्योषचव्यैलात्वक्पत्रैः कार्षिकैः पृथक् ।
चूर्णीकृतैः क्षिपेच्छीते मधुनः कुड़वं लिहेत् ॥४०॥
लेहः पौनर्नवो नाम शोथशूलनिसूदनः ।
श्वासकासाऽरुचिहरो बलवर्णाग्निवर्द्धनः ॥४१॥

पुनर्नवालेहः ।

दशमूलकषायस्य कंसे पथ्याशतं पचेत् ।
तुलां गुड़ाद्घने दद्याद्व्योषक्षारं चतुःपलम् ॥४२॥
त्रिसुगन्धं सुवर्णांशं प्रस्थार्द्धं मधुनो हिमे ।
दशमूलीहरीतक्यः शोथान् हन्युः सुदारुणान् ॥४३॥
ज्वरारोचकगुल्मार्शोमेहपाण्डूदरामयान् ।
प्रत्येकमेककर्षांशं त्रिसुगन्धमितो भवेत् ॥४४॥
कंसहरीतकी चैषा चरके पठ्यतेऽन्यथा ।
एतन्मानेन तुल्यत्वं तेन तत्रापि वर्ण्यते ॥४५॥

दशमूलीहरीतकी ।

द्विपञ्चमूलस्य पचेत् कषाये
कंसेऽभयानाञ्च शतं गुड़ाच्च।
लेहे सुसिद्धे च विनीय चूर्णं
व्योषत्रिसौगन्ध्यमुपास्थिते च ॥४६॥
प्रस्थार्द्धमात्रं मधुनः सुशीते
किञ्चिच्च चूर्णादपि यावशूकात्।
एकाभयां प्राश्य ततश्च लेहा-
च्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम् ॥४७॥
कासज्वरारोचकमेहगुल्मान्
प्लीहत्रिदोषोद्भवपाण्डुरोगान्।
कार्श्यामवातावसृगम्लपित्तं
वैवर्ण्यमूत्रानिलशुक्रदोषान् ॥४८॥
अत्र व्याख्यान्तरं नोक्तं व्याख्या पूर्व्वैव यच्छुभा ॥४८॥

कंसहरीतकी।

लेपोऽरुष्करशोथं निहन्ति तिलदुग्धमधुनवनीतैः।
तत्तरुतलमृद्भिर्वा शालदलैर्वा तु न चिरेण ॥५०॥
शोथे विषनिमित्ते तु विषोक्ता सम्मता क्रिया ॥५१॥
ग्राम्यजानूपपिशितलवणं शुष्कशाकं नवान्नं
गौड़ं पिष्टान्नं दधि सकृशरं विज्जलं मद्यमम्लम्।
धानावल्लूरं समशनमथो गुर्व्वसात्म्यं विदाहि
स्वप्नञ्चारात्रौ श्वयथुगदवान् वर्जयेन्मैथुनञ्च ॥५२॥

इति शोथचिकित्सा।

— —

## अथ वृद्ध्यधिकारः ।

गुग्गुलुरुवुतैलं वा गोमूत्रेण पिबेन्नरः ।
वातवृद्धिं निहन्त्याशु चिरकालानुबन्धिनीम् ॥१॥
सक्षीरं वा पिबेत् तैलं मासमेरण्डसम्भवम् ।
पुनर्नवायास्तैलं वा तैलं नारायणं तथा ॥२॥
पाने वस्तौ रुरोस्तैलं पेयं वा दध्यकाम्भसा ।
चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम् ॥३॥
क्षीरपिष्टैः प्रदेहः स्याद्दाहशोथरुजापहः ।
पञ्चवल्कलकल्केन सघृतेन प्रलेपनम् ॥४॥
सर्वं पित्तहरं कार्य्यं रक्तजे रक्तमोक्षणम् ।
श्लेष्मवृद्धिं तूष्णवीर्य्यैर्मूत्रपिष्टैः प्रलेपयेत् ॥५॥
पीतदारुकषायञ्च पिबेन्मूत्रेण संयुतम् ।
स्विन्नं मेदःसमुत्थन्तु लेपयेत् सुरसादिना ॥६॥
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः ।
संस्वेद्य मूत्रप्रभवां वस्त्रपट्टेन वेष्टयेत् ॥७॥
सीवन्याः पार्श्वतोऽधस्ताद्विध्येद् व्रीहिमुखेन वै ।
शङ्खोपरि च कर्णान्ते त्यक्त्वा सीवनिमादहेत् ॥८॥
व्यत्यासाद्वा शिरां विध्येदन्त्रवृद्धिनिवृत्तये
अङ्गुष्ठमध्ये त्वक् छित्वा दहेदङ्गविपर्य्यये ॥९॥
रास्नायष्ट्यामृतैरण्डबलागोक्षुरसाधितः ।
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुवुतैलेन मिश्रितः ॥१०॥
तैलमेरण्डजं पीत्वा बलासिद्धपयोऽन्वितम् ।
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥११॥

हरीतकीं मूत्रसिद्धां सतैलां लवणान्विताम् ।
प्रातः प्रातश्च सेवेत कफवातामयापहाम् ॥ १२॥

गोमूत्रसिद्धां रुवुतैलभृष्टां
हरीतकीं सैन्धवसंप्रयुक्ताम् ।
खादेन्नरः कोष्णजलानुपानां
निहन्ति वृद्धिं चिरजां प्रवृद्धाम् ॥१३॥

त्रिफलाक्काथगोमूत्रं पिबेत् प्रातरतन्द्रितः ।
कफवातोद्भवं हन्ति श्वयथुं वृषणोत्थितम् ॥१४॥

सरलागुरुकुष्ठानि देवदारुमहौषधम् ।
मूत्रारनालसंयुक्तं शोथघ्नं कफवातनुत् ॥१५॥

भृष्टो रुवुकतैलेन कल्कः पथ्यासमुद्भवः ।
कृष्णासैन्धवसंयुक्तो वृद्धिरोगहरः परः ॥१६॥

गव्यं घृतं सैन्धवसंप्रयुक्तं शम्बूकभाण्डे निहितं प्रयत्नात् ।
सप्ताहमादित्यकरैर्विपक्वं निहन्ति कूरण्डमतिप्रवृद्धम् ॥१७॥

ऐन्द्रीमूलभवं चूर्णं रुवुतैलेन मर्दितम् ।
वरहानोपयसा पीतं सर्ववृद्धिनिवारणम् ॥१८॥

रुद्रजटामूललिप्ता करटव्यक्षचर्मणा ।
बद्धा वृद्धिः शमं याति चिरजापि न संशयः ॥१९॥

निष्पिष्टमारनालेन रूपिकामूलवल्कलम् ।
लेपो वृद्ध्यामयं हन्ति बद्धमूलमपि दृढम् ॥२०॥

वचा सर्षपकल्केन प्रलेपो वृद्धिनाशनः ।
लज्जाश्टभ्रमलाभ्याञ्च लेपो वृद्धिहरः परः ॥२१॥

मूलं विल्वकपित्थयोररलुकस्याग्नेर्द्वयोर्वृहत्योर्द्वयोः
श्यामापूतिकरञ्जशिग्रुकतरोर्विश्वौषधारुष्करम् ।

कृष्णाग्रन्थिकचव्यपञ्चलवणक्षाराजमोदान्वितं
पीतं काञ्जिकोष्णतोयमथितं चूर्णीकृतं व्रध्ननुत् ॥२२॥
अवीक्षीरेण गोधूमकल्कं कुन्दुरुकस्य वा।
प्रलेपनं सुखोष्णं स्याद् व्रध्नशूलहरः परः ॥२३॥
मृतमात्रे तु वै काके विशस्ते संप्रवेशयेत्।
व्रध्नं मुहूर्त्तं मेधावी तत्क्षणादरुजं भवेत् ॥२४॥
अजाजीहवुषाकुष्ठं गोधूमं बदराणि च।
काञ्जिकेन समं पिष्ट्वा कुर्य्याद् व्रध्नप्रलेपनम् ॥२५॥
सन्धवं मदनं कुष्ठं शताह्वां निचुलं वचाम्।
ह्रीवेरं मधुकं भार्गीं देवदारु सनागरम् ॥२६॥
कट्फलं पौष्करं मेदां चविकं चित्रकं शटीम्।
विडङ्गातिविषे श्यामां रेणुकां नलिनीं स्थिराम् ॥२७॥
विल्वाजमोदे कृष्णाञ्च दन्तीरास्ने प्रपिष्य च।
साध्यमेरण्डजं तैलं तैलं वातविकारनुत् ॥२८॥
व्रध्नोदावर्त्तगुल्मार्शःप्लीहमेहाढ्यमारुतान्।
आनाहमश्मरीञ्चैव हन्यात्तदनुवासनात् ॥२९॥
वृहत्सैन्धवाद्यं तैलम्।
घृतं सौरेश्वरं योज्यं व्रध्नवृद्धिनिवृत्तये ॥३०॥
इति वृद्धिव्रध्नचिकित्सा।

## अथ गलगण्डाधिकारः।

यवमुद्गपटोलानि कटुरूक्षञ्च भोजनम्।
छर्दिं सरक्तमुक्तिञ्च गलगण्डे प्रयोजयेत् ॥१॥
तण्डुलोदकपिष्टेन मूलेन परिलेपितः।

हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति ॥२॥
सर्षपान् शिग्रुबीजानि शणबीजातसीयवान्।
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत् ॥३॥
गण्डानि ग्रन्थयश्चैव गलगण्डाः सुदारुणाः।
प्रलेपात्तेन शाम्यन्ति विलयं यान्ति चाचिरात् ॥४॥
जीर्णकर्कारुकरसो विड़सैन्धवसंयुतः।
नस्येन हन्ति तरुणं गलगण्डं न संशयः ॥५॥
जलकुम्भीकजं भस्म पक्वं गोमूत्रगालितम्।
पिबेत् कोद्रवभक्ताशी गलगण्डप्रशान्तये ॥६॥
सूर्य्यावर्त्तरसोनाभ्यां गलगण्डोपनाहने।
स्फोटास्रावैः शमं याति गलगण्डो न संशयः ॥७॥
तिक्तालाबुफले पक्वे सप्ताहमुषितं जलम्।
मद्यं वा गलगण्डघ्नं पानात्पथ्यानुसेविनः ॥८॥
कट्फलचूर्णान्तर्गलघर्षो गलगण्डमपहरति।
घृतमिश्रं पीतमिव श्वेतगिरिकर्णिकामूलम् ॥९॥
महिषीमूत्रविमिश्रं लोहमलसंस्थितं घटे मासम्।
अन्तर्धूमविदग्धं लिह्यान्मधुनाथ गलगण्डे ॥१०॥
जिह्वायाः पार्श्वतोऽधस्ताच्छिरा द्वादश कीर्त्तिताः।
तासां स्थूलशिरे द्वेऽधश्छिन्द्यात्ते च शनैः शनैः ॥११॥
बड़िशेनैव संगृह्य कुशपत्रेण बुद्धिमान्।
स्रुते रक्ते व्रणे तस्मिन् दद्यात्सगुड़माद्रकम् ॥१२॥
भोजनञ्चानभिष्यन्दि यूषः कौलत्थ इष्यते।
कर्णयुग्मबहिःसन्धिमध्याभ्यासे स्थितश्च यत् ॥१३॥
उपर्य्युपरि तच्छिन्द्याद्गलगण्डे शिरात्रयम्।

विडङ्गक्षारसिन्धूत्थरास्नाग्निव्योषदारुभिः ॥१४॥
कटुतुम्बीफलरसैः कटुतैलं विपाचयेत् ।
चिरोत्थमपि नस्येन गलगण्डं निवारयेत् ॥१५॥

तुम्बीतैलम् ।

तैलं पिबेच्चामृतवल्लिनिम्बहिंस्राभयावृक्षकपिप्पलीभिः ।
सिद्धं बलाभ्याञ्च सदेवदारु हिताय नित्यं गलगण्डरोगी ॥१६

अमृताद्यं तैलम् ।

माचिकाव्यः सकृत्पीतः क्वाथो वरुणमूलजः ।
गण्डमालां निहन्त्याशु चिरकालानुबन्धिनीम् ॥१७॥
पिष्टा ज्येष्ठाम्बुना पेयाः काञ्चनालत्वचः शुभाः ।
विश्वभेषजसंयुक्ता गण्डमालापहाः पराः ॥१८॥
आरग्वधशिफाच्छिन्नं पिष्ट्वा तण्डुलवारिणा ।
सम्यङ्नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत् ॥१९॥
गण्डमालामयार्त्तानां नस्यकर्माणि योजयेत् ।
निर्गुण्ड्याश्च शिफां सम्यक् वारिणा परिपेषिताम् ॥२०॥

कोषातकीनां स्वरसेन नस्यं तुम्ब्यास्तु वा पिप्पलीसंयुतेन ।
तलेन वा रिष्टभवेन कुर्य्यात् वचोपकुल्ये सह माचिकेण ॥२१॥

ऐन्द्र्या वा गिरिकर्ण्या वा मूलं गोमूत्रयोगतः ।
गण्डमालां हरेत्पीतं चिरकालोत्थितामपि ॥२२॥
अलम्बुषादलोद्भूतात् स्वरसात् द्वे पले पिबेत् ।
अपच्या गण्डमालायाः कामलायाश्च नाशनः ॥२३॥
गलगण्डगण्डमालाकुरण्डांश्च विनाशयेत् ।
पिष्टं ज्येष्ठाम्बुना मूलं लेपाद्ब्राह्मणयष्टिकम् ॥२४॥
अभ्यङ्गान्नाशयेन्नॄणां गण्डमालां सुदारुणाम् ।

छुच्छुन्दर्य्या विपक्वं तु यथात् तैलवरं ध्रुवम् ॥२५॥

छुच्छुन्दरीतैलम् ।

गलगण्डापहं तैलं सिद्धं शाखोटकत्वचा ।
विम्बाश्वमारनिर्गुण्डीसाधितञ्चापि नावनम् ॥२६॥

शाखोटविम्बाद्यतैले ।

निर्गुण्डीस्वरसे चाथ लाङ्गलीमूलकल्कितम् ।
तैलं नस्यान्निहन्त्याशु गण्डमालां सुदारुणाम् ॥२७॥

निर्गुण्डीतैलम् ।

वनकार्पासिकामूलं तण्डुलैः सह योजितम् ।
पक्त्वा तु पूपिकां खादेदपचीनाशनाय तु ॥२८॥
शोभाञ्जनं देवदारु काञ्जिकेन तु पेषितम् ।
कोष्णं प्रलेपतो हन्यादपचीमतिदुस्तराम् ॥२९॥
सर्षपारिष्टपत्राणि दग्ध्वा भल्लातकैः सह ।
छागमूत्रेण संपिष्टमपचीघ्नं प्रलेपनम् ॥३०॥
अश्वत्थकाष्ठं निचुलं गवां दन्तञ्च दाहयेत् ।
वराहमज्जसंयुक्तं भस्म हन्त्यपचीव्रणान् ॥३१॥

पार्ष्णिं प्रति द्वादश चाङ्गुलानि
मित्वेन्द्रवस्तिं परिवर्ज्य सम्यक् ।
विदार्य्य मत्स्याण्डनिभानि वैद्यो
निकृष्य जालान्यनलं विदध्यात् ॥३२॥

मणिबन्धोपरिष्टाद्वा कुर्य्याद्रेखात्रयं भिषक् ।
अङ्गुल्यान्तरितं सम्यगपचीनां प्रशान्तये ॥३३॥
दण्डोत्पलाभवं मूलं बद्धं पुष्येऽपचीं जयेत् ।
अपामार्गस्य वा छिन्द्याज्जिह्वातलगते शिरे ॥३४॥

व्योषं विडङ्गं मधुकं सैन्धवं देवदारु च ।
तैलमेतैः शृतं नस्यात् कृच्छ्रामप्यपचीं जयेत् ॥३५॥

व्योषाद्यं तैलम् ।

चन्दनं साभया लाक्षा वचा कटुकरोहिणी ।
एतैस्तैलं शृतं पीतं समूलामपचीं जयेत् ॥३६॥

चन्दनाद्यं तैलम् ।

गुञ्जाहयारिश्यामाकसर्षपैर्मूत्रसाधितम् ।
तैलन्तु दशधा पश्चात् कणालवणपञ्चकम् ॥३७॥
मरिचैश्चूर्णितैर्युक्तं सर्वावस्थागतां जयेत् ।
अभ्यङ्गादपचीमुग्रां वल्मीकार्शोऽर्बुदव्रणान् ॥३८॥

गुञ्जाद्यं तैलम् ।

ग्रन्थिष्वामेषु कुर्वीत भिषक् शोथप्रतिक्रियाम् ।
पक्वानापाट्य संशोध्य रोपयेद् व्रणभेषजैः ॥३९॥

हिंस्रा सरोहिण्यमृता च भार्गी
श्यामाकविल्वागुरुकृष्णगन्धाः ।
गोपित्तपिष्टाः सह तालपर्ण्या
ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥४०॥

जलात्मकाः पित्तकृते हितास्तु क्षीरोदकाभ्यां परिषेचनञ्च ।
काकोलिवर्गस्य तु शीतलानि पिबेत्कषायाणि सशर्कराणि ॥४१
द्राक्षारसेनेक्षुरसेन वापि चूर्णं पिबेद्वापि हरीतकीनाम् ।
मधूकजम्ब्वर्जुनवेतसानां त्वग्भिः प्रदेहानवतारयेच्च ॥४२॥
कृतेषु दोषेषु यथानुपूर्वा ग्रन्थौ भिषक् श्लेष्मसमुत्थिते तु ।
स्विन्ने च विम्लापनमेव कुर्य्यादङ्गुष्ठरेणुदृशदीसुतैश्च ॥४३॥

विकङ्कतारग्वधकाकणन्ती-

काकादनीतापसवृक्षमूलैः ।
आलेपयेदेनमलाबुभार्गी-
करञ्जकालामदनैश्च विद्वान् ॥४४॥
दन्ती चित्रकमूलत्वक् सुधार्कपयसी गुडः ।
भल्लातकास्थिकाशीशं लेपो भिन्द्याच्छिलामपि ॥४५॥
ग्रन्थ्यर्वुदादिजिल्लेपो माढ्वाहककीटजः ।
सर्जिकामूलकक्षारः शङ्खचूर्णसमन्वितः ।
प्रलेपो विहितस्तीक्ष्णो हन्ति ग्रन्थ्यर्वुदादिकान् ॥४६॥
ग्रन्थीनमर्मप्रभवानपक्कान् उद्धृत्य वाग्निं विदधीत वैद्यः
क्षारेण वै तान् प्रतिसारयेत् तु
संलिख्य संलिख्य यथोपदेशम् ॥४७॥
ग्रन्थ्यर्वुदानां न यतो विशेषः
प्रदेशहेत्वाकृतिदोषदूष्यैः ।
ततश्चिकित्सेद्भिषगर्वुदानि
विधानविद् ग्रन्थिचिकित्सितेन ॥४८॥
वातार्वुदे चाप्युपनाहनानि
स्निग्धैश्च मांसैरथवेशवारैः ।
स्वेदं विदध्यात् कुशलस्तु नाड्या
शृङ्गेण रक्तं बहुशो हरेच्च ॥४९॥
स्वेदोपनाहामृदवस्तुपथ्याः
पित्तार्वुदेकाय विरेचनानि ।
विघृष्य चोडुम्बरशाकगोजी-
पत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत् ॥५०॥
सूक्ष्मीकृतैः सर्जरसप्रियङ्गु-

पतङ्गलोध्रार्जुनयष्टिकाह्वैः ॥५१॥
लेपनं शङ्खचूर्णेन सह मूलकभस्मना ।
कफार्बुदापहं कुर्य्याद् ग्रन्थ्यादिषु विशेषतः ॥५२॥
निष्पावपिण्याककुलत्थकल्कै-
र्मांसप्रगाढैर्दधिमर्दितैश्च ।
लेपं विदध्यात् क्रिमयो यथात्र
मुञ्चन्त्यपत्यान्यथ मक्षिका वा ॥५३॥
अल्पावशिष्टं क्रिमिभिः प्रजग्धं
लिखेत्ततोऽग्निं विदधीत पश्चात् ।
यदल्पमूलं त्रपुताम्रसीसैः
संवेष्ट्य तत्रैरथ वायसैर्वा ॥५४॥
क्षाराग्निशस्त्राण्यवतारयेच्च
मुहुर्मुहुः प्राणमवेक्ष्यमाणः ।
यदृच्छया चोपगतानि पाकं
पाकक्रमेणोपचरेद्यथोक्तम् ॥५५॥
उपोदिकारसाभ्यक्तास्तत्पत्रपरिवेष्टिताः ।
प्रणश्यन्त्यचिरान्नृणां पीडकार्बुदजातयः ।५६॥
उपोदिका काञ्जिकतक्रपिष्टा
तयोपनाहो लवणेन मिश्रः ।
दृष्टोऽर्बुदानां प्रशमाय कैश्चि-
द्दिने दिने वा त्रिषु मर्मजानाम् ॥५७॥
लेपोऽर्बुदजिद्रम्भामोचकभस्मतुषशङ्खचूर्णकृतः ।
सरटरुधिरार्द्रकगन्धकयवविडङ्गनागरैर्वाथ ॥५८॥
स्नुहीगण्डीरिकास्वेदो नाशयेदर्बुदानि च ।

सीसकेनाथ लवणैः पिण्डारकफलेन वा ॥५९॥
हरिद्रालोध्रपत्तुङ्गगृहधूममनःशिलाः।
मधुप्रगाढ़ो लेपोऽयं मेदोऽर्वुदहरः परः ॥६०॥
एतामेव क्रियां कुर्य्यादशेषां शर्करार्वुदे ॥६१॥

इति गलगण्डगण्डमालापचीग्रन्थ्यर्वुदाधिकारः।

## अथ श्लीपदाधिकारः।

लङ्घनालेपनस्वेदरेचनै रक्तमोचणैः।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥१॥
धूस्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः।
प्रलेपः श्लीपदं हन्ति चिरोत्थमतिदारुणम् ॥२॥
निष्पिष्टमारणालेन रूपिकामूलवल्कलम्।
प्रलेपाच्छ्लीपदं हन्ति बद्धमूलमथो दृढ़म् ॥३॥
पिण्डारकतरुसम्भववन्दाकशिफा जयति सर्पिषा पीता।
श्लीपदमुग्रं नियतं बद्धा सूत्रेण जङ्घायाम् ॥४॥
हितश्चालेपने नित्यं चित्रको देवदारु वा।
सिद्धार्थशिग्रुकल्को वा सुखोष्णो मूत्रपेषितः ॥५॥
स्नेहस्वेदोपनाहांश्च श्लीपदेऽनिलजे भिषक्।
कृत्वा गुल्फोपरि शिरां विध्येत् तु चतुरङ्गुले ॥६॥
गुल्फस्याधः शिरां विध्येत् श्लीपदे पित्तसम्भवे।
पित्तघ्नीञ्च क्रियां कुर्य्यात्पित्तार्वुदविसर्पवत् ॥७॥
मञ्जिष्ठां मधुकं रास्नां सहिंस्रां सपुनर्नवाम्।
पिष्ट्वारणालैर्लेपोऽयं पित्तश्लीपदशान्तये ॥८॥

शिरां सुविदितां विध्येदङ्गुष्ठे श्लीपदे ।
मधुयुक्तानि चाभीक्ष्णं कषायाणि पिबेन्नरः ॥९॥
पिबेत्सर्षपतैलेन श्लीपदानां निवृत्तये ।
पूतीकरञ्जच्छदजं रसं वापि यथाबलम् ॥१०॥
अनेनैव विधानेन पुत्रञ्जीवकजं रसम् ।
काञ्जिकेन पिबेच्चूर्णं मूत्रैर्वा वृद्धदारजम् ॥११॥
रजनीं गुडसंयुक्तां गोमूत्रेण पिबेन्नरः ।
वर्षोत्थं श्लीपदं हन्ति दद्रुकुष्ठं विशेषतः ॥१२॥
गन्धर्वतैलभृष्टां हरीतकीं गोजलेन यः पिबति ।
श्लीपदबन्धनमुक्तो भवत्यसौ सप्तरात्रेण ॥१३॥
धान्याम्लं तैलसंयुक्तं कफवातविनाशनम् ।
दीपनञ्चामदोषघ्नमेतत् श्लीपदनाशनम् ॥१४॥
गोधावतीमूलयुक्तां खादेन्माषेण्डरीं नरः ।
जयेत् श्लीपदकोपोत्थं ज्वरं सद्यो न संशयः ॥१५॥
श्लीपदघ्नो रसोऽभ्यासाद्गुडूच्यास्तैलसंयुतः ।
त्रिकटुत्रिफलाचव्यं दार्वीवरुणगोक्षुरम् ॥१६॥
अलम्बुषां गुडूचीञ्च समभागानि चूर्णयेत् ।
सर्वेषां चूर्णमाहृत्य वृद्धदारस्य तत्समम् ॥१७॥
काञ्जिकेन च तत् पेयमक्षमात्रं प्रमाणतः ।
जीर्णे चापरिहारं स्याद्भोजनं सर्वकामिकम् ॥१८॥
नाशयेत् श्लीपदं स्थौल्यमामवातं सुदारुणम् ।
गुल्मकुष्ठानिलहरं वातश्लेष्मज्वरापहम् ॥१९॥

वृद्धदारकचूर्णम् ।

पिप्पलीत्रिफलादारुनागरं सपुनर्नवम् ।

भागैर्द्विपलिकैरेषां तत्समं वृद्धदारकम् ॥२०॥
काञ्जिकेन पिबेच्चूर्णं कर्षमात्रं प्रमाणतः।
जीर्णे चापरिहारं स्याद्भोजनं सर्वकामिकम् ॥२१॥
श्लीपदं वातरोगांश्च हन्यात् प्लीहानमेव च।
अग्निञ्च कुरुते घोरं भस्मकञ्च नियच्छति ॥२२॥

पिप्पल्यादिचूर्णम्।

कृष्णाचित्रकदन्तीनां कर्षमर्द्धपलं पलम्।
विंशतिश्च हरीतक्यो गुडस्य तु पलद्वयम्।
मधुना मोदकं खादेत् श्लीपदं हन्ति दुस्तरम् ॥२३॥

कृष्णाद्यो मोदकः।

सुरसां देवकाष्ठञ्च त्रिकटु त्रिफले तथा।
लवणान्यथ सर्वाणि विडङ्गान्यथ चित्रकम् ॥२४॥
चविकापिप्पलीमूलं गुग्गुलुर्हवुषा वचा।
यवाग्रजञ्च पाठा च शट्येला वृद्धदारकम् ॥२५॥
कल्कैश्च कार्षिकैरेभिर्घृतप्रस्थं विपाचयेत्।
दशमूलीकषायेण धान्ययूषद्रवेण च ॥२६॥
दधिमण्डसमायुक्तं प्रस्थं प्रस्थं पृथक् पृथक्।
पक्वं स्यादुद्धृतं कल्कात् पिबेत्कर्षत्रयं हविः ॥२७॥
श्लीपदं कफवातोत्थं मांसरक्ताश्रितञ्च यत्।
मेदश्रितञ्च पित्तोत्थं हन्यादेव न संशयः ॥२८॥
अपचीं गण्डमालाञ्च अन्त्रवृद्धिं तथार्बुदम्।
नाशयेद् ग्रहणीदोषं श्वयथुं गुदजानि च ॥२९॥
परमाग्निकरं हृद्यं कोष्ठक्रिमिविनाशनम्।
घृतं सौरेश्वरं नाम श्लीपदं हन्ति सेवितम्।

जीवनेन कृतं ह्येतत् रोगानीकविनाशनम् ॥ १० ॥

सौरेश्वरं घृतम् ।

विड़ङ्गमरिचार्केषु नागरे चित्रके तथा ।
भद्रदार्व्येलकाख्येषु सर्वेषु लवणेषु च ।
तैलं पक्वं पिबेद्वापि श्लीपदानां निवृत्तये ॥ ११ ॥

विड़ङ्गाद्यं तैलम् ।

इति श्लीपदचिकित्सा ।

## अथ विद्रध्यधिकारः ।

जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधौ ।
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना ॥ १ ॥
वातघ्नमूलकल्कैस्तु वसातैलघृतप्लुतैः ।
सुखोष्णो बहलो लेपः प्रयोज्यो वातविद्रधौ ॥ २ ॥
स्वेदोपनाहाः कर्त्तव्याः शिग्रुमूलसमन्विताः ।
यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत् ॥ ३ ॥
विलीयते क्षणेनैवमपक्वश्चैव विद्रधिः ।
पुनर्नवादारुविश्वदशमूलाभयाम्भसा ॥ ४ ॥
गुग्गुलुं रुवुतैलं वा पिबन्मारुतविद्रधौ ।
पैत्तिकं शर्करालाजामधुकैः शारिवायुतैः ॥ ५ ॥
प्रदिह्यात् क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ।
पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम् ॥ ६ ॥
पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम् ।
यष्ट्याह्वशारिवादूर्वानलमूलैः सचन्दनैः ॥ ७ ॥
क्षीरपिष्टैः प्रलेपस्तु पित्तविद्रधिशान्तये ।

इष्टकासिकतालोहगोशकृत्तुषपांशुभिः ॥ ८ ॥
मूत्रपिष्टैश्च सततं स्वेदयेत् श्लेष्मविद्रधिम् ।
दशमूलकषायेण सस्नेहेन रसेन वा ॥ ९ ॥
शोथं व्रणं वा कोष्णेन सशूलं परिषेचयेत् ।
त्रिफलाशिग्रुवरुणदशमूलाम्भसा पिबेत् ॥ १० ॥
गुग्गुलुं मूत्रयुक्तं वा विद्रधौ कफसम्भवे ।
पित्तविद्रधिवत्सर्वां क्रियां निरवशेषतः ॥ ११ ॥
विद्रध्योः कुशलः कुर्य्याद्रक्तागन्तुनिमित्तयोः ।
शोभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसंयुतः ॥ १२ ॥
अचिरं विद्रधिं हन्ति प्रातः प्रातर्निषेवितः ।
शिग्रुमूलं जले धौतं दरपिष्टं प्रगालयेत् ॥ १३ ॥
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः ।
श्वेतवर्षाभुवो मूलं मूलं वरुणकस्य च ॥ १४ ॥
जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत् ।
वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते ।
ऊषकादिप्रतिवापं पिबेत् संशमनाय वै ॥ १५ ॥
शमयति पाठामूलं क्षौद्रयुतं तण्डुलाम्भसा पीतम् ।
अन्तर्भूतं विद्रधिमुद्धतमाश्वेव मनुजस्य ॥ १६ ॥
अपक्वे त्वेतदुद्दिष्टं पक्वे तु व्रणवत् क्रिया ॥ १७ ॥
स्रुतेऽप्यूर्द्ध्वमधश्चैव मैरेयाम्लसुरासवैः ।
पेयो वरुणकादिस्तु मधुशिग्रुरसोऽथवा ॥ १८ ॥
प्रियङ्गुधातकीलोध्रं कट्फलं तिनिशत्वचम् ।
एतैस्तैलं विपक्तव्यं विद्रधौ रोपणं परम् ॥ १९ ॥

इति विद्रधिचिकित्सा ।

जीवकेन कृतं ह्येतत् रोगानीकविनाशनम् ॥ २० ॥

सौरेश्वरं घृतम् ।

विड़ङ्गमरिचार्केषु नागरे चित्रके तथा ।
भद्रदार्व्वेलकाख्येषु सर्वेषु लवणेषु च ।
तैलं पक्कं पिबेद्वापि श्लीपदानां निवृत्तये ॥ २१ ॥

विड़ङ्गाद्यं तैलम् ।

इति श्लीपदचिकित्सा ।

## अथ विद्रध्यधिकारः ।

जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधौ ।
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना ॥ १ ॥
वातघ्नमूलकल्कैस्तु वसातैलघृतप्लुतैः ।
सुखोष्णो बहलो लेपः प्रयोज्यो वातविद्रधौ ॥ २ ॥
स्वेदोपनाहाः कर्त्तव्याः शिग्रुमूलसमन्विताः ।
यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत् ॥ ३ ॥
विलीयते चणेनैवमपक्कश्चैव विद्रधिः ।
पुनर्नवादारुविश्वदशमूलाभयाम्भसा ॥ ४ ॥
गुग्गुलुं रुवुतैलं वा पिबन्मारुतविद्रधौ ।
पैत्तिकं शर्करालाजामधुकैः शारिवायुतैः ॥ ५ ॥
प्रदिह्यात् चीरपिष्टैर्वा पयस्योशीरचन्दनैः ।
पिबेद्वा त्रिफलाक्काथं त्रिवृत्कल्काचसंयुतम् ॥ ६ ॥
पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम् ।
यष्ट्याह्वशारिवादूर्वानलमूलैः सचन्दनैः ॥ ७ ॥
चीरपिष्टैः प्रलेपस्तु पित्तविद्रधिशान्तये ।

इष्टकासिकतालोहगोशकृत्तुषपांशुभिः ॥ ८ ॥
मूत्रपिष्टैश्च सततं स्वेदयेत् श्लेष्मविद्रधिम्।
दशमूलकषायेण सस्नेहेन रसेन वा ॥ ९ ॥
शोथं व्रणं वा कोष्णेन सशूलं परिषेचयेत्।
त्रिफलाशिग्रुवरुणदशमूलाम्भसा पिबेत् ॥ १० ॥
गुग्गुलुं मूत्रयुक्तं वा विद्रधौ कफसम्भवे।
पित्तविद्रधिवत्सर्वां क्रियां निरवशेषतः ॥ ११ ॥
विद्रध्योः कुशलः कुर्य्याद्रक्तागन्तुनिमित्तयोः।
शोभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसंयुतः ॥ १२ ॥
अचिरं विद्रधिं हन्ति प्रातः प्रातर्निषेवितः।
शिग्रुमूलं जले धौतं दरपिष्टं प्रगालयेत् ॥ १३ ॥
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः।
श्वेतवर्षाभुवो मूलं मूलं वरुणकस्य च ॥ १४ ॥
जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत्।
वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते।
ऊषकादिप्रतिवापं पिबेत् संशमनाय वै ॥१५॥
शमयति पाठामूलं क्षौद्रयुतं तण्डुलाम्भसा पीतम्।
अन्तर्भूतं विद्रधिमुद्धतमाश्वेव मनुजस्य ॥ १६ ॥
अपक्वे त्वेतदुद्दिष्टं पक्वे तु व्रणवत् क्रिया ॥ १७ ॥
स्रुतेऽप्यूर्द्ध्वमधश्चैव मैरेयाम्लसुरासवैः।
पेयो वरुणकादिस्तु मधुशिग्रुरसोऽथवा ॥ १८ ॥
प्रियङ्गुधातकीलोध्रं कट्फलं तिलिशत्वचम्।
एतैस्तैलं विपक्तव्यं विद्रधौ रोपणं परम् ॥ १९ ॥

इति विद्रधिचिकित्सा।

# अथ व्रणशोथाधिकारः।

आदौ विम्लापनं कुर्य्यात् द्वितीयमवसेचनम्।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम्॥ १॥
पञ्चमं शोधनञ्चैव षष्ठं रोपणमिष्यते।
एते क्रमा व्रणस्योक्ताः सप्तमो वैकृतापहः॥ २॥
मातुलुङ्गाग्निमन्थौ च भद्रदारु महौषधम्।
अहिंस्रा चैव रास्ना च प्रलेपो वातशोथहा॥ ३॥
कल्कः काञ्जिकसम्पिष्टः स्निग्धः शाखोटकत्वचः।
सुपर्ण इव नागानां रक्तशोथविनाशनः॥ ४॥
दूर्वा च नलमूलञ्च मधुकं चन्दनं तथा।
शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोथहा॥ ५॥
न्यग्रोधोडुम्बराश्वत्थप्लक्षवेतसवल्कलैः।
ससर्पिष्कैः प्रलेपः स्याच्छोथनिर्वापणः स्मृतः॥ ६॥
आगन्तौ शोणितोत्थे च एष एव क्रियाक्रमः।
अजगन्धाश्वगन्धा च कालासरलया सह॥ ७॥
एकेषिकाजशृङ्गी च प्रलेपः श्लेष्मशोथहा।
पुनर्नवाशिग्रुदारुदशमूलमहौषधैः॥ ८॥
कफवातकृते शोथे लेपः कोष्णो विधीयते।
न रात्रौ लेपनं दद्याद्दत्तञ्च पतितन्तथा॥ ९॥
न च पर्य्युषितं शुष्यमाणन्नैवावधारयेत्।
शुष्यमाणमुपेक्षेत प्रदेहं पीड़नं प्रति॥ १०॥
न चापि मुखमालिम्पेत् तेन दोषः प्रसिच्यते।
स्थिरान् मन्दरुजः शोथान् स्नेहैर्वातकफापहैः॥११॥

अभ्यंज्य स्वेदयित्वा च वेणुनाड्या ततः शनैः।
विम्लापनार्थं मृद्नीयात्तलेनाङ्गुष्ठकेन वा ॥१२॥
रक्तावसेचनं कुर्य्यादादावेव विचक्षणः।
शोथे महति संबद्धे वेदनावति च व्रणे ॥१३॥
यो न याति शमं लेपस्वेदसेकापतर्पणैः।
सोऽपि नाशं व्रजत्याशु शोथः शोणितमोक्षणात् ॥१४॥
एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकतः।
रक्तं हि व्यक्ततां याति तस्मिन्नास्ति न चास्ति रुक् ॥१५॥
स चेदेवमुपाक्रान्तः शोथो न प्रशमं व्रजेत्।
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते ॥१६॥
तैलेन सर्पिषा वापि ताभ्यां वा शक्तुपिण्डिका।
सुखोष्णाः शोथपाकार्थमुपनाहः प्रशस्यते ॥१७॥
सतिला सातसीबीजा दध्यम्ला शक्तुपिण्डिका।
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥१८॥
बालवृद्धासहक्षीणभीरूणां योषितामपि।
मर्म्मोपरि च जाते च पक्वे शोथे च दारणे।
गवां दन्तं जले घृष्टं बिन्दुमात्रं प्रलेपयेत् ॥१९॥
अत्यन्तकठिने चापि शोथे पाचनभेदनम्।
कटुतैलान्वितैर्लेपात् सर्पनिर्म्मोकभस्मभिः ॥२०॥
चयः शाम्यति गण्डस्य प्रकोपः स्फुटति द्रुतम्।
चिरबिल्वाग्निको दन्ती चित्रको हयमारकः ॥२१॥
कपोतकङ्कगृध्राणां पुरीषाणि च दारणम्।
क्षारद्रव्याणि वा यानि क्षारो वा दारणः परः ॥२२॥
द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि प्रपीडनम्।

यवगोधूममाषाणां चूर्णानि च समासतः ॥२३॥
ततः प्रक्षालनं क्वाथः पटोलोनिम्बपत्रजः।
अविशुद्धे विशुद्धे च न्यग्रोधादित्वगुद्भवः ॥२४॥
पञ्चमूलद्वयं वाते न्यग्रोधादिश्च पैत्तिके।
आरग्वधादिको योज्यः कफजे सर्वकर्मसु ॥२५॥
तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्घृतम्।
मधुकं निम्बपत्राणि लेपः स्याद् व्रणशोधनः ॥ २६ ॥

तिलाष्टकः।

निम्बपत्रं तिला दन्ती त्रिवृत् सैन्धवमाक्षिकम्।
दुष्टव्रणप्रशमनो लेपः शोधनकेशरी ॥ २७ ॥
एकं वा सारिवामूलं सर्वव्रणविशोधनम्।
पटोलं तिलयष्ट्याह्वत्रिवृद्दन्तीनिशाद्वयम् ॥ २८ ॥
निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः।
त्रिफलाखदिरो दार्वीन्यग्रोधादिबलाकुशाः ॥ २९ ॥
निम्बकोलकपत्राणि कषायः शोधने हितः।
अपेतपूतिमांसानां मांसस्थानमरोहताम् ॥ ३० ॥
कल्कः संरोपणः कार्य्यस्तिलानां मधुकान्वितः।
निम्बपत्रमधुभ्यान्तु युक्तः संशोधनः स्मृतः ॥ ३१ ॥
पूर्वाभ्यां सर्पिषा वापि युक्तश्चाप्युपरोहणः।
निम्बपत्रतिलैः कल्को मधुनाक्षतशोधनः।
रोपणः सर्पिषा युक्तो यवकल्केऽप्ययं विधिः ॥३२॥
निम्बपत्रघृतक्षौद्रदार्वीमधुकसंयुता।
वर्त्तिस्तिलानां कल्को वा शोधयेद्रोपयेद् व्रणम् ॥३३॥
समदलदुग्धकल्कः शमयात दुष्टव्रणं लेपेन।

मधुयुक्ता शरपुङ्खा सर्वव्रणरोपणी कथिता ॥ ३४ ॥
मानुषशिरः कपालं तदस्थि वा लेपनं मूत्रेण ।
रोपणमिदं क्षतानां योगशतैरप्यसाध्यानाम् ॥ ३५ ॥
व्रणान् विशोधयेद्वर्त्त्या सूक्ष्मा स्यान्मर्मसन्धिगान् ।
अभयात्रिवृतादन्तीलाङ्गलीमधुसैन्धवैः ॥ ३६ ॥
सुषवीपत्रपत्तूरकर्णमोटकुठेरकाः ।
वृषगीते प्रलेपेन गम्भीरव्रणरोपणाः ॥ ३७ ॥
पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमन्वितैः ।
धातकीचूर्णलोध्रैर्वा तथा रोहन्ति ते व्रणाः ॥ ३८ ॥
सदाहा वेदनावन्तो व्रणा ये मारुतोत्तराः ।
तेषां तिलानुमांश्चैव भृष्टान् पयसि निर्वृतान् ॥ ३९ ॥
तेनैव पयसा पिष्ट्वा दद्यादालेपनं भिषक् ।
वातादिभूतान् सास्रावान् धूपयेदुग्रवेदनान् ॥ ४० ॥
यवाज्यभूर्जमदनश्रीवेष्टकसुराह्वयैः ।
श्रीवासगुग्गुलुगुरुशालनिर्य्यासधूपिताः ॥ ४१ ॥
कठिनत्वं व्रणा यान्ति नश्यन्त्युग्राश्च वेदनाः ॥ ४२ ॥
तिलाः पयः सिताक्षौद्रं तैलं मधुकचन्दनम् ।
लेपेन शोथरुग्दाहरक्तं निर्वापयेद् व्रणान् ॥ ४३ ॥
पित्तविद्रधिवीसर्पशमनं लेपनादिकम् ।
अग्निदग्धे व्रणे सम्यक् प्रयुञ्जीत चिकित्सकः ॥ ४४ ॥
महाराष्ट्रिजटालेपो दग्धपिष्टावचूर्णितम् ।
जीर्णगेहतृणाच्चूर्णं दग्धव्रणहितं मतम् ॥ ४५ ॥
जीवककल्कं पश्चात् सिक्थकसर्जरसमिश्रितं हरति ।
घृतमभ्यङ्गात् पावकदग्धदुःखं क्षणार्द्धेन ॥ ४६ ॥

अन्तर्दग्धकुठारको दहनजं लेपाद्विहन्ति व्रणम्
अश्वत्थस्य विशुष्कवल्कलकृतं चूर्णं तथा गुण्ठनात् ।
अभ्यङ्गाद्द्विनिहन्ति तैलमखिलं गण्डूपदैः साधितं
पिष्टा शाल्मलितूलकैर्जलगता लेपात् तथा वालुकाः ॥ ४७ ॥

सद्यः क्षतं व्रणं वैद्यः सशूलं परिषेचयेत् ।
यष्टीमधुककल्केन किञ्चिदुष्णेन सर्पिषा ॥ ४८ ॥

बुद्ध्वागन्तुव्रणं वैद्यो घृतं क्षौद्रसमन्वितम् ।
शीतां क्रियां प्रयुञ्जीत पित्तरक्तोष्मनाशिनीम् ॥ ४९ ॥

कान्तक्रामुकमेकं सुसूक्ष्मं गव्यसर्पिषा पिष्टम् ।
शमयति लेपान्नियतं व्रणमागन्तुजं न सन्देहः ॥ ५० ॥

अपामार्गस्य संसिक्तं पत्रोत्थेन रसेन वा ।
सद्यो व्रणेषु रक्तन्तु प्रवृत्तं परितिष्ठति ॥ ५१ ॥

कर्पूरपूरितं बद्धं सघृतं संप्ररोहति ।
सद्यः शस्त्रक्षतं पुंसां व्यथापाकविवर्जितम् ॥ ५२ ॥

शरपुङ्खा काकजङ्घा प्रथमं महिषीसुतमलम् ।
लज्जा च सद्यस्कव्रणघ्नं पृथगेव तु ॥ ५३ ॥

शुनो जिह्वाकृतश्चूर्णः सद्यः क्षतविरोहणः ।
चक्रतैलं क्षते दिष्टं रोपणं परमं मतम् ॥ ५४ ॥

यवक्षारं भक्षयित्वा पिण्डं दद्याद् व्रणोपरि ।
शृगालकोलिमूलेन नष्टशल्यं विनिःसरेत् ॥ ५५ ॥

लाङ्गलीमूललेपाद्वा गवाक्षीमूलतस्तथा ।
क्षतोष्मणो निग्रहार्थं तत्कालं विसृतस्य च ॥ ५६ ॥

कषायशीतमधुराः स्निग्धा लेपादयो हिताः ।
आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ॥ ५७ ॥

पक्वाशयस्थे देयश्च विरेचनमसंशयः ।
काथो वंशत्वगेरण्डश्वदंष्ट्राश्मभिदाकृतः ॥ ५८ ॥
सहिङ्गुसैन्धवः पीतः कोष्ठस्थं स्रावयेदसृक् ।
यवकोलकुलत्थानां निःस्नेहेन रसेन च ॥ ५९ ॥
भुञ्जीतान्नं यवागूं वा पिबेत् सैन्धवसंयुताम् ।
अत्यर्थमस्रं स्रवति प्रायशो यत्र वीक्ष्यते ॥ ६० ॥
ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे ।
स्नेहपानं परिषेकं स्नेहलेपोपनाहनम् ॥ ६१ ॥
स्नेहवस्तिञ्च कुर्वीत वातघ्नौषधसाधिताम् ।
इति साप्ताहिकः प्रोक्तः सद्यो व्रणहितो विधिः ॥६२॥
सप्ताहात्परतः कुर्य्याच्छारीरव्रणवत् क्रियाम् ।
करञ्जारिष्टनिर्गुण्डीरसो हन्याद् व्रणक्रिमीन् ॥ ६३ ॥
कलायविदलीपत्रं कोषाम्रास्थि च पूरणात् ।
सुरसादिरसैः सेको लेपनः स्वरसेन वा ॥ ६४ ॥
निम्बसम्पाकजात्यर्कसप्तपर्णाश्वमारकाः ।
क्रिमिघ्ना मूत्रसंयुक्ताः सेका लेपनधावनैः ॥ ६५ ॥
प्रच्छाद्य मांसपेश्या वा क्रिमीनपहरेद् व्रणात् ।
लशुनेनाथवा दद्याल्लेपनं क्रिमिनाशनम् ॥ ६६ ॥

ये क्लेदपाकस्रुतिगन्धवन्तो
व्रणा महान्तः सरुजः सशोथाः ।
प्रयान्ति ते गुग्गुलुमिश्रितेन
पीतेन शान्तिं त्रिफलारसेन ॥६७॥

त्रिफलागुग्गुलुः ।

त्रिफलाचूर्णसंयुक्तो गुग्गुलुर्वटकीकृतः ।

निर्य्यन्त्रणो विबन्धघ्नो व्रणशोधनरोपणः ॥ ६८ ॥

वटिकागुग्गुलुः ।

अमृतागुग्गुलुः शस्तो हितं तैलञ्च वज्रकम् ।
विड़ङ्गत्रिफलाव्योषचूर्णं गुग्गुलुना समम् ॥ ६९ ॥
सर्पिषा वटकीकृत्वा खादेद्वा हितभोजनः ।
दुष्टव्रणापचीमेहकुष्ठनाडीव्रणापहः ॥ ७० ॥

वटिकागुग्गुलुः ।

अमृतापटोलमूलत्रिफलात्रिकटुक्रिमिघ्नानाम् ।
समभागानां चूर्णं सर्व्वसमो गुग्गुलोर्भागः ॥ ७१ ॥
प्रतिवासरमेकैकां खादेदक्षप्रमाणाम् ।
जेतुं व्रणान् वातासृग्गुल्मोदरश्वयथुरोगादीन् ॥ ७२ ॥

अमृतागुग्गुलुः ।

जातीनिम्बपटोलपत्रकटुकादार्व्वीनिशाशारिवा-
मञ्जिष्ठाभयतुत्थसिक्थमधुकैर्नक्ताह्वबीजैः समैः ।
सर्पिःसिद्धमनेन सूक्ष्मवदना मर्म्माश्रिताः स्राविणो
गम्भीराः सरुजो व्रणाः सगतिकाः शुध्यन्ति रोहन्ति च ॥ ७३ ॥

जातिकाद्यं घृतम् ।

गौराहरिद्रामञ्जिष्ठामांसीमधुकमेव च ।
प्रपौण्डरीकं ह्रीवेरं भद्रमुस्तं सचन्दनम् ॥ ७४ ॥
जातीनिम्बपटोलञ्च करञ्जं कटुरोहिणी ।
मधूच्छिष्टं समधुकं महामेदा तथैव च ॥ ७५ ॥
पञ्चवल्कलतोयेन घृतप्रस्थं विपाचयेत् ।
एष गौरो महावीर्य्यः सर्व्वव्रणविशोधनः ॥ ७६ ॥
आगन्तुः सहजाश्चैव सुचिरोत्थाश्च ये व्रणाः ।

विषमामपि नाड़ीञ्च शोधयेच्छीघ्रमेव च ॥७७॥
गौराद्यं जातिकाद्यञ्च तैलमेवं प्रसाध्यते।
तैलं सूक्ष्मानने दुष्टे व्रणे गम्भीर एव च ॥७८॥

गौराद्यं घृतम्।

नक्तमालस्य पत्राणि वरुणानि फलानि च।
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा ॥७९॥
द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी।
मञ्जिष्ठा चन्दनोशीरमुत्पलं शारिवे त्रिवृत्।
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥८०॥
दुष्टव्रणप्रशमनं तथा नाड़ीविशोधनम्।
सद्यश्छिन्नव्रणानाञ्च करञ्जाद्यमिदेष्यते ॥८१॥

करञ्जाद्यं घृतम्।

प्रपौण्डरीकमञ्जिष्ठामधुकोशीरपद्मकैः।
सहरिद्रैः शृतं सर्पिः सक्षीरं व्रणरोपणम् ॥८२॥

प्रपौण्डरीकाद्यं घृतम्।

तिक्तासिक्थनिशायष्टीनक्ताह्वफलपल्लवैः।
पटोलमालतीनिम्बपत्रैर्व्रण्यं घृतं पचेत् ॥८३॥

तिक्ताद्यं घृतम्।

सिन्दूरकुष्ठविषहिङ्गुरसोनचित्र-
बाणाङ्घ्रिलाङ्गलिककल्कविपक्वतैलम्।
प्रसादमन्वयुतफुत्कृततनुत्रफेनो
दुष्टव्रणप्रशमनो विपरीतमल्लः ॥८४॥
खड्गाभिघातगुरुगण्डमहोपदंश-
नाड़ीक्षतव्रणविचर्चिककुष्ठपामाः।

एतान्निहन्ति विपरीतकमल्लनाम
तैलं यथेष्टशयनासनभोजनस्य ॥८५॥

विपरीतमल्लतैलम् ।

कुठारकात्पलशतं साधयेन्नल्वणेऽम्भसि ।
तेन पादावशेषेण तैलप्रस्थं विपाचयेत् ॥८६॥
कल्कैः कुठारापामार्गप्रोष्ठिकामच्छिकायुतैः ।
एतदङ्गारकं नाम व्रणशोधनरोपणम् ।
नाड़ीषु परमाऽभ्यङ्गो निजास्वागन्तुकीषु च ॥८७॥

अङ्गारकं तैलम् ।

प्रपौण्डरीकं मधुकं काकोल्यौ द्वे सचन्दने ।
सिद्धमेभिः समं तैलं तत्परं व्रणरोपणम् ॥८८॥

प्रपौण्डरीकाद्यं तैलम् ।

दुर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन च ।
दार्वीत्वचश्च कल्केन प्रधानं रोपणं व्रणे ॥८९॥
येनैव विधिना तैलं घृतं तेनैव साधयेत् ।
रक्तपित्तोत्तरं ज्ञात्वा सर्पिरेवावपाचयेत् ॥९०॥

दूर्वाद्यं घृतं तैलम् ।

मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत् ।
सर्वेषामग्निदग्धानामेतद्रोपणमिष्यते ॥९१॥

मञ्जिष्ठाद्यं घृतम् ।

सिद्धं कषायकल्काभ्यां पाटल्याः कटुतैलकम् ।
दग्धव्रणरुजास्रावदाहविस्फोटनाशनम् ॥९२॥

पाटलीतैलम् ।

चन्दनं वटशुङ्गञ्च मञ्जिष्ठा मधुकं तथा ।

प्रपौण्डरीकं मूर्वा च पतङ्गं धातकी तथा ॥८३॥
एभिस्तैलं विपक्तव्यं सर्पिःक्षीरसमन्वितम् ।
अग्निदग्धव्रणेष्विष्टं व्रणयाद्रोपणं परम् ॥८४॥

चन्दनाद्यं यमकम् ।

मनःशिलाले मञ्जिष्ठा सलाक्षारजनीद्वयम् ।
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परः ॥८५॥
अयोरजः सकाशीशं त्रिफलाकुसुमानि च ।
प्रलेपः कुरुते कार्ष्ण्यं सद्य एव नवत्वचि ॥८६॥
कालीयकलताम्रास्थिहेमकालारसोत्तमैः ।
लेपः सगोमयरसः सवर्णकरणः परः ॥८७॥
चतुष्पदां हि त्वग्रोमखुरशृङ्गास्थिभस्मना ।
तैलाक्ता चूर्णिता भूमिर्भवेद्रोमवती पुनः ॥
व्रणग्रन्थिं ग्रन्थिवच्च जयेत् क्षारेण वा भिषक् ॥८८॥

इति व्रणशोथसद्योव्रणचिकित्सा ।

## अथ नाड़ीव्रणाधिकारः ।

नाड़ीनां गतिमन्विष्य शस्त्रेणापाट्य शास्त्रवित् ।
सर्वव्रणक्रमं कुर्य्याच्छोधनं रोपणादिकम् ॥ १ ॥
नाड़ीं वातकृतां साधुपाटितां लेपयेद्भिषक् ।
प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ॥ २ ॥
पैत्तिकीं तिलमञ्जिष्ठानागदन्तीनिशायुगैः ।
श्लैष्मिकीं तिलयष्ट्याह्वनिकुम्भारिष्टसैन्धवैः ।
शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ॥३॥
आरग्वधनिशाकालाचूर्णाज्यक्षौद्रसंयुता ।

मूत्रवर्त्तिर्व्रणे योज्या शोधनी गतिनाशिनी ॥ ४ ॥

घोण्टाफललवणमदनात् फलानि
पूगस्य च त्वक् लवणश्च मुख्यम् ।
स्नुह्यर्कदुग्धेन सहैष कल्को
वर्त्तीकृतो हन्त्यचिरेण नाड़ीम् ॥ ५ ॥

वर्त्तीकृतं माक्षिकसंप्रयुक्तं
नाड़ीघ्नमुक्तं लवणोत्तमं वा ।
दुष्टव्रणे यद्विहितश्च तैलं
तत् सेव्यमानं गतिमाशु हन्ति ॥ ६ ॥

जात्यर्कसम्याककरञ्जदन्ती-
सिन्धूत्थसौवर्चलयावशूकैः ।
वर्त्तिः कृता हन्त्यचिरेण नाड़ीं
स्नुक्क्षीरपिष्टा सह माक्षिकेण ॥ ७ ॥

माहिषदधिकोद्रवान्नमिश्रितं हरति चिरविरूढ़ाश्च ।
भुक्तं कङ्गुनिकामूलचूर्णमतिदारुणां नाड़ीम् ॥ ८ ॥

कृशदुर्बलभीरूणां गतिर्मर्माश्रिता च या ।
क्षारसूत्रेण तां छिन्द्यान्न शस्त्रेण कदाचन ॥ ९ ॥

एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम् ।
सूचीं विदध्यादभ्यन्ते चोन्नाम्य चाशु निर्हरेत् ॥ १० ॥

सूत्रस्यान्तं समानीय गाढ़ं बन्धं समाचरेत् ।
ततः क्षीणबलं वीक्ष्य सूत्रमन्यत् प्रवेशयेत् ॥ ११ ॥

क्षाराक्तं मतिमान् वैद्यो यावन्न छिद्यते गतिः ।
भगन्दरेऽप्येष विधिः कार्य्यो वैद्येन जानता ॥ १२ ॥

अर्बुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत्

सूचीभिर्यववक्राभिराचितं खासमन्ततः ॥ १३ ॥
मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेद् व्रणम्।
गुग्गुलुत्रिफलाव्योषैः समांशैराज्ययोजितः।
नाड़ीदुष्टव्रणशूलभगन्दरविनाशनः ॥ १४ ॥

सप्ताङ्गगुग्गुलुः।

सर्जिकासिन्धुदन्त्यग्निरूपिकामलनीलिका।
खरमञ्जरीवीजेषु तैलं गोमूत्रपाचितम्।
दुष्टव्रणप्रशमनं कफनाड़ीव्रणापहम् ॥ १५ ॥

सर्जिकाद्यं तैलम्।

कुम्भीकखर्जूरकरित्थविल्व-
वनस्पतीनान्तु शलाटुवर्गें।
कृत्वा कषायं विपचेत्तु तैल-
मावाप्य मुस्तं शरलं प्रियङ्गु ॥ १६ ॥
सौगन्धिकामोचरसा हि पुष्प-
लोध्राणि दत्त्वा खलु धातकीञ्च।
एतेन शल्यप्रभवा हि नाड़ी
रोहेद् व्रणो वै सुखमाशु चैव ॥१७॥

कुम्भिकाद्यं तैलम्।

भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विड़ङ्गरजनीद्वयचित्रकैश्च।
स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाड़ीं कफानिलकृतामपचीं व्रणांश्च ॥१८॥

भल्लातकाद्यं तैलम्।

समूलपत्रां निर्गुण्डीं पीड़यित्वा रसेन तु।

तेन सिद्धं समं तैलं नाड़ीदुष्टव्रणापहम् ॥१९॥
हितं चामापचीनान्तु पानाभ्यञ्जननावनैः ।
विविधेषु च स्फोटेषु तथा सर्वव्रणेषु च ॥२०॥

निर्गुण्डीतैलम् ।

हंसपादारिष्टपत्रं जातीपत्रं ततो रसैः ।
तत्कल्कैर्विपचेत् तैलं नाड़ीव्रणविरोहणम् ॥२१॥

हंसपादादि तैलम् ।

इति नाड़ीव्रणचिकित्सा ।

## अथ भगन्दराधिकारः ।

गुदस्य श्वयथुं ज्ञात्वा विशोष्य शोधयेत्ततः ।
रक्तावसेचनं कार्य्यं यथा पाकं न गच्छति ॥१॥
वटपत्रेष्टकाशुण्ठीगुडूच्यः सपुनर्नवाः ।
सुपिष्टाः पीड़कारम्भे लेपः शस्तो भगन्दरे ॥२॥
पीड़कानामपक्कानामपतर्पणपूर्वकम् ।
कर्म कुर्य्याद्विरेकान्तं भिन्नानां वक्ष्यते क्रियाम् ॥३॥
एषणीपाटनं क्षारवह्निदाहादिकं क्रमम् ।
विधाय व्रणवत् कार्य्यं यथादोषं यथाक्रमम् ॥४॥
त्रिवृत्तिलानागदन्तीमञ्जिष्ठा सह सर्पिषा ।
उत्सादनं भवेदेतत् सैन्धवक्षौद्रसंयुतम् ॥५॥
रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठानिम्बपल्लवाः ।
त्रिवृत्तेजोवतीदन्तीकल्को नाड़ीव्रणापहः ॥६॥
कुष्ठं त्रिवृत्तिलादन्तीमागध्यः सैन्धवं मधु ।
रजनीत्रिफलातुत्थं हितं व्रणविशोधनम् ॥७॥

स्नुहार्कदुग्धदार्वीभिर्वर्त्तिं कृत्वा विचक्षणः।
भगन्दरगतिं ज्ञात्वा पूरयेत्तां प्रयत्नतः॥८॥
एषा सर्वशरीरस्थां नाडीं हन्यान्न संशयः॥९॥

तिलाभयालोध्रमरिष्टपत्रं
निशावचालोध्रमगारधूमः।
भगन्दरे नाड्युपदंशयोश्च
दुष्टव्रणे शोधनरोपणोऽयम्॥१०॥

खरास्रपक्वभूरोगचूर्णलेपो भगन्दरम्।
हन्ति दन्त्यग्न्यतिविषालेपस्तद्वच्छुनोऽस्थि वा॥११॥
त्रिफलारससंयुक्तं विड़ालास्थिप्रलेपनम्।
भगन्दरं निहन्त्याशु दुष्टव्रणहरं परम्॥१२॥
त्रिफलापुरकृष्णानां त्रिपञ्चैकांशयोजिता।
गुड़िकाशोथगुल्मार्शोभगन्दरवतां हिता॥१३॥

नवकार्षिको गुग्गुलुः।

त्रिकटुत्रिफलामुस्तविड़ङ्गामृतचित्रकम्।
शठ्येलापिप्पलीमूलं हबुषासुरदारु च॥१४॥
तुम्बुरुपुष्करं चव्यं विशालारजनीद्वयम्।
विड़ं सौवर्चलं क्षारौ सैन्धवं गजपिप्पली॥१५॥
यावन्त्येतानि चूर्णानि तावद्‌द्विगुणगुग्गुलुः।
कोलप्रमाणां गुड़िकां भक्षयेन्मधुना सह॥१६॥
कासश्वासं तथा शोथमर्शांसि सभगन्दरम्।
हृच्छूलं पार्श्वशूलञ्च कुक्षिवस्तिगुदेरुजम्॥१७॥
अश्मरीं मूत्रकृच्छ्रञ्च अन्त्रवृद्धिं तथा क्रिमीन्।
चिरज्वरोपसृष्टानां क्षयोपहतचेतसाम्॥१८॥

आनाहञ्च तथोन्मादं कुष्ठानि चोदराणि च।
नाड़ीदुष्टव्रणान् सर्वान् प्रमेहं श्लीपदं तथा।
सप्तविंशतिको ह्येष सर्वरोगनिसूदनः॥१९॥

सप्तविंशतिको गुग्गुलुः।

जम्बूकस्य च मांसानि भक्षयेद् व्यञ्जनादिभिः।
अजीर्णवर्जी मासेन मुच्यते ना भगन्दरात्॥२०॥
पञ्चतिक्तं घृतं शस्तं पञ्चतिक्तश्च गुग्गुलुः।
न्यग्रोधादिगणो यस्तु हितः शोधनरोपणः॥२१॥
तैलं घृतं वा तत्पक्वं भगन्दरविनाशनम्।
चित्रकार्कौ त्रिवृत्पाठे मलपूहयमारकौ॥२२॥
सुधां वचां लाङ्गलिकीं हरितालं सुवर्चिकाम्।
ज्योतिष्मतीञ्च संयोज्य तैलं धीरो विपाचयेत्॥२३॥
एतद्विष्यन्दनं नाम तैलं दद्याद्भगन्दरे।
शोधनं रोपणञ्चैव सवर्णकरणन्तथा॥२४॥

विष्यन्दनं तैलम्।

करवीरनिशादन्तीलाङ्गलीलवणाग्निभिः।
मातुलुङ्गार्कवत्साह्वैः पचेत् तैलं भगन्दरे॥२५॥

करवीराद्यं तैलम्।

निशार्कक्षीरसिन्ध्वग्निपुराश्वहनवत्सकैः।
सिद्धमभ्यञ्जने तैलं भगन्दरविनाशनम्॥२६॥

निशाद्यं तैलम्।

व्यायामं मैथुनं युद्धं पृष्ठयानं गुरूणि च।
संवत्सरं परिहरेदुपरूढव्रणो नरः॥२७॥

इति भगन्दरचिकित्सा।

# अथोपदंशाधिकारः।

स्निग्धस्विन्नशरीरस्य ध्वजमध्ये शिराव्यधः।
जलौकःपातनं वा स्यादूर्द्ध्वाधः शोधनं तथा।
पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः॥१॥

पटोलनिम्बत्रिफलागुडूची-
क्वाथं पिबेद्वा खदिराशनाभ्याम्।
सगुग्गुलुं वा त्रिफलायुतं वा
सर्वोपदंशापहरः प्रयोगः॥२॥

प्रयोगत्रयम्।

प्रपौण्डरीकं मधुकं रास्ना कुष्ठं पुनर्नवा।
शरलागुरुभद्राह्वैर्वातिके लेपसेचने॥३॥
गैरिकाञ्जनमञ्जिष्ठामधुकोशीरपद्मकैः।
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं संप्रलेपयेत्॥४॥
निम्बार्जुनाश्वत्थकदम्बशालजम्बूवटोडुम्बरवेतसेषु।
प्रक्षालनालेपघृतानि कुर्य्याच्चूर्णानि पित्तास्रभवोपदंशे॥५॥
त्रिफलायाः कषायेण भृङ्गराजरसेन वा।
व्रणप्रक्षालनं कुर्य्यादुपदंशप्रशान्तये॥६॥
दहेत्कटाहे त्रिफलां समांशां मधुसंयुताम्।
उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम्॥७॥
रसाञ्जनं शिरीषेण पथ्यया वा समन्वितम्।
सक्षौद्रं वा प्रलेपेन सर्वलिङ्गगदापहम्॥८॥
बब्बोलदलचूर्णेन दाडिमत्वग्भवेन वा।
गुण्डनं नृस्थिचूर्णेन उपदंशहरं परम्॥९॥

लेपः पूगफलेनाश्वमारमूलेन वा तथा ।
सेवेन्नित्यं यवान्नञ्च पानीयं कौपमेव च ॥१०॥
जयाजात्यश्वमारार्कसम्याकानां दलैः पृथक् ।
कृतं प्रचालने क्वाथं मेढ्रपाके प्रयोजयेत् ॥११॥
भूनिम्बनिम्बत्रिफलापटोलकरञ्जजातीखदिराशनानाम् ।
सतोयकल्कैर्घृतमाशु पक्वं सर्वोपदंशापहरं प्रदिष्टम् ॥१२॥

भूनिम्बाद्यं घृतम् ।

करञ्जनिम्बार्जुनशालजम्बूवटादिभिः कल्ककषायसिद्धम् ।
सर्पिर्निहन्यादुपदंशदोषं सदाहपाकं स्रुतिरागयुक्तम् ॥१३॥

करञ्जाद्यं घृतम् ।

आगारधूमरजनीसुराकिट्टञ्च तैस्त्रिभिः ।
भागोत्तरैः पचेत्तैलं कण्डूशोथरुजापहम् ।
शोधनं रोपणञ्चैव सवर्णकरणं तथा ॥१४॥

आगारधूमाद्यं तैलम् ।

अर्शसां छिन्नदग्धानां क्रिया कार्य्योपदंशवत् ।१५॥

इत्युपदंशचिकित्सा ।

## अथ शूकदोषाधिकारः ।

हितञ्च सर्पिषः पानं पथ्यञ्चापि विरेचनम् ।
हितः शोणितमोक्षश्च यच्चापि लघुभोजनम् ॥१॥
सर्षपीं लिखितां सूक्ष्मैः कषायैरवचूर्णयेत् ।
तैरेवाभ्यञ्जनं तैलं साधयेद् व्रणरोपणम् ॥२॥
क्रियेयमधिमन्थेऽपि रक्तं स्राव्यं तथोभयोः ।
अष्ठीलायां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ॥३॥

कुम्भिकायां हरेद्रक्तं पक्वायां शोधिते व्रणे।
तिन्दुकत्रिफलालोध्रैर्लेपस्तैलञ्च रोपणम् ॥४॥
अलज्यां हृतरक्तायामयमेव क्रियाक्रमः।
स्वेदयेद् ग्रथितं स्निग्धं नाड़ीस्वेदेन बुद्धिमान् ॥५॥
सुखोष्णैरुपनाहैश्च सस्निग्धैरुपनाहयेत्।
उत्तमाख्यान्तु पिड़कां संछिद्य बड़िशोद्धृताम् ॥६॥
कल्कैश्चूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत्।
क्रमः पित्तविसर्पोक्तः पुष्करीमूढ़योर्हितः ॥७॥
त्वक्पाके स्पर्शहान्याञ्च सेचयेन्मृदितं पुनः।
बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत् ॥८॥
रसक्रिया विधातव्या लिखिते शतपोलके।
पृथक्पर्ण्यादिसिद्धञ्च तैलं देयमनन्तरम् ॥९॥
पित्तविद्रधिवच्चापि क्रिया शोणितजेऽर्बुदे।
कषायकल्कसर्पींषि तैलं चूर्णं रसक्रियाम् ॥१०॥
शोधने रोपणे चैव वीक्ष्य वीक्ष्यावतारयेत्।
अर्बुदं मांसपाकञ्च विद्रधिं तिलकालकम्।
प्रत्याख्याय प्रकुर्वीत भिषक् तेषां प्रतिक्रियाम् ॥११॥

इति शूकदोषचिकित्सा।

## अथ भग्नाधिकारः।

आदौ भग्नं विदित्वा तु सेचयेच्छीतलाम्बुना।
पङ्केनालेपनं कार्य्यं बन्धनञ्च कुशान्वितम्।
सुश्रुतोक्तञ्च भग्नेषु वीक्ष्य बन्धादिमाचरेत् ॥१॥
अवनामितमुन्नम्येदुन्नतञ्चावनामयेत्।

आञ्छेदतिचिप्तमधो गतञ्चोपरि वर्त्तयेत् ॥२॥
आलेपनार्थं मञ्जिष्ठामधुकं चाम्लपेषितम् ।
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च लेपनम् ॥ ३ ॥
सप्तरात्रात् सप्तरात्रात् सौम्येष्वृतुषु मोक्षणम् ।
कर्त्तव्यं स्यात्त्रिरात्राच्च तथाग्नेयेषु जानता ॥४॥
काले च साम्यशीतोष्णे पञ्चरात्राद्विमोचयेत् ।
न्यग्रोधादिकषायञ्च सुशीतं परिषेचने ॥५॥
पञ्चमूलीविपक्वन्तु क्षीरं दद्यात् सवेदने ।
सुखोष्णमवतार्य्यं वा चक्रतैलं विजानता ॥६॥
मांसं मांसरसः सर्पिः क्षीरं यूषः सतीलजः ।
बृंहणं चान्नपानञ्च देयं भग्ने विजानता ॥७॥
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ।
शीतलं द्राक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ॥८॥
सघृतेनास्थिसंहारं लाक्षागोधूममर्जुनम् ।
सन्धियुक्तेऽस्थिभग्ने च पिबेत् क्षीरेण मानवः ॥९॥
रसोनमधुलाक्षाज्यसिताकल्कं समश्नताम् ।
छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥१०॥
पीतवराटिकाचूर्णं द्विगुञ्जं वा त्रिगुञ्जकम् ।
अपक्वक्षीरपीतं स्यादस्थिभग्नप्ररोहणम् ॥११॥

क्षीरं सलाक्षामधुकं ससर्पिः
स्याज्जीवनीयञ्च सुखावहञ्च ।
भग्नः पिबेत्त्वक्पयसार्जुनस्य
गोधूमचूर्णं सघृतेन वाथ ॥१२॥
लाक्षास्थिसंहृत्ककुभाश्वगन्धा-

स्वूर्णीकृता नागबलापुरञ्च।
संभग्नयुक्तास्थिरुजं निहन्या-
दङ्गानि कुर्य्यात् कुलिशोपमानि ॥१३॥
अत्रान्यतोऽपि दृष्टत्वात् तुल्यश्चूर्णेन गुग्गुलुः ॥१४॥

लाक्षागुग्गुलुः।

आभाफलत्रिकैर्व्योषैः सर्व्वैरेभिः समीकृतैः।
तुल्यो गुग्गुलुरायोज्यो भग्नसन्धिप्रसाधकः ॥१५॥

आभागुग्गुलुः।

सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तमैः।
प्रतिसार्य्य कषायैश्च शेषं भग्नवदाचरेत् ॥१६॥
भग्नं नैति यथापाकं प्रयतेत तथा भिषक्।
वातव्याधिविनिर्दिष्टान् स्नेहानत्र प्रयोजयेत् ॥१७॥
रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले।
दिवादिवैवं संशोष्य क्षीरेण परिभावयेत् ॥१८॥
तृतीयं सप्तरात्रञ्च भावयेन्मधुकाम्बुना।
ततः क्षीरं पुनः पीतान् सुशुष्कांश्चूर्णयेद् भिषक् ॥१९॥
काकोल्यादिश्वदंष्ट्रा च मञ्जिष्ठां शारिवां तथा।
कुष्ठं सर्जरसं मांसीं सुरदारु सचन्दनम् ॥२०॥
शतपुष्पाञ्च संचूर्ण्य तिलचूर्णेन योजयेत्।
पीड़नार्थञ्च कर्त्तव्यं सर्वगन्धैः शृतं पयः ॥२१॥
चतुर्गुणेन पयसा तत् तैलं विपचेत् पुनः।
एलामंशुमतीं पत्रं जीरकं तगरं तथा ॥२२॥
लोध्रं प्रपौण्डरीकञ्च तथा कालानुशारिवाम्।

ग्रैलेयकं चोरपुष्पामनन्तां समधूलिकाम् ॥२३॥
पिष्ट्वा शृङ्गाटकञ्चैव प्रागुक्तान्यौषधानि च ।
एभिस्तद्विपचेत् तैलं शास्त्रविन्मृदुनाग्निना ॥२४॥
एतत् तैलं सदा पथ्यं भग्नानां सर्वकर्मसु ।
आक्षेपके पक्षाघाते चाङ्गशोषे तथार्दिते ॥२५॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे ।
बाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥२६॥
पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु योजयेत् ।
ग्रीवास्कन्धोरसां वृद्धिरनेनैवोपजायते ॥२७॥
मुखञ्च पद्मप्रतिमं सुसुगन्धिसमीरणम् ।
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत् ॥२८॥
राजार्हमेतत् कर्त्तव्यं राज्ञामेव विचक्षणैः ।
तिलचूर्णचतुर्थांशं मिलितं चूर्णमिष्यते ॥२९॥

गन्धतैलम् ।

लवणं कटुकं क्षारमम्लं मैथुनमातपम् ।
व्यायामञ्च न सेवेत भग्नो रूक्षान्नमेव च ॥३०॥

इति भग्नचिकित्सा ।

## अथ कुष्ठाधिकारः ।

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं चाग्र्यम् ॥१॥
प्रच्छनमल्पे कुष्ठे महति च शस्तं शिराव्यधनम् ।
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान् ॥२॥
वचावासापटोलानां निम्बस्य फलिनीत्वचः ।

कषायो मधुना पीतो वान्तिकृन्मदनान्वितः ॥३॥

पञ्चकषायः।

विरेचनन्तु कर्त्तव्यं त्रिवृद्दन्तीफलत्रिकैः ॥४॥

ये लेपाः कुष्ठानां प्रयुज्यन्ते निर्गतास्रदोषाणाम्।
संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम् ॥५॥

मनःशिलाले मरिचानि तैल-
मार्कं पयः कुष्ठहरः प्रदेहः।
करञ्जवीजैडगजः सकुष्ठो
गोमूत्रपिष्टश्च वरः प्रदेहः ॥६॥

पत्राणि पिष्ट्वा चतुरङ्गुलस्य
तक्रेण पर्णान्यथ काकमाच्याः।
तैलाक्तगात्रस्य नरस्य कुष्ठा-
न्युद्वर्त्तयेदश्वहनच्छदैश्च ॥७॥

आरग्वधः सैडगजः करञ्जो
वासागुडूचीमदनं हरिद्रे।
श्र्याह्वः सुराह्वः खदिरो धवश्च
निम्बो विडङ्गं करवीरकश्च ॥८॥

ग्रन्थिश्च भौर्जो लशुनः शिरीषः
सलोमशो गुग्गुलुकृष्णगन्धे।
फणिज्झको वत्सकसप्तपर्णौ
पीलूनि कुष्ठं सुमनः प्रवालः ॥९॥

वचाहरेणुत्रिवृतानि कुम्भी
भल्लातकं गैरिकमञ्जनञ्च।
मनःशिलाले गृहधूम एला-

काशीशलोध्रार्जुनमुस्तसर्ज्जाः ॥१०॥
इत्यर्द्धरूपैर्विहिताः षडेते
गोपित्तपीताः पुनरेव पिष्टाः ।
सिद्धाः परं सर्षपतैलयुक्ता-
श्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥११॥
कुष्ठानि कृच्छ्राणि नवं किलासं
सुरेन्द्रलुप्तं किटिमं सदद्रुम् ।
भगन्दरार्शांस्यपचीं सपामां
हन्युः प्रयुक्ता अचिरान्नराणाम् ॥१२॥
मनःशिलात्वक् कुटजात् सकुष्ठात्
सलोमशः सैडगजः करञ्जः ।
ग्रन्थिश्च भौर्जः करवीरमूलं
चूर्णानि साध्यानि तुषोदकेन ॥१३॥
पलाशनिर्दाहरसेन वापि
कर्षोद्धृतान्याढ़कसम्मितेन ।
दार्व्वीप्रलेपं प्रवदन्ति लेप-
मेतत् परं कुष्ठविनाशनाय १४॥
कुष्ठं हरिद्रे सुरसं पटोलं
निम्बाश्वगन्धे सुरदारुशिग्रु ।
ससर्षपं तुम्बुरुधान्यवन्य-
चण्डाश्च दूर्वाञ्च समानि कुर्य्यात् ॥१५॥
तैस्तक्रयुक्तैः प्रथमं शरीरं
तैलाक्तमुद्वर्त्तयितुं यतेत ।
तथास्य कण्डुः पिड़काः सकोठाः

कुष्ठानि शोघाश्च शमं प्रयान्ति ॥१६॥

कुष्ठाद्यम् ।

धात्र्यक्षपथ्याक्रिमिशत्रुवह्नि-
भल्लातकावल्गुजलौहभृङ्गैः ।
भागाभिवृद्धैस्तिलतैलमिश्रैः
सर्वाणि कुष्ठानि निहन्ति लेपः ॥१७॥

विड़ङ्गसैन्धवशिवाशशिरेखासर्षपकरञ्जरजनीभिः ।
गोजलपिष्टो लेपः कुष्ठहरो दिवसनाथसमः ॥१८॥

विड़ङ्गैड़गजाकुष्ठनिशासिन्धूत्थसर्षपैः ।
धान्याम्लपिष्टैर्लेपोऽयं दद्रुकुष्ठरुजापहः ॥१९॥

दूर्वाभयासैन्धवचक्रमर्दकुठेरकाः काञ्जिकतक्रपिष्टाः ।
त्रिभिः प्रलेपैरतिबद्धमूलं दद्रुञ्च कुष्ठञ्च निवारयन्ति ॥२०॥

तुल्यो रसः सालतरोस्तुषेण सचक्रमर्द्दोऽप्यभयाविमिश्रः ।
पानीयभक्तेन तदाम्बुपिष्टो लेपः कृतो दद्रुगजेन्द्रसिंहः ॥२१॥

प्रपुन्नाड़स्य वीजानि धात्रीसर्जरसः स्नुही ।
सौवीरपिष्टं दद्रूणामेतदुद्वर्त्तनं परम् ॥२२॥

चक्रमर्दकवीजानि करञ्जञ्च समांशकम् ।
स्तोकं सुदर्शनामूलं दद्रुकुष्ठविनाशनम् ॥२३॥

लेपनाद्भक्षणाच्चैव त्वणकं दद्रुनाशनम् ।
यूथीपुन्नागमूलञ्च लेपात् काञ्जिकपेषितम् ॥२४॥

कासमर्दकमूलञ्च सौवीरेण च पेषितम् ।
दद्रुकिटिमकुष्ठानि जयेदेतत्प्रलेपनात् ॥२५॥

शिखरिरसेन सुपिष्टं मूलकवीजं प्रलेपतः सिध्म ।
क्षारेण वा कदल्या रजनीमिश्रेण नाशयति ॥२६॥

गन्धपाषाणचूर्णेन यवक्षारेण पेषितम् ।
सिध्मनाशं व्रजत्याशु कटुतैलयुतेन वा ॥२७॥
कासमर्दकवीजानि मूलकानां तथैव च ।
गन्धपाषाणमिश्राणि सिध्मानां परमौषधम् ॥२८॥

धात्रीरसः सर्जरसः सपाक्यः सौवीरपिष्टश्च तथा युतश्च ।
भवन्ति सिध्मानि यथा न भूयस्तथैवमुद्वर्त्तनकं करोति ॥२९॥

कुष्ठं मूलकवीजं प्रियङ्ग्वः सर्षपास्तथा रजनी ।
एतत् केशरकुष्ठं निहन्ति बहुवार्षिकं सिध्म ॥३०॥
नीलकुरण्टकपत्रं स्वरसेनालिप्य गात्रमतिबहुशः ।
लिम्पेत् मूलकवीजैस्तक्रेण सिध्मनाशाय ॥३१॥
चक्राह्वयं स्नुहीक्षीरभावितं मूत्रसंयुतम् ।
रवितप्तं हि किञ्चित् तु लेपनात् किटिमापहम् ॥३२॥
आरग्वधस्य पत्राणि आरनालेन पेषयेत् ।
दद्रुकिटिमकुष्ठानि हन्ति सिध्मानमेव च ॥३३॥

वीजानि वा मूलकसर्षपाणां
लाक्षारजन्यौ प्रपुणाडवीजम् ।
श्रीवेष्टकव्योषविडङ्गकुष्ठं
पिष्ट्वा च मूत्रेण तु लेपनं स्यात् ॥३४॥
दद्रूणि सिध्मं किटिमानि पामां
कापालकुष्ठं विषमञ्च हन्यात् ॥३५॥

एडगजकुष्ठसैन्धवसौवीरसर्षपैः क्रिमिघ्नैश्च ।
क्रिमिसिध्मदद्रुमण्डलकुष्ठानां नाशनो लेपः ॥३६॥
स्नुक्काण्डे सर्षपात् कल्कः कुकूलानलपाचितः ।
लेपाद्विचर्च्चिकां हन्ति रागवेग इव त्रपाम् ॥३७॥

स्नुक्काण्डे शुषिरे दग्ध्वा गृहधूमं ससैन्धवम्।
अन्तर्धूमं तैलयुक्तं लेपात् हन्ति विचर्च्चिकाम्॥३८॥
एडगजातिलसर्षपकुष्ठमागधिकालवणत्रयमस्तु।
पूतिकृतं दिवसत्रयमेतद्धन्ति विचर्च्चिकादद्रुसकुष्ठम्॥३९॥
उन्मत्तकस्य बीजेन माणकक्षारवारिणा।
कटुतैलं विपक्तव्यं शीघ्रं हन्यादिपादिकाम्॥४०॥
नारिकेलोदके न्यस्तस्तण्डुलः पूतितां गतः।
लेपादिपादिकां हन्ति चिरकालानुबन्धिनीम्॥४१॥
सर्जरसः सिन्धुसम्भवगुडमधुमहिषाक्षगैरिकं सघृतम्।
सिक्थकमेतत्पक्वं पादस्फुटनापहं सिद्धम्॥४२॥
अवल्गुजं कासमर्दं चक्रमर्दं निशायुतम्।
माणिमन्थेन तुल्यांशं मस्तुकाञ्जिकपेषितम्॥४३॥
कच्छुं कण्डूं जयत्युग्रां सिद्ध एष प्रयोगराट्।
कोमलं सिंहास्यदलं सनिशं सुरभिजलेन संपिष्टम्॥४४॥
दिवसत्रयेण नियतं क्षपयति कच्छुं विलेपनतः।
हरिद्राकल्कसंयुक्तं गोमूत्रस्य पलद्वयम्॥४५॥
पिबेन्नरः कामचारी कच्छुपामाविनाशनम्।
शोथपाण्ड्वामयहरी गुल्ममेहकफापहा।
कच्छुपामाहरी चैव पथ्यागोमूत्रसाधिता॥४६॥

पिबति सकटुतैलं गन्धपाषाणचूर्णं
रविकिरणसुतप्तं पामलो यः पलार्द्धम्।
त्रिदिनतदनुषिक्तः क्षीरभोजी च शीघ्रं
भवति कनकदीप्त्या कामयुक्तो मनुष्यः॥४७॥

निशासुधारग्वधकाकमाची-

पत्रैः सदार्वीप्रपुन्नाड़बीजैः ।
तक्रेण पिष्टैः कटुतैलमिश्रैः
पामादिषूद्वर्त्तनमेतदिष्टम् ॥४८॥

सिन्दूरमरिचचूर्णं महिषीनवनीतसंयुतं बहुशः ।
लेपाद्विनिहन्ति पामां तैलं करवीरसिद्धं वा ॥४९॥

मांसीचन्दनसम्पाककरञ्जारिष्टसर्षपम् ।
शटीकुटजदार्व्यब्दं हन्ति कुष्ठमयं गणः ॥५०॥

भल्लातकद्वीपिसुधार्कमूलं
गुञ्जाफलं त्र्यूषणशङ्खचूर्णम् ।
तुत्थं सकुष्ठं लवणानि पञ्च
क्षारद्वयं लाङ्गलिकाञ्च पक्का ॥५१॥

स्नुह्यर्कदुग्धे घनमायसस्थं
शलाकयातं विदधीत लेपम् ।
कुष्ठे किलासे तिलकालके च
अशेषदुर्नामसु चर्मकीले ॥५२॥

विषवरुणहरिद्राचित्रकागारधूम-
मनलमरिचदूर्वाक्षीरमर्कस्नुहाभ्याम् ।
दहति पतितमात्रात् कुष्ठजातीरशेषाः
कुलिशमिव मघोनाञ्छकरहस्ताद्विमुक्तम् ॥५३॥

शशाङ्कलेखा सविडङ्गसारा
सपिप्पलीका सहुताशमूला ।
सायोमला सामलका सतैला
सर्वाणि कुष्ठान्युपहन्ति लीढ़ा ॥५४॥

तीव्रेण कुष्ठेन परीतदेहो

यः सोमराजीं नियमेन खादेत् ।
संवत्सरं कृष्णतिलद्वितीयां
स सोमराजीं वपुषातिशेते ॥५५॥
घर्मसेवी कदुष्णेन वारिणा वागुजीं पिबेत् ।
क्षीरभोजी त्रिसप्ताहात् कुष्ठरोगाद्विमुच्यते ॥५६॥
एकस्तिलस्य भागो द्वौ सोमराज्यास्तथैव च ।
भक्ष्यमाणमिदं प्रातर्गुह्यदद्रुविनाशनम् ॥५७॥
अवल्गुजाद्बीजकर्षं पीत्वा कोष्णेन वारिणा ।
भोजनं सर्पिषा कार्य्यं सर्वकुष्ठप्रणाशनम् ॥५८॥
त्रिफलापटोलरजनीमञ्जिष्ठारोहिणीवचानिम्बैः ।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम् ॥५९॥

नवकषायः ।

छिन्नायाः स्वरसो वापि सेव्यमानो यथाबलम् ।
जीर्णे घृतेन भुञ्जीत स्वल्पं यूषोदकेन वा ।
अतिपूतिशरीरोऽपि दिव्यरूपो भवेन्नरः ॥६०॥
पटोलखदिरारिष्टत्रिफलाकृष्णवेत्रजम् ।
तिक्ताशनः पिबेत् क्वाथं कुष्ठी कुष्ठं व्यपोहति ॥६१॥
तिलाज्यत्रिफलाक्षौद्रव्योषभल्लातशर्कराः ।
वृष्याः सप्त समोमेध्याः कुष्ठघ्ना कामचारिणः ॥६२॥
विडङ्गत्रिफलाकृष्णाचूर्णं लीढं समाक्षिकम् ।
हन्ति कुष्ठं क्रिमीन् मेहान् नाडीव्रणभगन्दरान् ॥६३॥
इन्द्राशनं समादाय प्रशस्तेऽहनि चोद्धृतम् ।
तच्चूर्णं मधुसर्पिभ्यां लिह्येत् क्षीरघृताशनः ॥६४॥
हत्वा च सर्वकुष्ठानि जीवेद्वर्षशतद्वयम् ॥६५॥

पत्रैः सदार्व्वीप्रपुनाड़बीजैः ।
तक्रेण पिष्टैः कटुतैलमिश्रैः
पामादिषूद्वर्त्तनमेतदिष्टम् ॥४८॥
सिन्दूरमरिचचूर्णं महिषीनवनीतसंयुतं बहुशः ।
लेपाद्विनिहन्ति पामां तैलं करवीरसिद्धं वा ॥४९॥
मांसीचन्दनसम्पाककरञ्जारिष्टसर्षपम् ।
शटीकुटजदार्व्वब्दं हन्ति कुष्ठमयं गणः ॥५०॥
भल्लातकद्वीपिसुधार्कमूलं
गुञ्जाफलं त्र्यूषणशङ्खचूर्णम् ।
तुत्थं सकुष्ठं लवणानि पञ्च
क्षारद्वयं लाङ्गलिकाञ्च पक्का ॥५१॥
स्नुह्यर्कदुग्धे घनमायसस्थं
शलाकयातं विदधीत लेपम् ।
कुष्ठे किलासे तिलकालके च
अशेषदुर्नामसु चर्मकीले ॥५२॥
विषवरुणहरिद्राचित्रकागारधूम-
मनलमरिचदूर्व्वाक्षीरमर्कस्नुहाभ्याम् ।
दहति पतितमात्रात् कुष्ठजातीरशेषाः
कुलिशमिव मघोनो हस्तादिमुक्तम् ॥५३॥
शशाङ्कलेखा सविडङ्गसारा
सपिप्पलीका सहुताशमूला ।
सायोमला सामलका सतैला
सर्व्वाणि कुष्ठान्युपहन्ति लीढ़ा ॥५४॥
तीव्रेण कुष्ठेन परीतदेहो

यः सोमराजीं नियमेन खादेत् ।
संवत्सरं कृष्णतिलद्वितीयां
स सोमराजीं वपुषातिशेते ॥५५॥
चर्मसेवी कदुष्णेन वारिणा वागुजीं पिबेत् ।
क्षीरभोजी त्रिसप्ताहात् कुष्ठरोगाद्विमुच्यते ॥५६॥
एकस्तिलस्य भागो द्वौ सोमराज्यास्तथैव च ।
भक्ष्यमाणमिदं प्रातर्गुह्यदद्रुविनाशनम् ॥५७॥
अवल्गुजाद्वीजकर्षं पीत्वा कोष्णेन वारिणा ।
भोजनं सर्पिषा कार्य्यं सर्वकुष्ठप्रणाशनम् ॥५८॥
त्रिफलापटोलरजनीमञ्जिष्ठारोहिणीवचानिम्बैः ।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम् ॥५९॥

नवकषायः ।

छिन्नायाः स्वरसो वापि सेव्यमानो यथाबलम् ।
जीर्णे घृतेन भुञ्जीत स्वल्पं यूषोदकेन वा ।
अतिपूतिशरीरोऽपि दिव्यरूपो भवेन्नरः ॥६०॥
पटोलखदिरारिष्टत्रिफलाकृष्णवेत्रजम् ।
तिक्ताशनः पिबेत् क्वाथं कुष्ठी कुष्ठं व्यपोहति ॥६१॥
तिलाज्यत्रिफलाक्षौद्रव्योषभल्लातशर्कराः ।
वृष्याः सप्त समोमेध्याः कुष्ठघ्ना कामचारिणः ॥६२॥
विडङ्गत्रिफलाकृष्णाचूर्णं लीढं समाक्षिकम् ।
हन्ति कुष्ठं क्रिमीन् मेहान् नाड़ीव्रणभगन्दरान् ॥६३॥
इन्द्राशनं समादाय प्रशस्तेऽहनि चोद्धृतम् ।
तच्चूर्णं मधुसर्पिर्भ्यां लिहेत् क्षीरघृताशनः ॥६४॥
हत्वा च सर्वकुष्ठानि जीवेद्वर्षशतद्वयम् ॥६५॥

यः खादेदभयारिष्टं मरिचामलकानि वा।
स जयेत् सर्वकुष्ठानि मासादूर्द्धं न संशयः ॥६६॥
दह्यमानाच्युतः कुम्भे मूलगो खदिराद्रसः।
साज्यधात्रीरसक्षौद्रो हन्यात् कुष्ठं रसायनम् ॥६७॥
वयस्थेड़गजाकुष्ठलक्षाभिर्गुड़िका कृता।
वास्तमूत्रेण संपिष्टा लेपाच्छित्रविनाशिनी ॥६८॥
पूतीकार्कस्नुक्नरेन्द्रद्रुमाणां
मूत्रे पिष्टाः पल्लवाः सौमनाश्च
लेपात् श्वित्रं घ्नन्ति दद्रुव्रणांश्च
कुष्ठान्यर्शांसि भग्ननाड़ीव्रणांश्च ॥६९॥
गजचित्रव्याघ्रचर्ममसीतैलविलेपनात्।
श्वित्रं नाशं व्रजेत् किं वा पूतिकीटविलेपनात् ॥७०॥
कुड़वोऽवल्गुजवीजाद्धरितालचतुर्थभागसंमिश्रः।
मूत्रेण गवां पिष्टः सवर्णकरणः परः श्वित्रे ॥७१॥
धात्रीखदिरयोः क्वाथं पीत्वा वल्गुजसंयुतम्।
शङ्खेन्दुधवलं श्वित्रं तूर्णं हन्ति न संशयः ॥७२॥
क्षारेषु दग्धे गजलण्डजे च गजस्य मूत्रेण बहु स्रुते च।
द्रोणप्रमाणं दशभागयुक्तं दत्त्वा पचेद्वीजमवल्गुजस्य ॥७३॥
एतद्यदा चिक्कणतामुपैति
तदा सुसिद्धां गुड़िकां प्रयुञ्ज्यात्।
श्वित्रं विलिम्पेदथ तेन घृष्टं
तदा व्रजत्याशु सवर्णभावम् ॥७४॥
श्वेतजयन्तीमूलं पिष्टं पीतञ्च गव्यपयसैव।
श्वित्रं निहन्ति नियतं रविवारे वैद्यनाथस्याज्ञा ॥७५॥

पुष्पकाले तु पुष्पाणि फलकाले फलानि च।
संचूर्ण्य पिचुमर्दस्य त्वङ्मूलानि दलानि च ॥७६॥
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत्।
त्रिफलात्र्यूषणं ब्राह्मी श्वदंष्ट्रारुष्करामिकाः ॥७७॥
विड़ङ्गसारवाराहीलौहचूर्णामृताः समाः।
हरिद्राद्वयावल्गुजव्याधिघाताः सशर्कराः ॥७८॥
कुष्ठेन्द्रयवपाठाश्च कृत्वा चूर्णं सुसंयुतम्।
खदिरासननिम्बानां घनक्काथेन भावयेत् ॥७९॥
सप्तधा पञ्चनिम्बन्तु मार्कवस्वरसेन तु।
स्निग्धशुद्धतनुर्धीमान् योजयेच्च शुभे दिने ॥८०॥
मधुना तिक्तहविषाखदिरासनवारिणा।
लेह्यमुष्णाम्बुना वापि कोलवृद्धा पलं पिबेत् ॥८१॥
जीर्णे च भोजनं कार्य्यं स्निग्धं लघु हितञ्च यत् ॥८२॥

विचर्च्चिकोडुम्बरपुण्डरीक-
कपालदद्रुकिटिमालसादीन्।
शतारुविस्फोटविसर्पपामां
कफप्रकोपं त्रिविधं किलासम् ॥८३॥
भगन्दरश्लीपदवातरक्तं
जाताम्ध्यनाड़ीव्रणशीर्षरोगान्।
सर्वान् प्रमेहान् प्रदरांश्च सर्वान्
दंष्ट्राविषं मूलविषं निहन्ति ॥ ८४ ॥
स्थूलोदरः सिंहकृशोदरश्च
सुश्लिष्टसन्धिर्मधुनोपयोगात्।
समोपयोगादपि ये दशन्ति

सर्पादयो यान्ति विनाशमाशु ॥८५॥
जीवेच्चिरं व्याधिजराविमुक्तः
शुभेरतश्चन्द्रसमानकान्तिः ॥८६॥

पञ्चनिम्बः ।

चित्रकं त्रिफलाव्योषमजाजीं कारवीं वचाम् ।
सैन्धवातिविषे कुष्ठं चव्यैलायावशूकजम् ॥८७॥
विडङ्गान्यजमोदाञ्च मुस्तान्यमरदारु च ।
यावन्त्येतानि सर्वाणि तावन्मात्रन्तु गुग्गुलुम् ॥८८॥
संक्षुद्य सर्पिषा सार्द्धं गुड़िकां कारयेद् भिषक् ।
प्रातर्भोजनकाले च भक्षयेत् तु यथाबलम् ॥८९॥
हन्त्यष्टादशकुष्ठानि क्रिमीन् दुष्टव्रणानि च ।
ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान् ॥९०॥
गृध्रसीमथ भग्नञ्च गुल्मञ्चाशु नियच्छति ।
व्याधीन् कोष्ठगतांश्चान्यान् जयेद्विष्णुरिवासुरान् ॥९१॥

एकविंशतिको गुग्गुलुः ।

पञ्च भल्लातकांश्छित्त्वा साधयेद्विधिवज्जले ।
कषायं तं पिबेच्छीतं घृतेनाक्तोष्ठतालुकः ॥९२॥
पञ्चवृद्ध्या पिबेद्यावत् सप्ततिं ह्रासयेत् ततः ।
जीर्णेऽद्यादोदनं शीतं घृतं क्षीरोपसंहितम् ॥९३॥
एतद्रसायनं मेध्यं वलीपलितनाशनम् ।
कुष्ठार्शःक्रिमिदोषघ्नं दुष्टशुक्रविनाशनम् ॥९४॥
तैलं भल्लातकानाञ्च पिबेन्मासं यथाबलम् ।
सर्वोपतापनिर्मुक्तो जीवेद्वर्षशतं दृढ़म् ॥९५॥
प्रलेपोद्वर्त्तनस्नानपानभोजनकर्मणि ।

शीलितं खादिरं वारि सर्वत्वग्दोषनाशनम् ॥९६॥

निम्बं पटोलं दार्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम्।
कुर्य्यादर्द्धपलांशान् पर्प्पटकं त्रायमाणाञ्च ॥९७॥
सलिलाढ़कसिद्धानां रसेऽष्टभागस्थिते क्षिपेत् पूते।
चन्दनकिराततिक्तकमागधित्रायमाणाञ्च ॥९८॥
मुस्तवत्सकवीजं कल्कीकृतमर्द्धकर्षान् भागान्।
नवसर्पिषस्च षट्पलमेतत् सिद्धं घृतं पेयम् ॥९९॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्डामयश्वयथून्।
हन्ति पामाविसर्पपीड़कान् कण्डुमदगन्धसिद्धम् ॥१००॥

तिक्तषट्पलकं घृतम्।

निम्बं पटोलं व्याघ्रीञ्च गुडूचीं वासकं तथा।
कुर्य्याद्दशपलान् भागानेकैकस्य सुकुट्टितान् ॥१०१॥
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम्।
घृतप्रस्थं पचेत् तेन त्रिफलागर्भसंयुतम् ॥१०२॥
पञ्चतिक्तमिदं ख्यातं सर्पिः कुष्ठविनाशनम्।
अशीतिं वातजान् रोगान् चत्वारिंशञ्च पैत्तिकान् ॥१०३
विंशतिं श्लैष्मिकांश्चैव पानादेवापकर्षति।
दुष्टव्रणक्रिमीनर्शः पञ्चकासांश्च नाशयेत् ॥१०४॥

पञ्चतिक्तकं घृतम्।

त्रिफलाद्विनिशावासायासपर्प्पटकूलकान्।
त्रायन्तीकटुकानिम्बान् प्रत्येकं द्विपलोन्मितान् ॥१०५॥
क्वाथयित्वा जलद्रोणे पादशेषेण तेन तु।
घृतप्रस्थं पचेत् कल्कैः पिप्पलीघनचन्दनैः ॥१०६॥
त्रायन्तीशक्रभूनिम्बैस्तत्पीतं तिक्तकं घृतम्।

हन्ति कुष्ठज्वरार्शांसि श्वयथुं ग्रहणीगदम् ।
पाण्डुरोगं विसर्पञ्च क्लीवानामपि शस्यते ॥१०७॥

तिक्तकं घृतम् ।

सप्तच्छदं प्रतिविषां सम्पाकं तिक्तरोहिणीं पाठाम् ।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकम् ॥१०८॥
धन्वायासं सचन्दनमुपकुल्ये पद्मकं रजन्यौ च ।
षड्ग्रन्थां सविशालां शतावरीशारिवे चोभे ॥१०९॥
वत्सकबीजं वासां मूर्वाममृतां किराततिक्तञ्च ।
कल्कान् कुर्य्यान्मतिमान् यष्ट्याह्वं त्रायमाणाञ्च ॥११०॥
कल्कस्तु चतुर्भागो जलमष्टगुणं रसोऽमृतफलानाम् ।
द्विगुणो घृताद्देयस्तत् सर्पिः पाययेत् सिद्धम् ॥१११॥
कुष्ठानि रक्तपित्तं प्रबलान्यर्शांसि रक्तवाहीनि ।
विसर्पमम्लपित्तं वातासृक्पाण्डुरोगञ्च ॥११२॥
विस्फोटकान् सपामानुन्मादकान् कामलां ज्वरं पाण्डुम् ।
हृद्रोगगुल्मपिड़कामसृग्दरं गण्डमालाञ्च ॥११३॥
हन्यादेतत् सद्यः पीतं काले यथाबलं सर्पिः ।
योगशतैरप्यजितान् महाविकारान् महातिक्तकम् ॥११४

महातिक्तकं घृतम् ।

खदिरस्य तुलाः पञ्च शिंशपाशनयोस्तुले ।
तुलार्द्धाः सर्व एवैते करञ्जारिष्टवेतसाः ॥११५॥
पर्पटः कुटजश्चैव वृषः क्रिमिहरस्तथा ।
हरिद्रे कृतमालश्च गुडूची त्रिफला त्रिवृत् ॥११६॥
सप्तपर्णश्च संक्षुण्णो दशद्रोणे च वारिणः ।
अष्टभागावशेषन्तु कषायमवतारयेत् ॥११७॥

धात्रीरसञ्च तुल्यांशं सर्पिषश्चाढ़कं पचेत्।
महातिक्तककल्कैश्च यथोक्तैः पलसम्मितैः॥११८॥
निघ्नन्ति सर्वकुष्ठानि पानाभ्यङ्गनिषेवणात्।
महाखदिरमित्येतत्परं कुष्ठविनाशनम्॥११९॥

महाखदिरकं घृतम्।

निम्बामृतावृषपटोलनिदिग्धिकानाम्
भागान् पृथक् दशपलान् विपचेद्घटेऽपाम्।
अष्टांशशेषितजलेन सुनिःसृतेन
प्रस्थं घृतस्य विपचेत्पिचुभागकल्कैः॥१२०॥
पाठाविडङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरनिशामिषिचव्यकुष्ठैः।
तेजोवतीमरिचवत्सकदीप्यकाग्नि-
रोहिण्यरुष्करवचाकणमूलयुक्तैः॥१२१॥
मञ्जिष्ठयातिविषयावरया यमान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसंख्यैः।
तत् सेवितं विधमतिप्रबलं समीरं
सन्ध्यस्थिमज्जागतमप्यथ कुष्ठमीदृक्॥१२२॥
नाडीव्रणार्बुदभगन्दरगण्डमालां
जत्रूर्ध्वसर्वगतगुल्मगुदोत्थमेहान्।
यक्ष्मारुचिश्वसनपीनसकासशोष-
हृत्पाण्डुरोगगलविद्रधिवातरक्तम्॥१२३॥

पञ्चतिक्तघृतगुग्गुलुः।

वासागुडूचीत्रिफलापटोल-
करञ्जनिम्बाशनकृष्णवेत्रम्।

तत्क्वाथकल्केन घृतं विपक्वं
तद्वज्रकं कुष्ठहरं प्रदिष्टम् ॥१२४॥
विशीर्णकर्णाङ्गुलिहस्तपादः
क्रिम्यर्दितो भिन्नगलोऽपि मर्त्यः ।
पौराणिकीं कान्तिमवाप्य जीवे-
द्व्याहृतो वर्षशतञ्च कुष्ठी ॥१२५॥

वज्रकं घृतम् ।

आरग्वधं धवं कुष्ठं हरितालं मनःशिलाम् ।
रजनीद्वयसंयुक्तं पचेत् तैलं विधानवित् ।
एतेनाभ्यञ्जयेच्छ्वित्री क्षिप्रं श्वित्रं विनश्यति ॥१२६॥

आरग्वधाद्यं तैलम् ।

मञ्जिष्ठारक्तनिशाचक्रमर्दारग्वधपल्लवैः ।
तृणकस्वरसे सिद्धं तैलं कुष्ठहरं कटु ॥१२७॥

तृणकं तैलम् ।

हरिद्रात्रिफलादारुद्वयमारकचित्रकम् ॥१२८॥
सप्तच्छदश्च निम्बत्वक् करञ्जो वालकं नखी ।
कुष्ठमेड़गजावीजं लाङ्गलीगणिकारिका ॥१२९॥
जातीपत्रञ्च दार्वी च हरितालं मनःशिलाः ।
कलिङ्गातिलपत्रञ्च अर्कक्षीरञ्च गुग्गुलुः ॥१३०॥
गुड़त्वक् मरिचञ्चैव कुङ्कुमं ग्रन्थिपर्णकम् ।
सर्जपर्णाशखदिरविड़ङ्गं पिप्पली वचा ॥१३१॥
घनरेणुमृतायष्टिकेशरं ध्यामकं विषम् ।
विल्वकट्फलमञ्जिष्ठावोलस्तुम्बीफलं तथा ॥१३२॥
स्नुहीसम्पाकयोः पत्रं वागुजीवीजमांसिके ।

चलाज्योतिष्मतीमूलं शिरीषो गोमयाद्रसः ॥१३३॥
चन्दने कुष्ठनिर्गुण्डी विशाला मल्लिकाद्वयम् ।
वासाश्वगन्धा ब्राह्मी च श्याह्वं चम्पककट्फलम् ॥१३४॥
एतैः कल्कैः पचेत्तैलं तृणकस्वरसद्रवम् ।
सर्वत्वग्दोषहरणं महातृणकसंज्ञितम् ॥१३५॥

महातृणकं तैलम् ।

सप्तपर्णकरञ्जार्कमालतीकरवीरजम् ।
मूलं स्नुह्याशिरीषाभ्यां चित्रकास्फोतयोरपि ॥१३६॥
करञ्जवीजं त्रिफलां त्रिकटुं रजनीद्वयम् ।
सिद्धार्थकं विडङ्गञ्च प्रपुन्नाडतिलैः सह ॥१३७॥
मूत्रपिष्टैः पचेत्तैलमेभिः कुष्ठविनाशनम् ।
अभ्यङ्गाद्व्रणकं नाम नाडीदुष्टव्रणापहम् ॥१३८॥

वज्रकतैलम् ।

मरिचालशिलाह्वार्कपयोश्वारिजटात्रिवृत् ।
शकृद्रसविशालाकुङ्निशायुग्दारुचन्दनैः ॥१३९॥
कटुतैलात्पचेत् प्रस्थं द्व्यच्चैर्विषपलान्वितैः ।
सगोमूत्रं तदभ्यङ्गाद्दद्रुश्वित्रविनाशनम् ।
सर्वेष्वपि च कुष्ठेषु तैलमेतत् प्रशस्यते ॥१४०॥

मरिचाद्यं तैलम् ।

मरिचं त्रिवृतादन्तीक्षीरमार्कं शकृद्रसः ।
देवदारुहरिद्रे द्वे मांसीकुष्ठं सचन्दनम् ॥१४१॥
विशाला करवीरञ्च हरितालं मनःशिला ।
चित्रको लाङ्गलाख्या च विडङ्गं चक्रमर्दकम् ॥१४२॥

शिरीषं कुटजो निम्बं सप्तपर्णश्च शाल्मलाः।
सम्पाको नक्तमालोऽब्दः खदिरं पिप्पली वचा ॥१४३॥
ज्योतिष्मती च पलिका विषस्य द्विपलं भवेत्।
आढ़कं कटुतैलस्य गोमूत्रन्तु चतुर्गुणम् ॥१४४॥
मृत्पात्रे लौहपात्रे वा शनैर्मृद्वग्निना पचेत्।
पक्वा तैलवरं ह्येतन्म्रक्षयेत् कौष्ठिकान् व्रणान् ॥१४५॥
पामाविचर्चिकादद्रुकण्डुविस्फोटकानि च।
वलयः पलितं छायानीलीव्यङ्गस्तथैव च।
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्य्यञ्च जायते ॥१४६॥
प्रथमे वयसि स्त्रीणां यासां नस्यन्तु दीयते।
परामपि जरां प्राप्य न स्तना यान्ति नम्रताम् ॥१४७॥
बलीवर्दस्तुरङ्गो वा गजो वा वायुपीड़ितः।
एभिरभ्यञ्जनैर्गाढ़ं भवेन्मारुतविक्रमः ॥१४८॥

बृहन्मरिचाद्यं तैलम्।

नक्तमालं हरिद्रे द्वे अर्कस्तगरमेव च।
करवीरं वचाकुष्ठमास्फोतारक्तचन्दनम् ॥१४९॥
मालती सप्तपर्णञ्च मञ्जिष्ठा सिन्धुवारिका।
एषामर्द्धपलान् भागान् विषस्यापि पलन्तथा ॥१५०॥
चतुर्गुणे गवां मूत्रे तैलप्रस्थं विपाचयेत्।
श्वित्रविस्फोटकिटिमकीटलूताविचर्चिकाः ॥१५१॥
कण्डुकच्छुविकाराश्च ये व्रणा विषदूषिताः।
विषतैलमिदं नाम्ना सर्वव्रणविशोधनम् ॥१५२॥

विषतैलम्।

श्वेतकरवीररसो गोमूत्रं चित्रकं विड़ङ्गञ्च।

कुष्ठेषु तैलयोगः सिद्धोऽयं सम्मतो भिषजाम् ॥१५३॥

करवीराद्यं तैलम्।

श्वेतकरवीरमूलं विषांशसाधितं गवां मूत्रे।
चर्मदलपामासिध्मविस्फोटक्रिमिकिटिमजित्तैलम् ॥१५४॥

श्वेतकरवीराद्यं तैलम्।

सिन्दूरार्द्धपलं पिष्ट्वा जीरकस्य पलं तथा।
कटुतैलं पचेन्मानीं सद्यः पामाहरं परम् ॥१५५॥

सिन्दूराद्यं तैलम्।

सिन्दूरं चन्दनं मांसीविडङ्गं रजनीद्वयम्।
प्रियङ्गु पद्मकं कुष्ठं मञ्जिष्ठां खदिरं वचाम् ॥१५६॥
जात्यर्कत्रिवृतानिम्बकरञ्जविषमेव च।
कृष्णावेत्रकलोध्रञ्च प्रपुन्नाडञ्च संहरेत् ॥१५७॥
श्लक्ष्णपिष्टानि सर्वाणि योजयेत् तैलमात्रया।
अभ्यङ्गेन प्रयुञ्जीत सर्वकुष्ठविनाशनम् ॥१५८॥
पामाविचर्च्चिकाकण्डुविसर्पादिविनाशनम्।
रक्तपित्तोत्थितान् हन्ति रोगानेवंविधान् बहून् ॥१५९॥

महासिन्दूराद्यं तैलम्।

मञ्जिष्ठात्रिफलालाक्षानिशाशिलालगन्धकैः।
चूर्णितैस्तैलमादित्यपाकं पामाहरं परम् ॥१६०॥

आदित्यपाकं तैलम्।

स्वरसेन च दूर्वायाः पचेत् तैलं चतुर्गुणम्।
कच्छुविचर्च्चिकापामा अभ्यङ्गादेव नाशयेत् ॥१६१॥

दूर्वाद्यं तैलम्।

अर्कपत्ररसे पक्वं कटुतैलं निशायुतम्।

मन:शिलायुतं वापि पामाकच्छ्वादिनाशनम् ॥१६२॥

अर्कतैलम् ।

गण्डीरिकाचित्रकमार्कवार्ककुष्ठद्रुमत्वक्लवणैः समूत्रैः ।
तैलं पचेन्मण्डलदद्रुकुष्ठदुष्टव्रणारुक्किटिमापहारि ॥१६३॥

गण्डीराद्यं तैलम् ।

चित्रकस्याथ निर्गुण्ड्या हयमारस्य मूलतः ।
नाड़ी च वीजाद्विषतः काञ्जिपिष्टं पलं पलम् ॥१६४॥
करञ्जतैलाष्टपलं काञ्जिकस्य पलं पुनः ।
मिश्रितं सूर्य्यसन्तप्तं तैलं कुष्ठव्रणास्रजित् ॥१६५॥

पृथ्वीसारतैलम् ।

सोमराजी हरिद्रे द्वे सर्षपारग्वधं गदम् ।
करञ्जैड़गजावीजं गर्भं दत्त्वा विपाचयेत् ॥१६६॥
तैलं सर्षपसम्भूतं नाड़ीदुष्टव्रणापहम् ।
अनेनाशु प्रशाम्यन्ति कुष्ठान्यष्टादशैव तु ॥१६७॥
नीलिकापिड़काव्यङ्गं गम्भीरं वातशोणितम् ।
कण्डुकच्छ्रुप्रशमनं कच्छुपामाविनाशनम् ॥१६८॥

सौमराजीतैलम् ।

पक्षात्पक्षाच्छर्दनान्यभ्युपेया-
न्मासान्मासात् स्रंसनं चाप्यधस्तात् ।
त्र्यहात् त्र्यहान्नस्ततश्चावपीड़ा-
न्मासेष्वस्रङ्मोचयेत् षट्सु षट्सु ॥१६९॥
योषिन्मांससुरात्यागः शालिमुद्गयवादयः ।
पुराणास्तिक्तशाकञ्च जाङ्गलं कुष्ठिनां हितम् ॥१७०॥

इति कुष्ठचिकित्सा ।

# अथोदर्दकोठशीतपित्ताधिकारः।

अभ्यङ्गः कटुतैलेन सेकश्चोष्णाम्बुभिस्ततः।
उदर्दे वमनं कार्य्यं पटोलारिष्टवारिणा ॥१॥
त्रिफलापुरकृष्णाभिर्विरेकश्चात्र शस्यते।
त्रिफलां चौद्रसहितां पिबेद्वा नवकार्षिकाम् ।
विसर्पोक्तममृतादि भिषगत्रापि योजयेत् ॥२॥
सितां मधुकसंयुक्तां गुड़मामलकैः सह।
सगुड़ं दीप्यकं यस्तु खादेत्पथ्यान्नभुङ्नरः ॥३॥
तस्य नश्यति सप्ताहादुदर्दः सर्वदेहजः।
सिद्धार्थरजनीकल्कैः प्रपुन्नाड़तिलैः सह ॥४॥
कटुतैलेन सम्मिश्रमेतदुद्वर्त्तनं हितम्।
दूर्वानिशायुतो लेपः कच्छुपामाविनाशनः ॥५॥
क्रिमिदद्रुहरश्चैव शीतपित्तहरः परः।
अग्निमन्थभवं मूलं पिष्टं पीतञ्च सर्पिषा ॥६॥
शीतपित्तोदर्दकोठान् सप्ताहादेव नाशयेत्।
कुष्ठोक्तञ्च क्रमं कुर्य्यादम्लपित्तघ्नमेव च ॥७॥
उदर्दोक्तां क्रियाञ्चापि कोठरोगे समासतः।
सर्पिः पीत्वा महातिक्तं कार्य्यं शोणितमोक्षणम् ॥८॥

निम्बस्य पत्राणि सदा घृतेन
धात्रीविमिश्राण्यथवोपयुञ्ज्यात्।
विस्फोटकोठक्षतशीतपित्तं
कण्डूस्रपित्तं सहसा च जह्यात् ॥९॥

क्षारसिन्धूत्थतैलैश्च गात्राभ्यङ्गं प्रयोजयेत्।

गान्धारिकाफलं पक्वं शुष्कमुत्स्वेदितं पुनः ॥१०॥
क्षीरेण शीतपित्तघ्नं खादितं पथ्यसेविना ।
तैलोद्वर्त्तनयोगेन योज्य एलादिको गणः ॥११॥
शुष्कमूलकयूषेण कौलत्थेन रसेन वा ।
भोजनं सर्वदा कार्य्यं लावतित्तिरिजेन वा ॥१२॥
शीतलान्यन्नपानानि बुद्ध्वा दोषगतिं भिषक् ।
उष्णानि वा यथाकालं शीतपित्ते प्रयोजयेत् ॥१३॥

इत्युदर्द्दकोठशीतपित्तचिकित्सा ।

## अथाम्लपित्ताधिकारः ।

वान्तिं कृत्वाम्लपित्ते तु विरेकं मृदु कारयेत् ।
सम्यक् वान्तविरिक्तस्य सुस्निग्धस्यानुवासनम् ॥१॥
आस्थापनं चिरोद्भूते देयं दोषाद्यपेक्षया ।
क्रिया शुद्धस्य शमनी ह्यनुबन्धव्यपेक्षया ॥२॥
दोषसंसर्गजे कार्य्या भेषजाहारकल्पना ।
ऊर्द्ध्वगं वमनैर्धीमानधोगं रेचनैर्हरेत् ।
तिक्तभूयिष्ठमाहारं पानं वापि प्रकल्पयेत् ॥३॥
यवगोधूमविकृतीस्तीक्ष्णसंस्कारवर्जिताः ।
यथास्वं लाजशक्तून् वा सितामधुयुतान् पिबेत् ॥४॥
निस्तुषयववृषधात्रीक्वाथस्त्रिसुगन्धिमधुयुतः पीतः ।
अपनयति चाम्लपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥५॥
कफपित्तवमीकण्डूज्वरविस्फोटदाहहा ।
पाचनो दीपनः क्वाथः शृङ्गवेरपटोलयोः ॥६॥
पटोलं नागरं धान्यं क्वाथयित्वा जलं पिबेत् ।

कण्डुपामार्त्तिशूलघ्नं कफपित्ताग्निमान्द्यजित् ॥७॥
पटोलविश्वामृतरोहिणीकृतं जलं पिबेत् पित्तकफोच्छ्रये तु।
शूलभ्रमारोचकवह्निमान्द्यदाहज्वरच्छर्दिनिवारणं तत् ॥८॥
यवकृष्णापटोलानां क्वाथं क्षौद्रयुतं पिबेत्।
नाशयेदम्लपित्तञ्च अरुचिञ्च वमिन्तथा ॥९॥
वासामृतापर्पटकनिम्बभूनिम्बमार्कवैः।
त्रिफलाकुलकैः क्वाथः सक्षौद्रश्चाम्लनाशनः ॥१०॥

दशाङ्गः।

फलत्रिकं पटोलञ्च तिक्ताक्वाथः सितायुतः।
पीतः शीतकमध्वाक्तो ज्वरच्छर्द्यम्लपित्तजित् ॥११॥
पथ्याभृङ्गरजश्चूर्णं युक्तं जीर्णगुड़ेन तु।
जयेदम्लपित्तजन्यां छर्दिमन्नविदाहजाम् ॥१२॥
वासानिम्बपटोलत्रिफलाशनयासयोजितो जयति।
अधिककफाम्लपित्तं प्रयोजितो गुग्गुलुः क्रमेण ॥१३॥

वासादिगुग्गुलुः।

छिन्नाखदिरयष्ट्याह्वदार्व्यम्भो वा मधुद्रवम्।
सद्राक्षामभयां खादेत्सक्षौद्रां सगुड़ाञ्च ताम् ॥१४॥
कटुका सितावलेह्या पटोलविश्वञ्च क्षौद्रसंयुतम्।
रक्तस्रुतौ च युक्त्या वा खण्डकुष्माण्डकं श्रेष्ठम् ॥१५॥

पटोलधन्याकमहौषधाब्दैः
कृतः कषायो विनिहन्ति शीघ्रम्।
मन्दानलं पित्तबलासदाह-
च्छर्दिज्वरामानिलशूलरोगान् ॥१६॥

छिन्नोद्भवानिम्बपटोलपत्रं

पलविकं सुक्वथितं सुशीतम् ।
क्षौद्रान्वितं पित्तमनेकरूपं
सुदारुणं हन्ति हि चाम्लपित्तम् ॥१७॥
पटोलत्रिफलानिम्बशृतं मधुयुतं पिबेत् ।
पित्तश्लेषज्वरच्छर्दिदाहशूलोपशान्तये ॥१८॥
सिंहास्यामृतभण्टाकीक्वाथं पीत्वा समाक्षिकम् ।
अम्लपित्तं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम् ॥१९॥
वासाघृतं तिक्तघृतं पिप्पलीघृतमेव च ।
अम्लपित्ते प्रयोक्तव्यं गुडकुष्माण्डकं तथा ॥२०॥
पक्तिशूलापहा योगास्तथा खण्डामलक्यपि ।
पिप्पलीमधुसंयुक्ता चाम्लपित्तविनाशिनी ॥२१॥
जम्बीरस्वरसः पीतः सायं हन्त्यम्लपित्तकम् ॥२२॥
गुडपिप्पलीपथ्याभिस्तुल्याभिर्मोदकः कृतः ।
पित्तश्लेष्मापहः प्रोक्तो मन्दमग्निञ्च दीपयेत् ॥२३॥
हिङ्गु च कतकफलानि चिञ्चात्वचो घृतञ्च पुटदग्धम् ।
शमयति तदम्लपित्तमम्लभुजो यदि यथोत्तरं द्विगुणम् ॥२४॥
कान्तापात्रे वराकल्को व्युषितोऽभ्यासयोगतः ।
सिताक्षौद्रसमायुक्तः कफपित्तहरः स्मृतः ॥२५॥
एकोऽंशः पञ्चनिम्बानां द्विगुणो वृद्धदारकः ।
शक्तुर्दशगुणो देयः शर्करामधुरीकृतः ॥२६॥
शीतेन वारिणा पीतः शूलं पित्तकफोत्थितम् ।
निहन्ति चूर्णं सक्षौद्रमम्लपित्तं सुदारुणम् ॥२७॥

पञ्चनिम्बादिचूर्णम् ।

आशु भक्तोदके पिष्टमभ्रकं तत्र संस्थितम् ॥२८॥

कन्दमाणास्थिसंहारखण्डकर्णरसैरथ।
तण्डुलीयञ्च शालिञ्च कालमारिषजेन च ॥२९॥
हंस्वीरवृहतीभृङ्गलचणाकेशराजजैः।
पेषणं भावनं कुर्य्यात् पुटञ्चानेकशो भिषक् ॥३०॥
यावन्निश्चन्द्रकं तत् स्याच्छुद्धिरेवं विहायसः।
स्वर्णमाक्षिकशालिञ्च ध्मातं निर्वापितं जले ॥३१॥
त्रैफलेऽथ विचूर्ण्यैवं लौहं कान्तादिकं पुनः।
वृहत्यवकरीकर्णत्रिफलावृद्धदारजैः ॥३२॥
माणकन्दास्थिसंहारशृङ्गवेरभवै रसैः।
दशमूलीमुण्डितिकातालमूलीसमुद्भवैः ॥३३॥
पुटितं साधुयत्नेन शुद्धिमेवमयो व्रजेत्।
वशिरं श्वेतवाट्यालं मधुपर्णीमयूरकम् ॥३४॥
तण्डुलीयञ्च वर्षाह्वं दत्त्वाधश्चोर्द्ध्वमेव च।
पाक्यं सजीर्णमण्डूरं गोमूत्रेण दिनत्रयम् ॥३५॥
अन्तर्वाष्पमदग्धञ्च तथा स्थाप्यं दिनत्रयम्।
विचूर्णितं शुद्धिरियं लौहकिट्टस्य दर्शिता ॥३६॥
जयन्त्या वर्द्धमानस्य आर्द्रकस्य रसेन तु।
वायस्याश्चानुपूर्व्यैवं मर्दनं रसशोधनम् ॥३७॥
गन्धकं नवनीताख्यं क्षुद्रितं लौहभाजने।
त्रिधा चण्डातपे शुष्कं भृङ्गराजरसाप्लुतम् ॥३८॥
ततो वह्नौ द्रवीभूतं त्वरितं वस्त्रगालितम्।
यत्नाद्भृङ्गरसे क्षिप्तं पुनः शुष्कं विशुध्यति ॥३९॥
गगनाद् द्विपलं चूर्णं लौहस्य पलमात्रकम्।
लौहकिट्टपलार्द्धञ्च सर्वमेकत्र संस्थितम् ॥४०॥

मण्डूकपर्णीवशिरतालमूलीरसैः पुनः ।
वरीभृङ्गकेशराजकालमारिषजैरथ ॥४१॥
त्रिफलाभद्रमुस्ताभिः स्थालीपाकाद्विचूर्णितम् ।
रसगन्धकयोः कर्षौ प्रत्येकं ग्राह्यमेकतः ॥४२॥
तन्मर्दनाच्छिलाखल्वे यत्नतः कज्जलीकृतम् ।
वचा चव्यं यमानी च जीवकेशरपुष्पिका ॥४३॥
व्योषं मुस्तं विडङ्गञ्च ग्रन्थिकं खरमञ्जरी ।
त्रिवृता चित्रको दन्ती सूर्य्यावर्त्तः सितस्तथा ॥४४॥
भृङ्गमाणककन्दश्च खण्डकर्णक एव च ।
दण्डोत्पलाकेशराजकालावकड़कोऽपि च ॥४५॥
एषामर्द्धपलं ग्राह्यं पटघृष्टं सुचूर्णितम् ।
प्रत्येकं त्रिफलायाश्च पलार्द्धं पलमेव च ॥४६॥
एतत् सर्वं समालोड्य लौहपात्रे तु भावयेत् ।
आतपे दण्डसंघृष्टमार्द्रकस्य रसैस्त्रिधा ॥४७॥
तद्रसेन शिलापिष्टं गुड़िकां कारयेद्भिषक् ।
वदरास्थिनिभां शुष्कां सुनिगुप्तां निधापयेत् ॥४८॥
तत्प्रातर्भोजनादौ तु सेवितं गुड़िकात्रयम् ।
अम्लोदकानुपानञ्च हितं मधुरवर्ज्जितम् ॥४९॥
दुग्धञ्च नारिकेलञ्च वर्जनीयं विशेषतः ।
भोज्यं यथेष्टमिष्टञ्च वारि भक्ताम्लकाञ्जिकम् ॥५०॥
हन्त्यम्लपित्तं विविधं शूलञ्च परिणामजम् ।
पाण्डुरोगञ्च गुल्मञ्च शोथोदरगुदामयान् ॥५१॥
यक्ष्माणं पञ्चकासांश्च मन्दाग्नित्वमरोचकम् ।
प्लीहानं श्वासमानाहमामवातं सुदारुणम् ।

गुड़ी सुधावती सेयं विख्याता रोगनाशिनी ॥५२॥

सुधावतीगुड़िका।

पिष्ट्वाजाजीं सधन्याकं घृतप्रस्थं विपाचयेत्।
कफपित्तारुचिहरं मन्दानलवमिं जयेत् ॥५३॥

जीरकाद्यं घृतम्।

पटोलशुण्ठ्योः कल्काभ्यां केवलं कुलकेन वा।
घृतप्रस्थं विपक्तव्यं कफपित्तहरं परम् ॥५४॥

पटोलशुण्ठीघृते।

पिप्पलीक्वाथकल्केन घृतं सिद्धं मधुप्लुतम्।
पिबेत् तत्प्रातरुत्थाय अम्लपित्तनिवृत्तये ॥५५॥

पिप्पलीघृतम्।

द्राक्षामृताशक्रपटोलपत्रैः सोशीरधात्रीघनचन्दनैश्च।
त्रायन्तिकापद्मकिरातधान्यैः कल्कैः पचेत् सर्पिरुपेतमेभिः॥५६॥
युञ्जीत मात्रां सह भोजनेन सर्वर्त्तुपानेऽपि भिषग्विदध्यात्।
बलासपित्तं ग्रहणीं प्रवृद्धां कासाग्निसादं ज्वरमम्लपित्तम्।
सर्वं निहन्याद् घृतमेतदाशु सम्यक् प्रयुक्तं ह्यमृतोपमञ्च ॥५७॥

द्राक्षाद्यं घृतम्।

शतावरीमूलकल्कं घृतप्रस्थं पयः समम्।
पचेन्मृद्वग्निना सम्यक् क्षीरं दत्त्वा चतुर्गुणम् ॥५८॥
नाशयेदम्लपित्तञ्च वातपित्तोद्भवान् गदान्।
रक्तपित्तं तृषां मूर्च्छां श्वासं सन्तापमेव च ॥५९॥

शतावरीघृतम्।

इत्यम्लपित्तचिकित्सा।

---

## अथ विसर्पविस्फोटाधिकारः ।

विरेकवमनालेपसेचनासृग्विमोक्षणैः ।
उपाचरेद्यथादोषं विसर्पानविदाहिभिः ॥१॥
पटोलपिचुमर्दाभ्यां पिप्पल्या मदनेन च ।
विसर्पे वमनं शस्तं तथैवेन्द्रयवैः सह ॥२॥
त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह ।
प्रयोक्तव्यं विरेकार्थं विसर्पज्वरशान्तये ॥३॥
रसमामलकानां वा घृतमिश्रं प्रदापयेत् ।
तृणवर्जं प्रयोक्तव्यं पञ्चमूलचतुष्टयम् ।
प्रदेहसेकसर्पिर्भिर्विसर्पे वातसम्भवे ॥४॥

कुष्ठं शताह्वासुरदारुमुस्ता-
वाराहिकुस्तुम्बुरुकृष्णगन्धाः ।
वातेऽर्कवंशार्त्तगलाश्च योज्याः
सेकेषु लेपेषु तथा घृतेषु ॥५॥

प्रपौण्डरीकमञ्जिष्ठापद्मकोशीरचन्दनैः ।
सयष्टीन्दीवरैः पित्ते क्षीरपिष्टैः प्रलेपयेत् ॥६॥

कशेरुशृङ्गाटकपद्मगुन्द्राः
सशैवलाः सोत्पलकर्दमाश्च ।
वस्त्रान्तराः पित्तकृते विसर्पे
लेपा विधेयाः सघृताः सुशीताः ॥७॥

प्रदेहाः परिषेकाश्च शस्यन्ते पञ्चवल्कलैः ।
पद्मकोशीरमधुकचन्दनैर्वा प्रशस्यते ॥८॥
पित्ते तु पद्मिनीपङ्कं पिष्टं वा शङ्खशैवलम् ।

गुञ्जामूलन्तु शुक्तिर्वा गैरिकं वा घृतान्वितम् ॥९॥
न्यग्रोधपादा गुञ्जा च कदलीगर्भ एव च।
विसग्रन्थिकलेपः स्याच्छतधौतघृताप्लुतः ॥१०॥
हरेणवो मसूराश्च मुद्गाश्चैव सशालयः।
पृथक् पृथक् प्रदेहाः स्युः सर्वैर्वा सर्पिषा सह ॥११॥
द्राक्षारग्वधकाश्मर्य्यत्रिफलैरण्डपीलुभिः।
त्रिवृद्धरीतकीभिश्च विसर्पे शोधनं हितम् ॥१२॥
गायत्रीसप्तपर्णाब्दवासारग्वधदारुभिः।
कुटन्नटैर्भवेल्लेपो विसर्पे श्लेष्मसम्भवे ॥१३॥

अजाश्वगन्धा शरलाथ काला
सैकैषिका वाप्यथवाजशृङ्गी।
गोमूत्रपिष्टो विहितः प्रलेपो
हन्याद्विसर्पं कफजं सुशीघ्रम् ॥१४॥

मदनं मधुकं निम्बं वत्सकस्य फलानि च।
वमनञ्च विधातव्यं विसर्पे कफसम्भवे ॥१५॥
त्रिफला पद्मकोशीरसमङ्गाकरवीरकम्।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥१६॥
आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः।
शिरीषपुष्पकामाची हिता लेपावचूर्णनैः ॥१७॥
मुस्तारिष्टपटोलानां क्वाथः सर्वविसर्पनुत्।
धात्रीपटोलमुद्गानामथवा घृतसंप्लुतः ॥१८॥
अमृतवृषपटोलं निम्बकल्कैरुपेतम्
त्रिफलखदिरसारं व्याधिघातञ्च तुल्यम्।
क्वथितमिदमशेषं गुग्गुलोर्भागयुक्तं

जयति विषविसर्पान् कुष्ठमष्टादशाख्यम् ॥१९॥

नवकषायगुग्गुलुः।

अमृतवृषपटोलं मुस्तकं सप्तपर्णं
खदिरमसितवेत्रं निम्बपत्रं हरिद्रे।
विविधविषविसर्पान् कुष्ठविस्फोटकण्डू-
रपनयति मसूरीं शीतपित्तं ज्वरञ्च ॥२०॥

पटोलामृतभूनिम्बवासकारिष्टपर्पटैः।
खदिराब्दयुतैः क्वाथो विस्फोटार्त्तिज्वरापहः ॥२१॥

पटोलत्रिफलारिष्टगुडूचीमुस्तचन्दनैः।
समूर्वा रोहिणी पाठा रजनी सदुरालभा ॥२२॥
कषायं पाययेदेतत् श्लेष्मपित्तज्वरापहम्।
कण्डुत्वग्दोषविस्फोटविषवीसर्पनाशनम् ॥२३॥

भूनिम्बवासाकटुकापटोलफलत्रिकाचन्दननिम्बसिद्धः।
विसर्पदाहज्वरवक्त्रशोषविस्फोटतृष्णावमिनुत् कषायः ॥२४॥

सकफे पित्तयुक्ते तु त्रिफलां योजयेत् पुरैः॥ २५॥

दुरालभां पर्पटकं पटोलं कटुकान्तथा।
सोष्णं गुग्गुलुसंमिश्रं पिबेद्वा खदिराष्टकम् ॥२६॥

कुण्डलीपिचुमर्दाम्बु खदिरेन्द्रयवाम्बु वा।
विस्फोटं नाशयत्याशु वायुर्जलधरानिव ॥२७॥

चन्दनं नागपुष्पञ्च तण्डुलीयकशारिवे।
शिरीषवल्कलं जातीलेपः स्याद्दाहनाशनः ॥२८॥

शुक्रतरुनतमांसी रजनी पद्मा च तुल्यानि।
पिष्टानि शीततोयेन लेपः स्यात्सर्वविस्फोटे ॥२९॥

शिरीषमूलमञ्जिष्ठाचव्यामलकयष्टिकाः।

सन्नातीपन्नवचोद्रा विस्फोटे कवड़ग्रहाः ॥२०॥
शिरीषोडुम्बुरी जम्बु सेकालेपनयोर्हिताः।
श्लेष्मातकत्वचो वापि प्रलेपाश्चोतने हिताः ॥२१॥
शिरीषयष्टीनतचन्दनैलमांसीहरिद्राद्दयकुष्ठवालैः।
लेपो दशाङ्गः सघृतः प्रदिष्टो विसर्पकण्डूज्वरशोथहारी ॥२२॥
शिरीषोशीरनागाह्वहिंस्राभिर्लेपनाद् द्रुतम्।
विसर्पविषविस्फोटाः प्रशाम्यन्ति न संशयः ॥२३॥

वृषखदिरपटोलपत्रनिम्ब-
त्वगमृतामलकीकषायकल्कैः।
घृतमभिनवमेतदाशु पक्वं
जयति विसर्पगदान् सकुष्ठगुल्मान् ॥२४॥

वृषाद्यं घृतम्।

पटोलसप्तच्छदनिम्बवासाफलत्रिकच्छिन्नरुहाविपक्वम्।
तत्पञ्चतिक्तं घृतमाशु हन्ति त्रिदोषविस्फोटविसर्पकण्डूः ॥२५॥

पञ्चतिक्तघृतम्।

पद्मकं मधुकं लोध्रं नागपुष्पस्य केशरम्।
द्वे हरिद्रे विड़ङ्गानि सूक्ष्मैलातगरं तथा ॥२६॥
कुष्ठं लाक्षापत्रकञ्च सिक्थकं तुत्थमेव च।
बहुवारः शिरीषश्च कपित्थफलमेव च ॥२७॥
तोयेनालोड्य तत् सर्वं घृतप्रस्थं विपाचयेत्।
यांश्च रोगान् निहन्याद्वै तान्निबोध महामुने ॥२८॥
सर्पकीटाखुदष्टेषु लूतामूत्रक्षतेषु च।
विविधेषु स्फोटकेषु तथा कुष्ठविसर्पिषु ॥२९॥
नाड़ीषु गण्डमालासु प्रभिन्नासु विशेषतः।

अगस्त्यविहितं धन्यं पद्मकन्तु महाघृतम् ॥४०॥

महापद्मकं घृतम्।

रोगस्तु स्नायुकाख्यो यः क्रिया तत्र विसर्पवत्।
गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम्।
पिबेत् स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ॥४१॥
शोभाञ्जनमूलदलैः काञ्जिकपिष्टैः सलवणैर्लेपः।
हन्ति स्नायुकरोगं यद्वा मोचकत्वचो लेपः ॥४२॥

इति विसर्पविस्फोटचिकित्सा।

## अथ मसूर्य्यधिकारः।

सर्वासां वमनं पथ्यं पटोलारिष्टवासकैः।
कषायैश्च वचावत्सयष्ट्याह्वफलकल्कितैः ॥१॥
सक्षौद्रं पाययेद्ब्राह्मया रसं वा हैलमोचिकम्।
वान्तस्य रेचनं देयं शमनञ्चाबले नरे ॥२॥
सुषवीपत्रनिर्यासं हरिद्राचूर्णसंयुतम्।
रोमान्तीज्वरविस्फोटमसूरीशान्तये पिबेत् ॥३॥
उभाभ्यां हृतदोषस्य विशुष्यन्ति मसूरिकाः।
निर्विकाराश्चाल्पपूयाः पच्यन्ते चाल्पवेदनाः ॥४॥

कण्टाकुम्भाण्डुमूलं क्वथनविधिकृतं हिङ्गुमाषैकयुक्तं
पीतं बीजं जयायाः सघृतमुषितवाः पीतमह्नि: सिकत्या।
माषामूलं शिफा वा दमनकुसुमजा सोषणा वाथ पूतिः
योगा वास्यम्बुनैते प्रमथमवगदे दृश्यमाने प्रयोज्याः ॥५॥

उद्धृत्य मुष्टिमाच्छाद्य भेषजं यत् प्रयुज्यते।
तन्मुष्टियोगमित्याहुर्मुष्टियोगपरायणाः ॥६॥

उष्ट्रकण्टकमूलं वाप्यनन्तामूलमेव वा।
विधिग्टहीतं ज्येष्ठाम्बु पीतं हन्ति मसूरिकाम् ॥७॥
तद्वच्छृगालकण्टकमूलञ्च व्युषिताम्भसा।
मसूरीं मूर्च्छितो हन्ति गन्धकाद्यैस्तु पारदः ॥८॥
निशाद्विपाच्छदे शीतवारिपीते तथैव तु।
यावत्संख्यामसूर्य्यङ्के तावद्भिः शेलुजैर्दलैः ॥९॥
छिन्नैरातुरनाम्ना तु गुणी व्येति न वर्द्धते।
व्युषितं वारि सक्षौद्रं पीतं दाहगुणौहरम् ॥१०॥
शेलुत्वक्कृतशीताम्भःसेको वा कायशोषणे ॥११॥
उग्राज्यवंशनीलीयवहृषकार्पासकीकसब्रह्मी।
स्वरसमयूरकलाद्याधूपो रोमान्तिकादिहरः ॥१२॥
तर्पणं वातजायां प्राक् लाजचूर्णैः सशर्करैः।
भोजनं तिक्तयूषैश्च प्रतुदानां रसेन वा ॥१३॥
द्विपञ्चमूलं रास्ना च दार्व्युशीरं दुरालभा।
सामृतं धान्यकं मुस्तं जयेद्वातसमुत्थिताम् ॥१४॥
गुडूचीं मधुकं रास्नां पञ्चमूलं कनिष्ठकम्।
चन्दनं काश्मर्य्यफलं बलामूलं विकङ्कतम्।
पाककाले मसूर्य्यान्तु वातजायां प्रयोजयेत् ॥१५॥
द्राक्षाकाश्मर्य्यखर्जूरपटोलारिष्टवासकैः।
लाजामलकदुष्पर्शैः सितायुक्तैश्च पैत्तिके ॥१६॥
शिरीषोडुम्बराश्वत्थशेलुन्यग्रोधवल्कलैः।
प्रलेपः सघृतः शीघ्रं व्रणविस्फोटदाहहा ॥१७॥
दुरालभां पर्पटकं भूनिम्बं कटुरोहिणीम्।
श्लैष्मिक्यां पित्तजायां वा पाने निःक्वाथ्य दापयेत् ॥१८॥

निम्बं पर्य्यटकं पाठां पटोलं कटुरोहिणीम् ।
वासां दुरालभां धात्रीमुशीरं चन्दनद्वयम् ॥१९॥
एष निम्बादिकः ख्यातः पीतः शर्करया युतः ।
हन्ति त्रिदोषमसूरीं ज्वरवीसर्पसम्भवाम् ॥२०॥
उत्थिता प्रविशेद् या तु पुनस्तां वाह्यतो नयेत् ॥२१॥

निम्बादि ।

पटोलकुण्डलीमुस्तवृषधन्वयवासकैः ।
भूनिम्बनिम्बकटुकापर्पटैश्च शृतं जलम् ॥२२॥
मसूरीं शमयेदामां पक्वाश्चैव विशोषयेत् ।
नातः परतरं किञ्चिद्विस्फोटज्वरशान्तये ॥२३॥

पटोलमूलारुणतण्डुलीयकं
पिबेद्धरिद्रामलकल्कसंयुतम् ।
मसूरिकास्फोटविदाहशान्तये
तदेव रोमान्तिवमिज्वरापहम् ॥२४॥
पटोलमूलारुणतण्डुलीयकं
तथैव धात्रीखदिरेण संयुतम् ।
पिबेज्जलं सुक्वथितं सुशीतलं
मसूरिकारोगविनाशनं परम् ॥२५॥

खदिरत्रिफलारिष्टपटोलामृतवासकैः ।
क्वाथोऽष्टकाङ्गो जयति रोमान्तिकमसूरिकाः ।
कुष्ठविसर्पविस्फोटकण्ड्वादीनपि तानतः ॥२६॥

खदिराष्टकः ।

अमृतादिकषायस्तु जयेत्पित्तकफात्मिकाम् ।
सौवीरेण तु संपिष्टं मातुलुङ्गस्य केशरम् ॥२७॥

प्रलेपात्पातयत्याशु दाहश्चाशु नियच्छति।
पाददाहं प्रकुरुते पिड़का पादसम्भवा ॥२८॥
तत्र सेकं प्रशंसन्ति बहुशस्तण्डुलाम्बुना।
पाककाले तु सर्वास्ता विशोषयति मारुतः ॥२९॥
तस्मात् संबृंहणं कार्य्यं न तु पथ्यं विशोषणम्।
गुडूची मधुकं द्राक्षा मोरटं दाड़िमैः सह ॥३०॥
पाककाले तु दातव्यं भेषजं गुड़संयुतम्।
तेन पाकं व्रजत्याशु न च वायुः प्रकुप्यति ॥३१॥
लिह्याद्वा बादरं चूर्णं पाचनार्थं गुड़ेन तु।
अनेनाशु विपच्यन्ते वातपित्तकफात्मिकाः ॥३२॥
शूलाध्मानपरीतस्य कम्प्यमानस्य वायुना।
धन्वमांसरसाः शस्ताः ईषत्सैन्धवसंयुताः ॥३३॥
दाड़िमाम्लरसैर्युक्ता यूषाः स्युररुचौ हिताः।
पिबेदम्भस्तमशीतं भावितं खदिराशनैः ॥३४॥
शौचे वारि प्रयुञ्जीत गायत्रीबहुवारजम्।
जातीपत्रं समञ्जिष्ठं दार्वीपूगफलं शमीम् ॥३५॥
धात्रीफलं समधुकं क्वथितं मधुसंयुतम्।
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशस्यते ॥३६॥
अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना।
मधुकं त्रिफलामूर्वादार्वीत्वङ्नीलमुत्पलम् ॥३७॥
उशीरलोध्रमञ्जिष्ठाः प्रलेपाश्चोतने हिताः।
नश्यन्त्यनेन दृग्जाता मसूर्य्यो न द्रवन्ति च ॥३८॥
पञ्चवल्कलचूर्णेन क्लेदिनीमवचूर्णयेत्।
भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना ॥३९॥

निम्बं पर्पटकं पाठां पटोलं कटुरोहिणीम् ।
वासां दुरालभां धात्रीमुशीरं चन्दनद्वयम् ॥१९॥
एष निम्बादिकः ख्यातः पीतः शर्करया युतः ।
हन्ति त्रिदोषमसूरीं ज्वरवीसर्पसम्भवाम् ॥२०॥
उत्थिता प्रविशेद् या तु पुनस्तां वाह्यतो नयेत् ॥२१॥

निम्बादि ।

पटोलकुण्डलीमुस्तवृषधन्वयवासकैः ।
भूनिम्बनिम्बकटुकापर्पटैश्च शृतं जलम् ॥२२॥
मसूरीं शमयेदामां पक्वाञ्चैव विशोषयेत् ।
नातः परतरं किञ्चिद्विस्फोटज्वरशान्तये ॥२३॥

पटोलमूलारुणतण्डुलीयकं
पिबेद्धरिद्रामलककल्कसंयुतम् ।
मसूरिकास्फोटविदाहशान्तये
तदेव रोमान्तिवमिज्वरापहम् ॥२४॥
पटोलमूलारुणतण्डुलीयकं
तथैव धात्रीखदिरेण संयुतम् ।
पिबेज्जलं सुक्वथितं सुशीतलं
मसूरिकारोगविनाशनं परम् ॥२५॥

खदिरत्रिफलारिष्टपटोलामृतवासकैः ।
क्वाथोऽष्टकाङ्गो जयति रोमान्तिकमसूरिकाः ।
कुष्ठविसर्पविस्फोटकण्ड्वादीनपि मानतः ॥२६॥

खदिराष्टकः ।

अमृतादिकषायस्तु जयेत्पित्तकफात्मिकाम् ।
सौवीरेण तु संपिष्टं मातुलुङ्गस्य केशरम् ॥२७॥

प्रलेपात्पातयत्याशु दाहञ्चाशु नियच्छति।
पाददाहं प्रकुरुते पिड़का पादसम्भवा ॥२८॥
तत्र सेकं प्रशंसन्ति बहुशस्तण्डुलाम्बुना।
पाककाले तु सर्वास्ता विशोषयति मारुतः ॥२९॥
तस्मात् संबृंहणं कार्य्यं न तु पथ्यं विशोषणम्।
गुडूची मधुकं द्राक्षा मोरटं दाड़िमैः सह ॥३०॥
पाककाले तु दातव्यं भेषजं गुड़संयुतम्।
तेन पाकं व्रजत्याशु न च वायुः प्रकुप्यति ॥३१॥
लिह्याद्वा बादरं चूर्णं पाचनार्थं गुड़ेन तु।
अनेनाशु विपच्यन्ते वातपित्तकफात्मिकाः ॥३२॥
शूलाध्मानपरीतस्य कम्पमानस्य वायुना।
धन्वमांसरसाः शस्ताः ईषत्सैन्धवसंयुताः ॥३३॥
दाड़िमाम्लरसैर्युक्ता यूषाः स्युररुचौ हिताः।
पिबेदम्भस्तमशीतं भावितं खदिराशनैः ॥३४॥
शौचे वारि प्रयुञ्जीत गायत्रीबहुवारजम्।
जातीपत्रं समञ्जिष्ठं दार्वीपूगफलं शमीम् ॥३५॥
धात्रीफलं समधुकं क्वथितं मधुसंयुतम्।
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशस्यते ॥३६॥
अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना।
मधुकं त्रिफलामूर्वादार्वीत्वङ्नीलमुत्पलम् ॥३७॥
उशीरलोध्रमञ्जिष्ठाः प्रलेपाश्चोतने हिताः।
नश्यन्त्यनेन दृग्जाता मसूर्य्यो न द्रवन्ति च ॥३८॥
पञ्चवल्कलचूर्णेन क्लेदिनीमवचूर्णयेत्।
भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना ॥३९॥

क्रिमिपातभयाच्चापि धूपयेच्छरलादिना ।
वेदनादाहशान्त्यर्थं स्नुतानाञ्च विशुद्धये ॥४०॥
सगुग्गुलं वराक्वाथं युञ्ज्याद्वा खदिराष्टकम् ।
कृष्णाभयारजो लिह्यान्मधुना कण्ठशुद्धये ॥४१॥
अथाष्टाङ्गावलेहो वा कवडश्चार्द्रकादिभिः ।
पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः ॥४२॥
कुर्य्याद्व्रणविधानञ्च तैलादीन् वर्जयेच्चिरम् ।
विषघ्नैः सिद्धमन्त्रैश्च प्रसृज्यात् तु पुनः पुनः ।
तथा शोणितसंसृष्टाः काश्चिच्छोणितमोक्षणैः ॥४३॥
निशाद्वयोशीरशिरीषमुस्तकैः सलोध्रभद्रश्रियनागकेशरैः ।
सस्वेदविस्फोटविसर्पकुष्ठदौर्गन्ध्यरोमान्तिहरः प्रदेहः ॥४४॥
विम्बातिमुक्ताऽशोकप्लक्षवेतसपल्लवैः ।
निशि पर्युषितः क्वाथो मसूरीभयनाशनः ॥४५॥
चैत्रासितभूतदिने रक्तपताकान्विता स्नुहीभवने ।
धवलितकलसन्यस्ता पापरजो दूरतो धत्ते ॥४६॥

इति मसूरीचिकित्सा ।

## अथ क्षुद्ररोगाधिकारः ।

तत्राजगल्लिकामामां जलौकाभिरुपाचरेत् ।
शुक्तिसौराष्ट्रिकाक्षारकल्कैश्चालेपयेन्मुहुः ॥१॥
कठिनां क्षारयोगैश्च द्रावयेदजगल्लिकाम् ।
श्लेष्मविद्रधिकल्केन जयेदनुशयीं भिषक् ॥२॥
विवृतामिन्द्रवृद्धाञ्च गर्दभीं जालगर्दभम् ।
इरिवेल्लिकां गन्धनामां जयेत् पित्तविसर्पवत् ॥३॥

मधुरौषधसिद्धेन सर्पिषा शमयेद्व्रणान्।
रक्तावसेकैर्बहुभिः स्वेदनैरपतर्पणैः ॥४॥
जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः।
पनसिकां कच्छपिकामनेन विधिना भिषक् ॥५॥
साधयेत् कठिनानन्यान् शोथान् दोषसमुद्भवान्।
अन्त्रालजीं कच्छपिकां तथा पाषाणगर्द्दभम् ॥६॥
सुरदारुशिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत्।
कफमारुतशोथघ्नो लेपः पाषाणगर्द्दभे ॥७॥
शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत्।
मनःशिलालभल्लातसूक्ष्मैलागुरुचन्दनैः ॥८॥
जातीपल्लवकल्कैश्च निम्बतैलं विपाचयेत्।
वल्मीकं नाशयेत्तद्धि बहुच्छिद्रं बहुस्रवम् ॥९॥
पाददारीषु च शिरां व्यधयेत्तलशोधनीम्।
स्नेहस्वेदोपपन्नौ तु पादौ चालेपयेन्मुहुः ॥१०॥
मधूच्छिष्टवसामज्जघृतक्षारैर्विमिश्रितैः।
सर्जाख्यसिन्धूद्भवयोश्चूर्णं मधुघृताप्लुतम्।
निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्जनम् ॥११॥

उपोदिकासर्षपनिम्बमोच-
कर्कारुकैर्वारुकभस्मतोये।
तैलं विपक्वं लवणांशयुक्तं
तत् पाददारीं विनिहन्ति लेपात् ॥१२॥

उपोदिक्षारतैलम्।

अलसेऽम्लैश्चिरं सिक्तौ चरणौ परिलेपयेत्।
पटोलारिष्टकाशीशतिफलाभिर्मुहुर्मुहुः ॥१३॥

क्रिमिपातभयाच्चापि धूपयेत्सरलादिना ।
वेदनादाहशान्त्यर्थं स्रुतानाञ्च विशुद्धये ॥४०॥
सगुग्गुलं वराक्वाथं युञ्ज्याद्वा खदिराष्टकम् ।
कृष्णाभयारजो लिह्यान्मधुना कण्ठशुद्धये ॥४१॥
अथाष्टाङ्गावलेहो वा कवडश्चार्द्रकादिभिः ।
पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः ॥४२॥
कुर्य्याद्व्रणविधानञ्च तैलादीन् वर्जयेच्चिरम् ।
विपन्नैः सिद्धमन्त्रैश्च प्रच्छ्यात् तु पुनः पुनः ।
तथा शोणितसंसृष्टाः काश्चिच्छोणितमोक्षणैः ॥४३॥
निशाह्वयोशीरशिरीषमुस्तकैः सलोध्रभद्रश्रियनागकेशरैः ।
सस्वेदविस्फोटविसर्पकुष्ठदौर्गन्ध्यरोमान्तिहरः प्रदेहः ॥४४॥
विम्बातिमुक्तकाऽशोकप्लक्षवेतसपल्लवैः ।
निशि पर्य्युषितः क्वाथो मसूरीभयनाशनः ॥४५॥
चैत्रासितभूतदिने रक्तपताकान्विता स्नुहीभवने ।
धवलितकलसन्यस्ता पापरजो दूरतो धत्ते ॥४६॥

इति मसूरीचिकित्सा ।

## अथ क्षुद्ररोगाधिकारः ।

तत्राजगल्लिकामामां जलौकाभिरुपाचरेत् ।
शुक्तिसौराष्ट्रिकाक्षारकल्कैश्चालेपयेन्मुहुः ॥१॥
कठिनां क्षारयोगैश्च द्रावयेदजगल्लिकाम् ।
श्लेष्मविद्रधिकल्केन जयेदनुशयीं भिषक् ॥२॥
विवृतामिन्द्रवृद्धाञ्च गर्दभीं जालगर्दभम् ।
इरिवेल्लिकां गन्धनामां जयेत् पित्तविसर्पवत् ॥३॥

मधुरौषधसिद्धेन सर्पिषा शमयेद् व्रणान्।
रक्तावसेकैर्बहुभिः स्वेदनैरपतर्पणैः ॥४॥
जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः।
पनसिकां कच्छपिकामनेन विधिना भिषक् ॥५॥
साधयेत् कठिनानन्यान् शोथान् दोषसमुद्भवान्।
अन्त्रालजीं कच्छपिकां तथा पाषाणगर्दभम् ॥६॥
सुरदारुशिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत्।
कफमारुतशोथघ्नो लेपः पाषाणगर्दभे ॥७॥
शस्त्रेणोद्धृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत्।
मनःशिलालभल्लातसूक्ष्मैलागुरुचन्दनैः ॥८॥
जातीपल्लवकल्कैश्च निम्बतैलं विपाचयेत्।
वल्मीकं नाशयेत्तद्धि बहुच्छिद्रं बहुस्रवम् ॥९॥
पाददारीषु च शिरां व्यधयेत्तलशोधनीम्।
स्नेहस्वेदोपपन्नौ तु पादौ चालेपयेन्मुहुः ॥१०॥
मधूच्छिष्टवसामज्जघृतक्षारैर्विमिश्रितैः।
सर्जाख्यसिन्धूद्भवयोश्चूर्णं मधुघृताप्लुतम्।
निमथ्य कटुतैलाक्तं हितं पादप्रमार्जनम् ॥११॥

उपोदिकासर्षपनिम्बमोच-
कर्कारुकैर्वारुकभस्मतोये।
तैलं विपक्वं लवणांशयुक्तं
तत् पाददारीं विनिहन्ति लेपात् ॥१२॥

उपोदिक्षारतैलम्।

अलसेऽम्लैश्चिरं सिक्तौ चरणौ परिलेपयेत्।
पटोलारिष्टकाशीशत्रिफलाभिर्मुहुर्मुहुः ॥१३॥

करञ्जबीजं रजनी काशीशं मधुकं मधु ।
रोचना हरितालञ्च लेपोऽयमलसे हितः ॥१४॥
लाक्षाभयारसालेपः कार्य्यं वा रक्तमोक्षणम् ।
जातीपत्रञ्च संमर्द्य दद्यादलसके भिषक् ॥१५॥
बृहतीरससिद्धेन तैलेनाभ्यज्य बुद्धिमान् ।
शिलारोचनकाशीशचूर्णैर्वा प्रतिसारयेत् ॥१६॥
दहेत् कदरमुद्धृत्य तैलेन दहनेन वा ।
विषघ्नैः साम्बुना स्विन्नमुत्कृत्याभ्यज्य तं व्रणम् ॥१७॥
तथा शोणितरूचूर्णं बद्धा व्रणवदाचरेत् ।
निशाह्वयोशीरशिरीषमुः पाने कषायकेऽभयाम् ॥१८॥
सस्वेदविस्फोटविसर्पकुष्ठदलिम्पेक्षिप्यं पुनः पुनः ।
विम्बातिमुक्तकाऽशोकप्लक्षवेतसा नखप्रदः ॥१९॥
निशि पर्य्युषितः क्वाथो मसूरीभक्ते हितम् ।
चैत्रासितभूतदिने रक्तपताकान्वितमिष्यते ॥२०॥
धवलितकलसन्यस्ता पापरुजो दूरतंन्नेपतः ।

इति मसूरीचिकित्सा । म् ॥२१॥

हितम् ।

## अथ क्षुद्ररोगाधिकारः । म् ॥२२॥

तत्राजगल्लिकामामां जलौकाभिरुपाचरेत् त् ।
शुक्तिसौराष्ट्रिकाक्षारकल्कैश्चालेपयेन्मुहुः ॥१॥ २॥
कठिनां क्षारयोगैश्च द्रावयेदजगल्लिकाम् ।
श्लेष्मविद्रधिकल्केन जयेदनुशयीं भिषक् ॥२॥
विवृतामिन्द्रवृद्धाञ्च गर्दभीं जालगर्दभम् ।
इरिवेल्लिकां गन्धनामां जयेत् पित्तविसर्पवत् ॥३॥

कोमलं पद्मिनीपत्रं यः खादेच्छर्करान्वितम् ।
एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः ॥२६॥
वृक्षाम्लानलचाङ्गेरीबिल्वपाठायवाग्रजम् ।
तक्रेण शीलयेत् पायुभ्रंशार्त्तोऽनलदीपनम् ॥२७॥
गुदञ्च गव्यवसया म्रक्षयेदविशङ्कितः ।
दुष्प्रवेशो गुदभ्रंशो विशत्याशु न संशयः ॥२८॥
मूषिकाणां वसाभिर्वा गुदे सम्यक् प्रलेपनम् ।
स्विन्नमूषिकमांसेन चाथवा स्वेदयेद् गुदम् ॥२९॥
चाङ्गेरीकोलदध्यम्लनागरक्षारसंयुतम् ।
घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम् ।
शुण्ठीक्षारावत्र कल्कौ शिष्टं तु द्रवमिष्यते ॥३०॥

चाङ्गेरीघृतम् ।

क्षीरे महत् पञ्चमूलं मूषिकामन्त्रवर्जिताम् ।
पक्त्वा तस्मिन् पचेत् तैलं वातघ्नौषधसाधितम् ॥३१॥
गुदभ्रंशमिदं तैलं पानाभ्यङ्गात् प्रसाधयेत् ॥३२॥

मूषिकाद्यं तैलम् ।

स्वेदोपनाहं परिकर्त्तिकायां
कृत्वा समभ्यज्य घृतेन पश्चात् ।
प्रवेशयेच्चर्म शनैः प्रशिष्टे-
र्मांसैः सुखोष्णैरुपनाहयेच्च ॥३३॥

स्नेहस्वेदैस्तथैवेनां चिकित्सेदवपाटिकाम् ।
निरुद्धप्रकशे नाड़ीं द्विमुखीं कनकादिजाम् ॥३४॥
सिग्धां त्यक्त्वा तुरुकादिस्नेहेन परिषेचयेत् ।
तैलेन वा वचादारुगन्धैः सिक्तेन च त्र्यहात् ॥३५॥

पुनः स्थूलतरा नाड़ी देया स्रोतोविवृद्धये ।
शस्त्रेण सेवनीं त्यक्त्वा भित्त्वा व्रणवदाचरेत् ॥३६॥
स्निग्धञ्च भोजनं वृद्धे गुदेऽप्येष क्रियाक्रमः ।
चर्मकीलं जतुमणिं मसकांस्तिलकालकान् ॥३७॥
उद्धृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ।
कदुनालस्य चूर्णेन घर्षो मसकनाशनः ॥३८॥
निर्मोकभस्मघर्षाद्वा मसः शान्तिं व्रजेत् सदा ।
युवानपिड़कान्यच्छनीलिकाव्यङ्गशर्कराः ॥३९॥
शिराव्यधैः प्रलेपैश्च जयेदभ्यञ्जनैस्तथा ।
लोध्रधान्यवचालेपस्तारुण्यपिड़कापहः ॥४०॥
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपतः ।
सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम् ॥४१॥
वमनञ्च निहन्त्याशु पिड़कां यौवनोद्भवाम् ।
व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका ॥४२॥
लेपः सनवनीता वा श्वेताश्वखुरजा मसी ।
रक्तचन्दनमञ्जिष्ठालोध्रकुष्ठप्रियङ्गवः ॥४३॥
वटाङ्कुरमसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ।
व्यङ्गानां लेपनं शस्तं रुधिरेण शशस्य च ॥४४॥
मसूरैः सर्पिषा पिष्टैर्लिप्तमास्यं पयोऽन्वितैः ।
सप्ताहाच्च भवेत् सत्यं पुण्डरीकदलप्रभम् ॥४५॥
मातुलुङ्गजटासर्पिःशिलागोशकृतो रसः ।
मुखकान्तिकरो लेपः पिड़कातिलकालजित् ॥४६॥
नवनीतगुड़क्षौद्रकोलमज्जप्रलेपनम् ।
व्यङ्गजिद्वरुणत्वग् वा छागक्षीरप्रपेषिता ॥४७॥

जातीफलकल्कलेपो नीलिव्यङ्गादिनाशनः।
मायश्च कटुतैलेनाभ्यङ्गो वक्त्रप्रसादनः॥४८॥
कालीयकोत्पलामयदधिसरबदरास्थिमध्यफलिनीभिः।
लिप्तं भवति च वदनं शशिप्रभं सप्तरात्रेण॥४९॥
तुषरहितमसृणयवचूर्णसयष्टीमधुकलोध्रलेपेन।
भवति मुखं परिभर्जितचामीकरचारुसौभाग्यम्॥५०॥
रक्तोत्पलशर्वरीद्वयं मञ्जिष्ठागैरिकाश्ववस्तपयः।
सिक्तेन लिप्तमाननमुद्यद्विधुबिम्बवद्विभाति॥५१॥
परिणतदधिशरपुंखैः कुवलयदलकुष्ठचन्दनोशीरैः।
मुखकमलकान्तिकारी भ्रुकुटितिलकालकान् जयति॥५२॥
हरिद्राद्वययष्ट्याह्वकालीयककुचन्दनैः।
प्रपौण्डरीकमञ्जिष्ठापद्मपद्मककुङ्कुमैः॥५३॥
कपित्थतिन्दुकप्लक्षवटपत्रैः पयोऽन्वितैः।
लेपयेत्कल्कितैरेभिस्तैलं वाभ्यञ्जनं चरेत्॥५४॥
पिप्लवं नीलिकाव्यङ्गांस्तिलकान् मुखदूषिकान्।
नित्यसेवी जयेत् क्षिप्रं मुखं कुर्य्यान्मनोरमम्॥५५॥

हरिद्राद्यं तैलम्।

मधुकस्य कषायेण तैलस्य कुडवं पचेत्।
कल्कैः प्रियङ्गुमञ्जिष्ठाचन्दनोत्पलकेशरैः॥५६॥
कनकं नाम तत्तैलं मुखकान्तिकरं परम्।
अभीरुनीलिकाव्यङ्गशोधनं परमर्च्चितम्॥५७॥

कनकतैलम्।

मञ्जिष्ठा मधुकं लाक्षा मातुलुङ्गं सयष्टिकम्।
कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं तथा॥५८॥

आज पयस्तद्द्विगुणं शनैर्मृद्वग्निना पचेत्।
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत् ॥५९॥
मुखं प्रसन्नोपचितं वलीपलितवर्जितम्।
सप्तरात्रप्रयोगेण भवेत् कनकसन्निभम् ॥६०॥

मञ्जिष्ठाद्यं तैलम्।

कुङ्कुमं चन्दनं लाक्षा मञ्जिष्ठा मधुयष्टिका।
कालीयकमुशीरञ्च पद्मकं नीलमुत्पलम् ॥६१॥
न्यग्रोधपादाः प्लक्षस्य शुङ्गाः पद्मस्य केशरम्।
द्विपञ्चमूलसहितैः कषायैः पलिकैः पृथक् ॥६२॥
जलाढ़कं विपक्तव्यं पादशेषमथोद्धरेत्।
मञ्जिष्ठा मधुकं लाक्षा पत्तङ्गं मधुयष्टिका ॥६३॥
कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं तथा।
अजाक्षीरं तद्द्विगुणं शनैर्मृद्वग्निना पचेत् ॥६४॥
सम्यक् पक्वं परं ह्येतन्मुखवर्णप्रसादनम्।
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत् ॥६५॥
सप्तरात्रप्रयोगेण भवेत् काञ्चनसन्निभम्।
कुङ्कुमाद्यमिदं तैलमश्विभ्यां निर्मितं पुरा ॥६६॥

कुङ्कुमाद्यं तैलम्।

कुङ्कुमं किंशुकं लाक्षा मञ्जिष्ठा रक्तचन्दनम्।
कालीयकं पद्मकञ्च मातुलुङ्गस्य केशरम् ॥६७॥
कुसुम्भं मधुयष्टिकं फलिनी मदयन्तिका।
निशे द्वे रोचना पद्ममुत्पलञ्च मनःशिला ॥६८॥
काकोल्यादिसमायुक्तैरेतैरक्षसमैर्भिषक्।
लाक्षारसपयोभ्याञ्च तैलप्रस्थं विपाचयेत् ॥६९॥

कुङ्कुमाद्यमिदं तैलं चाभ्यङ्गात् काञ्चनोपमम्।
करोति वदनं सद्यः पुष्टिलावण्यकान्तिदम्।
सौभाग्यलक्ष्मीजननं वशीकरणमुत्तमम् ॥७०॥

कुङ्कुमाद्यं तैलम्।

मधुकं चन्दनं कङ्कु सर्षपं पद्मकं तथा।
कालीयकं हरिद्रा च लोध्रमेभिश्च कल्कितैः ॥७१॥
विपचेद्धि घृतं वैद्यस्तत्पक्कं वस्त्रगालितम्।
पादांशं कुङ्कुमं सिक्थं चिप्त्वा मन्दानले पचेत् ॥७२॥
तत्सिद्धं शिशिरे नीरे प्रक्षिप्याकर्षयेत् ततः।
तदेतद्वर्णकं नाम घृतं वर्णप्रसादनम् ॥७३॥
अनेनाभ्यासलिप्तं हि वलीभूतमपि क्रमात्।
निष्कलङ्केन्दुविम्बाभं स्याद्विलासवतीमुखम् ॥७४॥

वर्णकं घृतम्।

अरुंषिकायां रुधिरेऽवसिक्ते
शिराव्यधेनाथ जलौकसा वा।
निम्बाम्बुसिक्तैः शिरसि प्रलेपो
देयोऽश्ववर्च्चोरससैन्धवाभ्याम् ॥७५॥

पुराणमथ पिण्याकं पुरीषं कुक्कुटस्य वा।
मूत्रपिष्टं प्रलेपोऽयं शीघ्रं हन्यादरुंषिकाम् ॥७६॥
अरुंषिघ्नं भृष्टकुष्ठचूर्णं तैलेन संयुतम्।
हरिद्राद्वयभूनिम्बत्रिफलारिष्टचन्दनैः।
एतत्तैलमरुंषीणां सिद्धमभ्यञ्जने हितम् ॥७७॥

द्विहरिद्राद्यं तैलम्।

दारुणे तु शिरां विध्येत् स्निग्धां स्विन्नां ललाटजाम् ।
अवपीडशिरोवस्तीनभ्यङ्गांश्चावचारयेत् ॥७८॥
कोद्रवाणां तृणक्षारपानीयं परिधावनम् ।
कार्य्यो दारुणके मूर्ध्नि प्रलेपो मधुसंयुतः ॥७९॥
पियालबीजमधुककुष्ठमिश्रैः ससैन्धवैः ।
काञ्जिकस्था त्रिसप्ताहं माषा दारुणकापहाः ॥८०॥
सह नीलोत्पलकेशरयष्टीमधुकतिलैः सदृशमामलकम् ।
चिरजातमपि शीर्षे दारुणरोगं शमं नयति ॥८१॥
त्रिफलाया रजोमांसीमार्कवोत्पलशारिवैः ।
ससैन्धवैः पचेत्तैलमभ्यङ्गाद्दुर्कृथिकां जयेत् ॥८२॥

त्रिफलाद्यं तैलम् ।

चित्रकं दन्तिमूलञ्च कोषातकीसमन्वितम् ।
कल्कं पिष्ट्वा पचेत्तैलं केशदद्रुविनाशनम् ॥८३॥
गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु ।
कण्डूदारुणहृत् कुष्ठकपालव्याधिनाशनम् ॥८४॥
भृङ्गराजत्रिफलोत्पलशारि लौहपुरीषसमन्वितकारि ।
तैलमिदं पचदारुणहारि कुञ्चितकेशघनस्थिरकारि ॥८५॥

भृङ्गराजतैलम् ।

प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ।
कार्षिकैस्तैलकुडवं तैर्द्विरामलकीरसः ।
साध्यः सप्रतिमर्षः स्यात् सर्वशीर्षगदापहः ॥८६॥
मालतीकरवीराग्निनक्तमालविपाचितम् ।
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम् ॥८७॥

इदं हि त्वरितं हन्ति दारुणं नियतं नृणाम् ॥८८॥

मालत्याद्यं तैलम्।

धात्रीआम्रमज्जलेपात् स्यात् स्थिरोदस्निग्धकेशता।
इन्द्रलुप्ते शिरां विद्ध्वा शिलाकाशीशतुत्थकैः ॥८९॥
लेपयेत् परितः कल्कैस्तैलञ्चाभ्यञ्जने हितम्।
कुटन्नटशिखीजातीकरञ्जकरवीरजैः ॥९०॥
अवगाढ़पदञ्चैव प्रच्छयित्वा पुनः पुनः।
गुञ्जाफलैश्चिरं लिम्पेत् केशभूमिं समन्ततः ॥९१॥
हस्तिदन्तमसीं कृत्वा मुख्यञ्चैव रसाञ्जनम्।
लोमान्यनेन जायन्ते नृणां पाणितलेष्वपि ॥९२॥
भल्लातकबृहतीफलगुञ्जामूलफलेभ्य एकेन।
मधुसहितेन विलिप्तं सुरपतिलुप्तं शमं याति ॥९३॥
बृहतीफलरसपिष्टं गुञ्जाफलमूलं चेन्द्रलुप्तस्य।
कनकनिघृष्टस्य सतो दातव्यं प्रच्छितस्य सदा ॥९४॥
घृष्टस्य कर्कशैः पत्रैरिन्द्रलुप्तस्य गुण्ठनम्।
चूर्णितैर्मरिचैः कार्य्यमिन्द्रलुप्तनिवारणम् ॥९५॥
छागक्षीररसाञ्जनपुटदग्धगजेन्द्रदन्तमसीलिप्ताः।
जायन्ते सप्तरात्रात् खल्वानामपि कुञ्चिताश्चिकुराः ॥९६॥
मधुकेन्दीवरमूर्वातिलाज्यगोक्षीरभृङ्गलेपेन।
अचिराद्भवन्ति घनकेशा दृढ़मूकायतास्तजवः ॥९७॥
स्नुहापयः पयोऽर्कस्य मार्कवो लाङ्गलीविषम्।
मूत्रमाजं सगोमूत्रं रक्तिका सेन्द्रवारुणी ॥९८॥
सिद्धार्थन्तीक्ष्णतैलञ्च गर्भं दत्त्वा विपाचितम्।
वह्निना मृदुना पक्वं तैलं खालित्यनाशनम् ॥९९॥

कूर्मपृष्ठसमानापि कन्याया रोमतस्करी ।
दिग्धा स्नानेन जायेत ऋक्षशारीरलोमशा ॥१००॥

वटाद्यं तैलम् ।

वटावरोहकेशिन्योश्चूर्णेनादित्यपाचितम् ।
गुडूचीस्वरसे तैलं चाभ्यङ्गात् केशरोपणम् ॥१०१॥

आदित्यपाकगुडूचीतैलम् ।

चन्दनं मधुकं मूर्वा त्रिफला नीलमुत्पलम् ।
कान्ता वटावरोहश्च गुडूची विसमेव च ॥१०२॥
लौहचूर्णं तथा केशी शारिवे द्वे तथैव च ।
मार्कवस्वरसेनैव तैलं मृद्वग्निना पचेत् ॥ १०३ ॥
शिरस्युत्पतिताः केशा जायन्ते घनकुञ्चिताः ।
दृढमूलाश्च स्निग्धाश्च तथा भ्रमरसन्निभाः ।
नस्येनाकालपलितं निहन्यात् तैलमुत्तमम् ॥ १०४ ॥

चन्दनाद्यं तैलम् ।

तैलं सयष्टीमधुकैः क्षीरे धात्रीफलैः शृतम् ।
नस्ये दत्तं जनयति केशान् श्मश्रूणि चाप्यथ ॥ १०५ ॥
त्रिफलानीलिनीपत्रं लौहं भृङ्गरजःसमम् ।
अवीमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम् ॥ १०६ ॥
त्रिफलाचूर्णसंयुक्तं लौहचूर्णं विनिक्षिपेत् ।
ईषत्पक्के नारीकेले भृङ्गराजरसान्विते ॥ १०७ ॥
मासमेकन्तु निक्षिप्य सम्यग्गर्भात् समुद्धरेत् ।
ततः शिरो मुण्डयित्वा लेपं दद्याद्भिषग्वरः ॥ १०८ ॥
संवेष्ट्य कदलीपत्रैर्मोचयेत् सप्तमे दिने ।
क्षालयेत् त्रिफलाक्वाथैः क्षीरमांसरसाशिनः ॥ १०९ ॥

कपालरञ्जनञ्चैतत् कृष्णीकरणमुत्तमम्।
उत्पलं पयसा सार्द्धं मासं भूमौ निधापयेत्॥ ११०॥
केशानां कृष्णकरणं स्नेहनञ्च विधीयते।
भृङ्गपुष्पं जवापुष्पं मेषीदुग्धप्रपेषितम्॥ १११॥
तेनैवालोड़ितं लौहपात्रस्थं भूम्यधः कृतम्।
सप्ताहादुद्धृतं पश्चात् भृङ्गराजरसेन तु॥ ११२॥
आलोड्याभ्यज्य च शिरो वेष्टयित्वा वसेन्निशाम्।
प्रातस्तु क्षालनं कार्य्यमेवं स्यान्मूर्द्धरञ्जनम्।
एवं सिन्दूरबालाम्बशङ्खभृङ्गरसैः क्रिया॥ ११३॥
नवदग्धशङ्खचूर्णं काञ्जिकसिक्तं हि सीसकं घृष्ट्वा।
लेपात् कचानर्कदलावबद्धान् शुभ्रान् करोति नीलतरान्॥११४
लोहमलामलकल्कैः सजवाकुसुमैर्नरः सदा स्नायी।
पलितानीह न पश्यति गङ्गास्नायीव नरकाणि॥ ११५॥
निम्बस्य वीजानि हि भावितानि
भृङ्गस्य तोयेन तथाशनस्य।
तैलन्तु तेषां विनिहन्ति नस्याद्
दुग्धान्नभोक्तुः पलितं समूलम्॥ ११६॥
निम्बस्य तैलं प्रकृतिस्थमेव
नस्ते निषिक्तं विधिना यथावत्।
मासेन गोक्षीरभुजो नरस्य
जराग्रभूतं पलितं निहन्ति॥ ११७॥
क्षीरात् समार्कवरसात् द्विप्रस्थे मधुकात् पले।
तैलस्य कुड़वं पक्वं तन्नस्यं पलितापहम्॥ ११८॥
आदित्यवल्लिमूलानि कृष्णशैरीयकस्य च।

सुरसस्य च पत्राणि फलं कृष्णाशनस्य च ॥ ११९ ॥
मार्कवं काकमाची च मधुकं देवदारु च ।
पृथग्दशपलांशानि पिप्पल्यस्त्रिफलाञ्जनम् ॥ १२० ॥
प्रपौण्डरीकं मञ्जिष्ठालोध्रं कृष्णागुरूत्पलम् ।
आम्रास्थिकर्दमः कृष्णो मृणाली रक्तचन्दनम् ॥ १२१ ॥
नीलिभल्लातकास्थीनि काशीशं मदयन्तिका ।
सोमराज्यशनः शस्त्रं कृष्णौ पिण्डीतचित्रकौ ॥ १२२ ॥
पुष्पाण्यर्जुनकाश्मर्य्योराम्रजम्बूफलानि च ।
पृथक् पञ्चपलैर्भागैः सुपिष्टैराढकं पचेत् ॥ १२३ ॥
वैभीतकस्य तैलस्य धात्रीरसचतुर्गुणम् ।
कुर्य्यादादित्यपाकं वा यावच्छुष्को भवेद्रसः ॥ १२४ ॥
लोहपात्रे ततः पूतं संशुद्धमुपयोजयेत् ।
पाने नस्तक्रियायाञ्च शिरोऽभ्यङ्गे तथैव च ॥ १२५ ॥
एतच्चाचुष्यमायुष्यं शिरसः सर्वरोगनुत् ।
महानीलमिति ख्यातं पलितघ्नमनुत्तमम् ॥ १२६ ॥

महानीलतैलम् ।

भृङ्गराजरसे पक्वं शिखिपित्तेन कल्कितम् ।
घृतं नस्येन पलितं हन्यात्सप्ताहयोगतः ॥ १२७ ॥

भृङ्गराजघृतम् ।

काञ्जिकपिष्टशेलुकमज्ज्ञि सच्छिद्रलौहगे ।
यदर्कतापात् पतति तैलं तन्नस्यमचणात् ॥ १२८ ॥
केशा नीलालिसङ्काशाः सद्यः स्निग्धा भवन्ति च ।
नयनश्रवणग्रीवादन्तरोगांश्च हन्त्यदः ॥ १२९ ॥
काशीशं रोचनातुल्यं हरितालं रसाञ्जनम् ।

अम्लपिष्टैः प्रलेपोऽयं वृषकच्छ्वहिपूतयोः। १२० ॥
पटोलपत्रत्रिफलारसाञ्जनविपाचितम्।
पीतं घृतं निहन्त्याशु कच्छामप्यहिपूतनाम् ॥ १२१ ॥
रजनीमार्कवमूलं पिष्टं शीतेन वारिणा तुल्यम्।
हन्ति विसर्पं लेपाद्दाहद्रवनामकं घोरम् ॥ १२२ ॥
नागकेशरचूर्णं वा शतधौतेन सर्पिषा।
पिष्ट्वा लेपो विधातव्यो दाहे हर्षे च पादयोः ॥१२३॥

इति क्षुद्ररोगचिकित्सा।

## अथ मुखरोगाधिकारः।

ओष्ठप्रकोपे वातोत्थे शाल्वनेनोपनाहनम्।
मस्तिष्के चैव नस्ये च तैलं वातहरैः शृतम्।
स्वेदोऽभ्यङ्गः स्नेहपानं रसायनमिहेष्यते ॥ १ ॥
श्रीवेष्टकं सर्जरसं गुग्गुलुं सुरदारु च।
यष्टिमधुकचूर्णञ्च विदध्यात् प्रतिसारणम् ॥ २ ॥
वेधं शिराणां वमनं विरेकं
तिक्तस्य पानं रसभोजनञ्च।
शीतान् प्रलेपान् परिषेचनञ्च
पित्तोपसृष्टेष्वधरेषु कुर्यात् ॥ ३ ॥
पित्तरक्ताभिघातोत्थान् जलौकाभिरुपाचरेत्।
पित्तविद्रधिवच्चापि क्रियां कुर्यादशेषतः ॥ ४ ॥
शिरोविरेचनं धूमः स्वेदः कवडधारणम्।
हृतरक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥ ५ ॥
त्रिकटुः सर्जिकाक्षारः क्षारश्च यावशूकजः।

क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ।
मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः ॥ ६ ॥
प्रियङ्गुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणम् ।
हितञ्च त्रिफलाचूर्णं मधुयुक्तं प्रलेपनम् ॥ ७ ॥
सर्जरसकनकगैरिकधन्याकघृततैलसिन्धुसंयुतम् ।
सिद्धं सिक्थकमधुरे स्फुटितोच्चटिते व्रणं हरति ॥८॥

इत्योष्ठगता चिकित्सा ।

शीतादे हृतरक्ते तु तोये नागरसर्षपान् ।
निःक्वाथ्य त्रिफलाञ्चापि कुर्य्याद् गण्डूषधारणम् ॥९॥
प्रियङ्गवश्च मुस्ता च त्रिफला च प्रलेपनम् ॥१०॥

कुष्ठं दार्व्वीमब्दलोध्रं समङ्गा
पाठा तिक्ता तेजनी पीतिका च ।
चूर्णं शस्तं घर्षणं तद् द्विजानां
रक्तस्रावं हन्ति कण्डूं रुजाश्च ॥११॥

चलदन्तस्थिरकरं कार्य्यं वकुलचर्व्वणम् ।
आर्त्तगलदलक्वाथगण्डूषो दन्तचालनुत् ॥१२॥
दन्तचाले हितं श्रेष्ठं तिलोग्राचर्व्वणं सदा ।
दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम् ॥१३॥
सपञ्चलवणः क्षारः सक्षौद्रः प्रतिसारणम् ।
दन्तानां तोदहर्षे च वातघ्नाः कवड़ा हिताः ॥१४॥
दन्तचाले तु गण्डूषो वकुलत्वक्कृतो हितः ।
माक्षिकं पिप्पलीसर्पिर्म्मिश्रितं धारयेन्मुखे ॥१५॥
दन्तशूलहरं प्रोक्तं प्रधानमिदमौषधम् ।
विस्राविते दन्तवेष्टे व्रणं तु प्रतिसारयेत् ॥१६॥

लोध्रपत्तुङ्गमधुकलाचाचूर्णैर्मधूत्तरैः।
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्करा: ॥१७॥
शैशिरे हृतरक्ते च लोध्रमुस्तरसाञ्जनैः।
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ॥१८॥
क्रियां परिदरे कुर्य्याच्छीतादोक्तां विचक्षणः।
संशोध्योभयतः कार्य्यं शिरश्चोपकुशे ततः ॥१९॥
काकोडुम्बरिकागोजीपत्रैर्विस्रावयेद् भिषक्।
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत् ॥२०॥
पिप्पल्यः सर्षपाः श्वेता नागरं नैचुलं फलम्।
सुखोदकेन संगृह्य कवड़ं तस्य योजयेत् ॥२१॥
शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत्।
ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः ॥२२॥
उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत्।
क्रिमिदन्तकवच्चात्र विधिः कार्य्यो विजानता।
छित्त्वाधिमांसं सक्षौद्रैरेतैश्चूर्णैरुपाचरेत् ॥२३॥
पाठावचातेजोवतीसर्जिकायावशूकजैः।
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्त्तितः ॥२४॥
पटोलनिम्बत्रिफलाकषायश्चात्र धावने।
शिरोविरेकश्च हितो धूमो वैरेचनश्च यः ॥ २५ ॥
नाडीव्रणहरं कर्म दन्तनाड़ीषु कारयेत्।
यं दन्तमधिजायेत नाड़ी तद्दन्तमुद्धरेत् ॥ २६ ॥
छित्त्वाधिमांसं शस्त्रेण यदि नोपरिजो भवेत्।
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा ॥ २७ ॥
गतिर्हि नस्ति हन्वस्थि दशने समुपेक्षिते।

तस्मात् समूलं दशनमुद्धरेङ्गग्नमस्थि च ॥२८॥
उद्धृते तूत्तरे दन्ते शोणितं संप्रसिच्यते ।
रक्ताभियोगात् पूर्वोक्ता घोरा रोगा भवन्ति च ॥२९॥
चलमप्युत्तरं दन्तमतो नापहरेद्भिषक् ।
कषायं जातीमदनकटुकास्वादुकण्टकैः ॥३०॥
लोध्रखदिरमञ्जिष्ठायष्ट्याह्वैश्चापि यत् कृतम् ।
तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिम् ॥३१॥
कषायं परतः कृत्वा पिष्ट्वा लोध्रादिकल्कितम् ।
कण्टकीमदनो योज्यः स्वादुकण्टो विकङ्कतः ॥३२॥
सुखोष्णाः स्नेहकवडाः सर्पिषस्तैहृतस्य वा ।
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥३३॥
स्नैहिकश्च हितो धूमो नस्यं स्नैहिकमेव च ।
अहिंसन् दन्तमूलानि शर्करामुद्धरेद्भिषक् ॥३४॥
लाक्षाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत् ।
दन्तहर्षक्रियाश्चापि कुर्य्यान्निरवशेषतः ॥३५॥
कपालिकाः कृच्छ्रसाध्यास्तत्राप्येषा क्रिया मता ।
जयेद्विस्रावणैः स्विन्नमचलं क्रिमिदन्तकम् ॥३६॥
तथावपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ।
भद्रदार्व्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ।
हिङ्गु सोष्णन्तु मतिमान् क्रिमिदन्तेषु दापयेत् ॥३७॥
बृहतीभूमिकदम्बकपञ्चाङ्गुलिकण्टकारिक्वाथैः ।
गण्डूषस्तैलयुक्तः क्रिमिदन्तकवेदनाशमनः ॥ ३८ ॥
नीलीवायसजङ्घास्नुकदुग्धीनान्तु मूलमेकैकम् ।
सञ्चर्व्य दशनविधृतं दशनक्रिमिपातनं प्राहुः ॥३९॥

चलमुद्धृत्य वा स्थानं दहेत् तु शुषिरस्य वा।
ततो विदारीयष्ट्याह्वशृङ्गाटककशेरुभिः।
तैलं दशगुणं क्षीरं सिद्धं नस्ये तु योजयेत् ॥४०॥

विदार्य्यादि तैलम्।

हनुमोक्षे समुद्दिष्टा कार्य्या चार्दितवत् क्रिया।
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ॥४१॥
तथातिकठिनान् भक्षान् दन्तरोगी विवर्जयेत्।
सप्तच्छदार्कदुग्धाभ्यां पूरणं क्रिमिदन्तनुत् ॥४२॥
जीवनीयेन दुग्धेन क्रिमिरन्ध्रप्रपूरणम्।
अर्कक्षीरेणैवमेकयोगः सद्भिः प्रशस्यते ॥४३॥
द्रोणपुष्पीद्रवः फेनमधुतैलसमायुतः।
क्रिमिदन्तविनाशाय कार्य्यं कर्णस्य पूरणम् ॥४४॥
पटोलकटुकाव्योषपाठासैन्धवभार्गिकैः।
चूर्णैर्मधुयुतो लेपः कवड़ो मधुतैलकैः।
जिह्वारोगेषु कर्त्तव्यं विधानमिदमौषधम् ॥४५॥
मुस्तामधुकनिर्गुण्डीखदिरोशीरदारुभिः।
समञ्जिष्ठाविडङ्गैश्च सिद्धं तैलं हरेत् क्रिमीन् ॥४६॥

इति दन्तगता चिकित्सा।

ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम्।
कण्टकेष्वनिलोत्थेषु तत् कार्य्यं भिषजा खलु ॥ ४७ ॥
पित्तजेषु निर्दृष्टेषु निस्रुते दुष्टशोणिते।
प्रतिसारणगण्डूषावस्यञ्च मधुरं हितम् ॥ ४८ ॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये।
पिप्पल्यादिर्मधुयुतः कार्य्यन्तु प्रतिसारणम् ॥ ४९ ॥

गृह्णीयात् कवलान् वापि गौरसर्षपसैन्धवैः ।
पटोलनिम्बवार्त्ताकुक्षारयूषैश्च भोजयेत् ॥ ५० ॥
जिह्वाजाड्यं चिरजं माणकभस्मलवणघर्षणं हन्ति ।
ईषत्स्नुक्क्षीराक्तं जम्बीराद्यम्लचर्वणं वापि ॥ ५१ ॥
कर्कटाङ्घ्रिक्षीरपक्वघृताभ्यङ्गेन नश्यति ।
दन्तशब्दः कर्कटाङ्घ्रिलेपाद्वा दन्तयोर्जितात् ॥ ५२ ॥
उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत् ।
शिरोविरेकगण्डूषधूमैश्चैनामुपाचरेत् ॥ ५३ ॥
व्योषक्षाराभयावह्निचूर्णमेतत् प्रघर्षणम् ।
उपजिह्वाप्रशान्त्यर्थमेतैस्तैलं विपाचयेत् ॥ ५४ ॥
छित्वा घर्षेद्गलशुण्डीं व्योषोग्राक्षौद्रसिन्धुजैः ।
कुष्ठोषणवचासिन्धुकणापाठाप्लवैरपि ॥ ५५ ॥
सक्षौद्रैर्भिषजा कार्य्यं गलशुण्ड्या विघर्षणम् ।
उपनासाव्यधो हन्ति गलशुण्डीमशेषतः ॥ ५६ ॥
गलशुण्डीहरं तद्वच्छेफालीमूलचर्वणम् ।
वचामतिविषां पाठां रास्नां कटुकरोहिणीम् ।
निःक्वाथ्य पिचुमर्दञ्च कवलं तत्र योजयेत् ॥ ५७ ॥

इति जिह्वागता चिकित्सा ।

क्षारसिद्धेषु मुद्गेषु यूषाश्चाप्यशने हिताः ।
तुण्डीकेर्य्यध्रुषे कूर्मे संघाते तालुपुप्पुटे ॥ ५८ ॥
एष एव विधिः कार्य्यो विशेषः शस्त्रकर्मणि ।
तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम् ॥ ५९ ॥
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ।
साध्यानां रोहिणीनान्तु हितं शोणितमोक्षणम् ॥६०॥

छर्दनं धूमपानञ्च गण्डूषो नस्तकर्म्म च।
वातिकीन्तु हृते रक्ते लवणैः प्रतिसारयेत्॥ ६१॥
सुखोष्णांस्तैलकवड़ान् धारयेच्चाप्यभिक्षणशः।
पतङ्गशर्कराक्षौद्रैः पैत्तिकीं प्रतिसारयेत्॥ ६२॥
द्राक्षापरूषकक्काथो हितश्च कवलग्रहे।
आगारधूमकटुकैः कफजां प्रतिसारयेत्॥ ६३॥
श्वेताविड़ङ्गदन्तीषु सिद्धं तैलं ससैन्धवम्।
नस्तकर्म्मणि दातव्यं कवलश्च कफोच्छ्रये॥६४॥
पित्तवत् साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम्।
विस्राव्य कण्ठशालूकं साधयेत् तुण्डिकेरिवत्॥ ६५॥
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः।
उपजिह्विकवच्चापि साधयेदधिजिह्विकाम्॥ ६६॥
उन्नाम्य जिह्वामाकृष्य वड़िशेनाधिजिह्विकाम्।
छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्घर्षणादिभिः॥ ६७॥
एकवृन्दन्तु विस्राव्य विधिं शोधनमाचरेत्।
शिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत्॥ ६८॥
अमर्मस्थं सुपक्वञ्च भेदयेद्गलविद्रधिम्।
कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णैर्नस्यादिकर्म च॥ ६९॥
क्वाथपानन्तु दार्व्वीत्वङ्निम्बताक्ष्र्यकलिङ्गजम्।
हरीतकीकषायो वा पेयो माक्षिकसंयुतः॥ ७०॥
कटुकातिविषादारुपाठामुस्तकलिङ्गकाः।
गोमूत्रक्वथिताः पेयाः कण्ठरोगविनाशनाः॥ ७१
गृहधूमो यवक्षारः पाठाव्योषरसाञ्जनम्।
तेजोह्वात्रिफलालोहं चित्रकश्चेति चूर्णितम्॥ ७२॥

सक्षौद्रं धारयेदेतत् गलरोगविनाशनम् ।
कालकं नाम तच्चूर्णं दन्तजिह्वास्यरोगनुत् ॥ ७३ ॥

कालकं चूर्णम् ।

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
सर्ज्जिकाक्षारतुल्यांशैश्चूर्णोऽयं गलरोगनुत् ॥ ७४ ॥
मनःशिलायवक्षारौ हरितालं ससैन्धवम् ।
दार्व्वीत्वक् चेति तच्चूर्णं माक्षिकेण समायुतम् ॥ ७५ ॥
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत् ।
मुखरोगेषु च श्रेष्ठं पीतकन्नाम कीर्त्तितम् ॥ ७६ ॥

पीतकं चूर्णम् ।

यवाग्रजं तेजवतीं सपाठां
रसाञ्जनं दारु निशां सकृष्णाम् ।
क्षौद्रेण कुर्य्याद् गुडिकां मुखेन
तां धारयेत् सर्वगलामयेषु ॥ ७७ ॥
दशमूलं पिबेदुष्णां यूषं मूलकुलत्थयोः ।
क्षीरेक्षुरसगोमूत्रदधिमस्त्वम्लकाञ्जिकैः ॥ ७८ ॥
विदध्यात् कवलान् वीक्ष्य दोषं तैलघृतैरपि ।
पञ्चकोलकतालीशपत्रैलामरिचत्वचः ॥ ७९ ॥
पलाशमुष्ककक्षारयवक्षाराश्च चूर्णिताः ।
गुडे पुराणे क्वथिते द्विगुणे गुडिकाः कृताः ॥ ८० ॥
कर्कन्धुमात्राः सप्ताहं स्थिता मुष्ककभस्मनि ।
कण्ठरोगेषु सर्वेषु धार्य्याः स्युरमृतोपमाः ॥ ८१ ॥

क्षारगुडिका ।

इति कण्ठगता चिकित्सा ।

मूत्रस्त्रिग्धां शिवां तुल्यां मधुरीकुष्ठतालकैः।
अभ्यस्य मुखरोगांस्तु जयेच्चिरसतामपि ॥ ८२ ॥
वातात्सर्वसरश्चूर्णैर्लवणैः प्रतिसारयेत्।
तैलं वातहरैः सिद्धं हितं कवडनस्ययोः॥ ८३ ॥
पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः।
सर्वपित्तहरः कार्य्यो विधिर्मधुरशीतलः ॥ ८४ ॥
प्रतिसारणगण्डूषान् धूमं संशोधनानि च।
कफात्मके सर्वसरे क्रमं कुर्य्यात् कफापहम् ॥८५॥
मुखपाके सिरावेधः शिरःकायविरेचनम्।
कार्य्यश्च बहुधा नित्यं जातीपत्रस्य चर्वणम् ॥८६॥
जातीपत्रामृताद्राक्षायासदार्वीफलत्रिकैः।
क्वाथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत्॥ ८७॥
कृष्णजीरककुष्ठेन्द्रयवानां चूर्णतस्त्र्यहात्।
मुखपाके व्रणक्लेददौर्गन्ध्यमुपशाम्यति ॥८८॥
रसाञ्जनं लोध्रमथाभयञ्च मनःशिलानागरगैरिकञ्च।
पाठा हरिद्रा गजपिप्पली च स्याद्धारणं क्षौद्रयुतं मुखस्य॥८९॥
पटोलनिम्बजम्ब्वाम्रमालतीनवपल्लवाः।
पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ॥९०॥
पञ्चवल्ककषायो वा त्रिफलाक्वाथ एव वा।
मुखपाकेषु सक्षौद्रः प्रयुज्यो मुखधावने ॥९१॥
स्वरसः क्वथितो दार्व्या घनीभूतो रसक्रिया।
सक्षौद्रामुखरोगासृक्दोषनाडीव्रणापहा ॥९२॥
सप्तच्छदोशीरपटोलमुस्तहरीतकीतिक्तकरोहिणीभिः।
यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत् पाकहरं मुखस्य ॥९३॥

पटोलशुण्ठीत्रिफलाविशाला-
त्रायन्तितिक्ताद्विनिशामृतानाम् ।
पीतः कषायो मधुना निहन्ति
मुखे स्थितश्चास्यगदानशेषान् ॥९४॥

क्वथितास्त्रिफलापाठामृद्वीकाजातिपल्लवाः ।
निषेव्या भक्षणीया वा त्रिफला मुखपाकहा ॥९५॥
तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ।
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहपाकनुत् ।
तैलेन काञ्जिकेनाथ गण्डूषश्चूर्णदाहहा ॥९६॥
घनकुष्ठैलाधान्यकयष्टीमध्वेलवालुकाकवड़ः ।
वदनेऽतिपूतिगन्धं हरति सुरालशुनगन्धञ्च ॥९७॥
तुलां धृतां नीलसहचरस्य द्रोणेऽम्भसः संश्रपयेद्यथावत् ।
पूत्वा चतुर्भागरसे तु तैलं पचेच्छनैरर्द्धपलप्रयुक्तैः ॥९८॥

कल्कैरनन्ताखदिरारिमेद-
जम्ब्वाम्रयष्टीमधुकोत्पलानाम् ।
तत्तैलमाशु व धृतं मुखेन
स्थैर्य्यं द्विजानां विदधाति सद्यः ॥९९॥

महासहचरतैलम् ।

इरिमेदत्वक्पलशतमभिनवमापोथ्य खण्डशः कृत्वा ।
तोयाढ़कैश्चतुर्भिर्निःक्वाथ्य चतुर्थशेषेण ॥१००॥
तेन क्वाथेन मतिमान् तैलस्यार्द्धाढ़कं विपचेच्छनैः ।
कल्कैरक्षसमांशैर्मञ्जिष्ठालोध्रमधुकानाम् ॥१०१॥
इरिमेदखदिरकट्फललाक्षान्यग्रोधमुस्तसूक्ष्मैलानाम् ।
कर्पूरागुरुपद्मकलवङ्गकक्कोलजातीफलानाम् ॥१०२॥

पत्तङ्गगैरिकवराङ्गकुसुमधातकीनाञ्च ।
सिद्धं भिषग्विदध्यादिदं मुखोत्थेषु रोगेषु ॥१०३॥
परिशीर्णदन्तविद्रधिशैशिरशीतादन्तहर्षेषु ।
क्रिमिदन्तदारणचलितप्रदुष्टमांसावशीर्णेषु ।
मुखदौर्गन्ध्ये कार्य्यं प्रागुक्तेष्वामयेषु तैलमिदम् ॥१०४॥

इरिमेदाद्यं तैलम् ।

तैलं लाक्षारसं क्षीरं पृथक् प्रस्थं समं पचेत् ।
चतुर्गुणेऽरिमक्वाथे द्रवैश्च पलसम्मितैः ॥ १०५ ॥
लोध्रकट्फलमञ्जिष्ठापद्मकेशरपद्मकैः ।
चन्दनोत्पलयष्ट्याह्वैः तैलं गण्डूषधारणम् ॥ १०६ ॥
दालनं दन्तचालञ्च हनुमोक्षं कपालिकाम् ।
शीतादं पूतिवक्त्रञ्च अरुचिं विरसास्यताम् ।
हन्यादास्यगदानेतान् कुर्य्याद्दन्तानपि स्थिरान् ॥१०७॥

लाक्षाद्यं तैलम् ।

वकुलस्य फलं लोध्रं वज्रवल्लीकुरुण्टकम् ।
चतुरङ्गुलबब्बोलवाजिकर्णैरिमाशनम् ॥ १०८ ॥
एषां कषायकल्काभ्यां तैलं पक्कं मुखे धृतम् ।
स्थैर्य्यं करोति चलतां दन्तानां धावनेन च ॥ १०९ ॥

वकुलाद्यं तैलम् ।

एलालतालवनिकाफलशीतकोष-
कोलद्विकानि खदिरस्य कृते कषाये ।
तुल्यांशकानि दशभागमिते निधाय
प्रोज्झितकेतकपुटे पुटवद्विपाच्य ॥ ११० ॥
प्रागंशतुल्यशशिनाभितदेकसंख्य

पिष्ट्वा नवेन सहकाररसेन हस्तौ ।
लिप्त्वा यथाभिलषितां गुड़िकां विदध्यात्
स्त्रीपुंसयोर्वदनसौरभबन्धुभूताम् ॥ १११ ॥

सहकारगुड़िका ।

खदिरस्य तुलां सम्यग्जलद्रोणे विपाचयेत् ।
शेषेऽष्टभागे तत्रैव प्रतिवापं प्रदापयेत् ॥ ११२ ॥
जातीकर्पूरपूगानि कक्कोलकफलानि च ।
इत्येषा गुड़िका कार्य्या मुखसौभाग्यवर्द्धिनी ।
दन्तौष्ठमुखरोगेषु जिह्वातालामयेषु च ॥ ११३ ॥

खल्पखदिरवटिका ।

गायत्रीसारतुलयेरिमवल्कलानां
सार्द्धं तुलायुगलमम्बु घटैश्चतुर्भिः ।
निःक्वाथ्य पादमवशिष्टं सुवस्त्रपूतं
भूयः पचेदथ शनैर्मृदुपावकेन ॥ ११४ ॥
तस्मिन् घनत्वमुपगच्छति चूर्णमेषां
श्लक्ष्णं क्षिपेच्च कवडग्रहभागिकानाम् ।
एलामृणालसितचन्दनचन्दनाम्बु-
श्यामालमालविकषाघमलोहयष्टी ॥ ११५ ॥
लज्जाफलत्रयरसाञ्जनधातकीभ-
श्रीपुष्पगैरिककटङ्कटकट्फलानाम् ।
पद्माह्वलोध्रवटरोहयवासकानां
मांसीनिशासुरभिवल्कलसंयुतानाम् ॥११६॥
कक्कोलजातीफलकोषलवङ्गकानि
चूर्णीकृतानि विदधीत पलांशकानि ।

शीतेऽवतार्य्य घनसारचतुःपलञ्च
क्षिप्त्वा कलायसदृशीर्वटिकाः प्रकुर्य्यात् ॥११७॥
शुष्का मुखे विनिहिता विनिवारयन्ति
रोगान् गलौष्ठरसनाद्विजतालुजातान्।
कुर्य्युर्मुखे सुरभितां पटुतां रुचिञ्च
स्थैर्य्यं परं दशनगं रसनालघुत्वम् ॥११८॥

बृहत्खदिरवटिका।

इति मुखरोगचिकित्सा।

## अथ कर्णरोगाधिकारः।

कपित्थमातुलुङ्गाम्लशृङ्गवेररसैः शुभैः।
सुखोष्णैः पूरयेत् कर्णं कर्णशूलोपशान्तये ॥१॥
शृङ्गवेरञ्च मधु च सैन्धवं तैलमेव च।
कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥२॥
लशुनार्द्रकशिग्रूणां सुरङ्ग्या मूलकस्य च।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे।
समुद्रफेनचूर्णेन युक्त्या वाप्यवचूर्णयेत् ॥३॥
आर्द्रकसूर्य्यावर्त्तकशोभाञ्जनमूलमूलकस्वरसाः।
मधुतैलसैन्धवयुताः पृथगुष्णाः कर्णशूलहराः ॥४॥
शोभाञ्जनकनिर्य्यासस्तिलतैलेन संयुतः।
व्यक्तोष्णः पूरणः कर्णे कर्णशूलोपशान्तये ॥५॥
अष्टानामपि मूत्राणां मूत्रेणान्यतमेन च।
कोष्णेन पूरयेत् कर्णौ कर्णशूलोपशान्तये ॥६॥
अश्वत्थपत्रखल्वं वा विधाय बहुपत्रकम्।

तैलाक्तमङ्गारपूर्णं विदध्याच्छ्रवणोपरि ॥७॥
यत्तैलं च्यवते तस्मात् खल्वादङ्गारतापितात् ।
तत् प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम् ॥८॥
अर्कपत्रपुटे दग्धस्तु स्नुहीपत्रभवो रसः ।
कटुष्णं पूरणादेव कर्णशूलनिवारणः ॥९॥
महतः पञ्चमूलस्य काण्डान्यष्टाङ्गुलानि च ।
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत् ततः ॥१०॥
यत्तैलं च्यवते तेभ्यः सुखोष्णं तत् प्रयोजयेत् ।
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम् ॥११॥
एवं कुर्य्याद्भद्रकाष्ठे कुष्ठे काष्ठे च सारले ।
मतिमान् दीपिकातैलं कर्णशूलनिवारणम् ॥१२॥

अर्कस्य पत्रं परिणामपीत-
माज्येन लिप्तं शिखिनावतप्तम् ।
आपीड्य तोयं श्रवणे निषिक्तं
निहन्ति शूलं बहुवेदनञ्च ॥१३॥

तीव्रशूलातुरे कर्णे सशब्दे क्लेदवाहिनि ।
वस्तमूत्रं क्षिपेत् कोष्णं सैन्धवेनावचूर्णितम् ॥ १४ ॥
वंशावलेखसंयुक्ते मूत्रे वाजाविके भिषक् ।
तैलं पचेत् तेन कर्णं पूरयेत् कर्णशूलिनः ॥ १५ ॥
हिङ्गुतुम्बुरुशुण्ठीभिः साध्यं तैलन्तु सार्षपम् ।
कर्णशूले प्रधानन्तु पूरणं हितमुच्यते ॥ १६ ॥
बालमूलकशुण्ठीनां क्षारो हिङ्गु सनागरम् ।
शतपुष्पावचाकुष्ठं दारुशिग्रुरसाञ्जनम् ॥ १७ ॥
सौवर्चलं यवक्षारः सर्जिकोद्भिदसैन्धवम् ।

भूर्जग्रन्थिविड़ं मुस्तं मधुशुक्तं चतुर्गुणम् ॥ १८ ॥
मातुलुङ्गरसश्चैव कदल्या रस एव च।
तैलमेभिर्विपक्तव्यं कर्णशूलहरं परम् ॥ १९ ॥
वाधिर्य्यं कर्णनादश्च पूयास्रावश्च दारुणः।
पूरणादस्य तैलस्य क्रिमयः कर्णसंश्रिताः ॥ २० ॥
क्षिप्रं विनाशं गच्छन्ति कृष्णात्रेयस्य शासनात्।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् ॥ २१ ॥
मधुप्रधानं शुक्तन्तु मधुशुक्तं तथापरम्।
जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम् ॥ २२ ॥
मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत्।
मासेन तज्जातरसं मधुशुक्तमुदाहृतम् ॥ २३ ॥

क्षारतैलम्।

कर्णनादे कर्णक्ष्वेडे कटुतैलेन पूरणम्।
नादवाधिर्य्ययोः कुर्य्यात् कर्णशूलोक्तमौषधम् ॥ २४ ॥
अपामार्गक्षारजले तत्कृतकल्केन साधितं तिलजम्।
अपहरति कर्णनादं वाधिर्य्यञ्चापि पूरणतः ॥ २५ ॥

अपामार्गक्षारतैलम्।

सर्जिकामूलकं शुष्कं हिङ्गुकृष्णामहौषधम्।
शतपुष्पा च तैस्तैलं पक्वं शुक्तचतुर्गुणम्।
प्रणादशूलवाधिर्य्यं स्रावञ्चाशु व्यपोहति ॥ २६ ॥

सर्जिकाद्यं तैलम्।

दशमूलीकषायेण तैलप्रस्थं विपाचयेत्।
एतत्कल्कं प्रदायैव वाधिर्य्ये परमौषधम् ॥२७॥

दशमूलीतैलम्।

फलं विल्वस्य मूत्रेण पिष्ट्वा तैलं विपाचयेत् ।
साजक्षीरं हन्ति हरेद्बाधिर्य्यं कर्णपूरणे ॥२८॥

विल्वतैलम् ।

एष एव विधिः कार्य्यः प्रणादे नस्यपूर्वकः ।
गुड़नागरतोयेन नस्यं स्यादुभयोरपि ॥२९॥
चूर्णं पञ्चकषायाणां कपित्थरससंयुतम् ।
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ॥ ३० ॥
मालतीदलरसमधुना पूरितमथवा गवां मूत्रैः ।
दूरेण परित्यज्यते च श्रवणयुगं पूतिरोगेण ॥ ३१ ॥
हरितालं सगोमूत्रं पूरणं पूतिकर्णजित् ।
सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः ।
मधुना संयुतः साधु कर्णस्रावे प्रशस्यते ॥ ३२ ॥

जम्ब्वाम्रपत्रं तरुणं समांशं
कपित्थकार्पासफलञ्च सार्द्रम् ।
क्षुण्णारसं तं मधुना विमिश्रं
स्रावापहं संप्रवदन्ति तज्ज्ञाः ॥ ३३ ॥
एतैः शृतं निम्बकरञ्जतैलं
ससार्षपं स्रावहरं प्रदिष्टम् ॥ ३४ ॥

जम्ब्वाद्यं तैलम् ।

पुटपाकविधिस्विन्नहस्तिविड्जातगोण्डकः ।
रसः सतैलसिन्धूत्थः कर्णस्रावहरः परः ॥ ३५ ॥
जम्बूकस्य तु मांसेन कटुतैलं विपाचयेत् ।
तस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति ॥ ३६ ॥
निशागन्धपले पक्वं कटुतैलं पलाष्टकम् ।

भूस्तूरपत्रजरसे कर्णनाड़ी जिदुत्तमम् ॥ ३७ ॥

नाड़ीशोधनतैलम् ।

अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ।
ततो विरिक्तशिरसः क्रियां प्राप्तां समाचरेत् ॥ ३८ ॥
कर्णपाकस्य भैषज्यं कुर्य्यात् क्षतविसर्पवत् ।
नाडीस्वेदोऽथ वमनं धूममूर्द्धविरेचनम् ॥ ३९ ॥
विधिश्च कफहा सर्वः कर्णकण्डूं व्यपोहति ।
क्लेदयित्वा तु तैलेन स्वेदेन प्रविलाप्य च ॥ ४० ॥
शोधयेत् कर्णगूथन्तु भिषक् सम्यक् शलाकया ।
निर्गुण्डीस्वरसस्तैलं सिन्धुधूमरजो गुड़ः ॥ ४१ ॥
पूरणात् पूतिकर्णस्य शमनो मधुसंयुतः ।
जातिपत्ररसे तैलं विपक्वं पूतिकर्णजित् ॥ ४२ ॥
वरुणार्ककपित्थाम्रजम्बूपत्रवसाधितम् ।
पूतिकर्णापहं तैलं जातीपत्ररसेन वा ॥ ४३ ॥
सूर्य्यावर्त्तकस्वरसं सिन्धुवाररसन्तथा ।
लाङ्गलीमूलजरसं त्र्यूषणेनावचूर्णितम् ॥ ४४ ॥
पूरयेत् क्रिमिकर्णन्तु जन्तूनां नाशनं परम् ।
क्रिमिकर्णकनाशार्थं क्रिमिघ्नं योजयेद्विधिम् ॥ ४५ ॥
वार्त्ताकुधूमश्च हितः सर्षपस्नेह एव च ।
हलिसूर्य्यावर्त्तव्योषस्वरसेनातिपूरिते ॥ ४६ ॥
कर्णे पतन्ति सहसा सर्वास्तु क्रिमिजातयः ।
नीलवुन्नारसस्तैलसिन्धुकाञ्जिकसंयुतः ॥ ४७ ॥
कदुष्णः पूरणात् कर्णे निःशेषः क्रिमिपातनः ।
धूपनः कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ॥ ४८ ॥

राजवृक्षादितोयेन सुरसादिजलेन वा ।
कर्णप्रक्षालनं कार्य्यं चूर्णैरेतैः प्रपूरणम् ॥ ४९ ॥
स्रुष्टं रसाञ्जनं नार्य्याः क्षीरेण क्षौद्रसंयुतम् ।
प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके ॥५०॥
कुष्ठहिङ्गुवचादारुशताह्वाविश्वसैन्धवैः ।
पूतिकर्णापहं तैलम् वस्तमूत्रेण साधितम् ॥५१॥
कुष्ठाद्यं तैलम् ।
विद्रधौ चापि कुर्वीत विद्रध्युक्तं हि भेषजम् ।
शतावरीवाजिगन्धापयस्यैरण्डवीजकैः ॥५२॥
तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत् परम् ।
गुञ्जाचूर्णयुते जाते माहिषे क्षीर उद्धृतम् ॥५३॥
नवनीतं तदभ्यङ्गात् कर्णपालिविवर्द्धनम् ।
विषगर्भं निक्ततुम्बीतैलमष्टगुणे खरात् ॥५४॥
मूत्रे पक्वं तदभ्यङ्गात् कर्णपालिविवर्द्धनम् ।
कल्केन जीवनीयेन तैलं पयसि साधितम् ॥५५॥
आनूपमांसक्वाथेन पालीपोषणवर्द्धनम् ।
माहिषनवनीतयुक्तं सप्ताहं धान्यराशिपरिवासितम् ॥५६
नवमुषलिकन्दचूर्णं वृद्धिकरं कर्णपालीनाम् ।
कर्णस्य दुर्व्यधे भूते संरम्भो वेदना भवेत् ॥५७॥
तत्र दुर्व्यधरोहार्थं लेपो मध्वाज्यसंयुतैः ।
मधुकयवमञ्जिष्ठारुवुमूलैः समन्ततः ॥५८॥
अनेकधातुच्छिन्नस्य सन्धिः कर्णस्य वै भिषक् ।
यो यथाभिनिविष्टः स्यात्तन्तथा विनियोजयेत् ॥५९॥
धान्याम्लोष्णोदकाभ्यान्तु सेको वातेन दूषिते ।

रक्तपित्तेन पयसा श्लेष्मणा तृणवारिणा ॥ ६० ॥
ततः सीव्यस्थिरं कुर्य्यात् सन्धिं बन्धेन वा पुनः ।
मध्वाज्येन ततोऽभ्यज्य पिचुना सन्धिवेष्टकम् ।
कपालचूर्णेन ततश्चूर्णयेत् पथ्ययाथवा ॥६१॥
इति कर्णरोगचिकित्सा ।

## अथ नासारोगाधिकारः ।

पञ्चमूलीशृतं क्षीरं स्याच्चित्रकहरीतकी ।
सर्पिर्गुडः षडङ्गश्च यूषः पीनसशान्तये ॥ १ ॥
व्योषचित्रकतालीशतिन्तिडीचाम्लवेतसम् ।
सचव्याजाजीतुल्यांशमेलात्वक्पत्रपादिकम् ॥ २ ॥
व्योषादिकं चूर्णमिदं पुराणगुड़संयुतम् ।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥ ३ ॥
व्योषादिचूर्णम् ।
पाठाद्विरजनीमूर्वापिप्पलीजातीपल्लवैः ।
दन्त्या च तैलं संसिद्धं नस्यं सम्यगपीनसे ॥ ४ ॥
व्याघ्रीदन्तीवचाशिग्रुसुरसव्योषसैन्धवैः ।
पाचितं नावनं तैलं पूतिनासागदं जयेत् ॥ ५ ॥
त्रिकटुविडङ्गसैन्धवबृहतीफलशिग्रुसुरसदन्तीभिः ।
तैलं गोजलसिद्धं नस्यं स्यात् पूतिनस्यस्य ॥ ६ ॥
कलिङ्गहिङ्गुमरिचलाक्षासुरसकट्फलैः ।
कुष्ठोग्राशिग्रुजन्तुघ्नैरवपीड़ः प्रशस्यते ॥ ७ ॥
तैरेव मूत्रसंयुक्तैः कटुतैलं विपाचयेत् ।
अपीनसे पूतिनस्ये शमनं कीर्त्तितं परम् ॥ ८ ॥

नासापाके पित्तहरं विधानं कार्य्यं सर्वं बाह्यमभ्यन्तरञ्च ।
हरेद्रक्तं क्षीरिवृक्षत्वचश्च योज्याः सेके सघृताश्च प्रदेहाः ॥९॥

पूयास्रे रक्तपित्तघ्नाः कषाया नावनानि च ।
शुण्ठीकुष्ठकणाविल्वद्राक्षाकल्ककषायवत् ।
साधितं तैलमाज्यं वा नस्यं स्रवथुरुक्प्रणुत् ॥ १० ॥

दीप्ते रोगे पैत्तिके संविधानं
सर्वं कुर्य्यान्मधुरं शीतलञ्च ।
नासानाहे स्नेहपानं प्रधानं
स्निग्धा धूमा मूर्ध्नि वस्तिश्च नित्यम् ॥ ११ ॥

वातिके तु प्रतिश्याये पिवेत् सर्पिर्यथाक्रमम् ।
पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन च ॥ १२ ॥
नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम् ।
पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ॥ १३ ॥
परिषेकान् प्रदेहांश्च कुर्य्यादपि च शीतलान् ॥१४॥
कफजे सर्पिषा स्निग्धं तिलमाषविपक्कया ।
यवाग्वा वामयित्वा वा कफघ्नं क्रममाचरेत् ॥१५॥
दार्वीङ्गुदीनिकुम्भैश्च किणिह्या सुरसेन च ॥ १६ ॥
वर्त्तयोऽत्र कृता योज्या धूमपाने यथाविधि ।
अथवा सघृतान् शक्तून् कृत्वा मल्लकसम्पुटे ।
नवप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥१७॥
यः पिवति शयनकाले शयनारूढ़ः सुशीतलं भुवि ।
सलिलं पीनसयुक्तः स तु मुच्यते तेन रोगेण ॥१८॥
पुटपक्कं जयापत्रं सिन्धुतैलसमन्वितम् ।
प्रतिश्यायेषु सर्वेषु शीलितं परमौषधम् ॥१९॥

सोषणं गुडसंयुक्तं स्निग्धदध्यम्लभोजनम्।
नवप्रतिश्यायहरं विशेषात् कफपाचनम् ॥२०॥
प्रतिश्याये नवे शस्तो यूषश्चिञ्चादलोद्भवः।
ततः पक्वं कफं ज्ञात्वा हरेच्छीर्षविरेचनैः ॥२१॥
शिरसोऽभ्यञ्जनस्वेदनस्यकट्वम्लभोजनैः।
वमनैर्घृतपानैश्च तान् यथास्वमुपाचरेत् ॥२२॥
भक्षयति भुक्तमात्रे सलवणमुत्स्विन्नमाषमत्युष्णम्।
स जयति सर्वसमुत्थं चिरजातञ्च प्रतिश्यायम् ॥२३॥
पिप्पल्यः शिग्रुबीजानि विडङ्गं मरिचानि च।
अवपीडः प्रशस्तोऽयं प्रतिश्यायनिवारणः ॥२४॥
समूत्रपिष्टास्तोद्दिष्टाः क्रियाः क्रिमिषु योजयेत्।
नावनार्थं क्रिमिघ्नानि भेषजानि च बुद्धिमान्।
शेषाणान्तु विकाराणां यथास्वं स्याच्चिकित्सितम् ॥२५॥
रक्तकरवीरपुष्पं जात्यशनमल्लिकाश्च।
एतैः समन्तु तैलं नासार्शोनाशनं श्रेष्ठम् ॥२६॥

करवीराद्यं तैलम्।

गृहधूमकणादारुक्षारनक्ताह्वसैन्धवैः।
सिद्धं शिखरिबीजैश्च तैलं नासार्शसां हितम् ॥२७॥

शिखरीतैलम्।

चित्रकचविकादीप्यकनिदिग्धिकाकरञ्जबीजलवणाद्यैः।
गोमूत्रयुक्तं सिद्धं तैलं नासार्शसां विहितम् ॥२८॥

चित्रकतैलम्।

चित्रकस्यामलक्याश्च गुडूच्या दशमूलजम्।
शतं शतं रसं दत्त्वा पथ्याचूर्णाढकं गुडात् ॥२९॥

शतं पचेत् घनीभूते पलं द्वादशकं क्षिपेत् ।
व्योषत्रिजातयोः क्षारात् पलार्द्धमपरेऽहनि ॥२०॥
प्रस्थार्द्धं मधुनो दत्त्वा यथाग्न्यद्यादतन्द्रितः ।
वृद्धयेऽग्नेः क्षयं कासं पीनसं दुस्तरं क्रिमीन् ।
गुल्मोदावर्त्तदुर्नामश्वासान् हन्ति रसायनम् ॥२१॥

चित्रकहरीतकी ।

इति नासारोगचिकित्सा ।

## अथ नेत्ररोगाधिकारः ।

लङ्घनालेपनस्वेदशिराव्यधविरेचनैः ।
उपाचरेदभिष्यन्दानञ्जनाश्च्योतनादिभिः ॥१॥
श्रीवासातिविषालोध्रैश्च पूर्णितैरल्पसैन्धवैः ।
अव्यक्तेऽक्षिगदे कार्य्यं प्रोतस्थैर्गुण्डनं वहिः ॥२॥
अक्षिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः ।
पञ्चैते पञ्चरात्रेण प्रशमं यान्ति लङ्घनात् ॥३॥
स्वेदः प्रलेपस्तिक्ताम्नं सेको दिनचतुष्टयम् ।
लङ्घनञ्चाक्षिरोगाणामामानां पाचनानि षट् ।
अञ्जनं पूरणं क्वाथपानमामेन शस्यते ॥४॥
धात्रीफलनिर्य्यासो नवहृत्कोपं निहन्ति पूरणतः ।
सक्षौद्रसैन्धवो वा शिग्रूद्भवपत्ररससेकः ॥५॥
दार्व्वीरसाञ्जनं वापि स्तन्ययुक्तं प्रपूरणम् ।
निहन्ति शीघ्रं दाहाश्रुवेदनाः स्यन्दसम्भवाः ॥६॥
करवीरतरुणकिशलयच्छेदोद्भवबहुलसलिलसम्पूर्णम् ।
नयनयुगं भवति दृढं सहसैव ततक्षणात् कुपितम् ।७॥
शिखरिमूलं ताम्रकभाजने स्तोकसैन्धवोन्मिश्रम् ।

मस्तु निघृष्टं भरणाद्धरति नवं लोचनोत्कोपम् ॥८॥
सैन्धवदारुहरिद्रागैरिकपथ्यारसाञ्जनैः पिष्टैः।
दत्तो बहिः प्रलेपो भवत्यशेषाक्षिरोगहरः ॥९॥
तथा शाबरकं लोध्रं घृतभृष्टं बिड़ालकः।
कार्य्यो हरीतकीतद्वद् घृतभृष्टोबिड़ालकः ॥१०॥
शालाक्यचूर्णैर्बहिर्लेपो बिड़ालक उदाहृतः ॥११॥
गिरिमृच्चन्दननागरखटिकाशयोजितो बहिर्लेपः।
कुरुते वचया मिश्रो लचनमगदं न सन्देहः ॥१२॥
भूम्यामलकी घृष्टा ससैन्धवस्वल्पवारियोजिता ताम्रे।
याता घनत्वमक्ष्णोर्जयति बहिर्लेपतः पीड़ाम् ॥१३॥

सामान्याभिष्यन्दे।

आश्चोतनं मारुतजे क्वाथो बिल्वादिभिर्हितः।
कोष्णः सैरण्डबृहतीतर्कारीमधुशिग्रुभिः ॥१४॥
एरण्डपल्लवे मूले त्वचि चाजं पयः शृतम्।
कण्टकार्य्याश्च मूलेषु सुखोष्णं सेचने हितम् ॥१५॥
सम्यक्कोऽक्षिगदे कार्य्यं चाञ्जनादिकमिष्यते।
प्रशस्तवर्त्मता चाक्ष्णोः संरम्भाश्रुप्रशान्तता ॥१६॥
मन्दवेदनताकण्डूः पक्वाक्षिगदलक्षणम्।
अञ्जनादिविधिस्त्वग्रे निखिलेनाभिधास्यते ॥१७॥
बृहत्येरण्डमूलत्वक्शिग्रोर्मूलं ससैन्धवम्।
अजाक्षीरेण पिष्टं स्याद्वर्त्तिर्वाताक्षिरोगनुत् ॥१८॥
हरिद्रे मधुकं पथ्यादेवदारु च पेषयेत्।
आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम् ॥१९॥
गैरिकं सैन्धवं कृष्णां नागरञ्च यथोत्तरम्।

घनितमुपलघृष्टं धूपितं गोमयाग्नौ ।
सपवनकफकोपं छागदुग्धावसिक्तं
जयति नयनशूलं स्रावशोथं सरागम् ॥ ४० ॥

तरुणविद्धामलकरसः सर्वाक्षिरोगनुत् ।
पुराणं सर्वथा सर्पिः सर्वनेत्रामयापहम् ॥४१॥
अयमेव विधिः सर्वो मन्थादिष्वपि शस्यते ।
अशान्तौ सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ॥ ४२ ॥
जलौकःपातनं शस्तं नेत्रपाके विरेचनम् ।
शिराव्यधं वा कुर्वीत सेकालेपांश्च शुक्रवत् ॥ ४३ ॥
विभीतकशिवाधात्रीपटोलारिष्टवासकैः ।
क्वाथो गुग्गुलुना पेयः शोथशूलाक्षिपाकहा ॥४४॥
पिलुञ्च सव्रणं शुक्रं रागादींश्चापि नाशयेत् ।
एतैश्चापि घृतं पक्वं रोगांस्तांश्च व्यपोहति ॥ ४५ ॥

## षड़ङ्गगुग्गुलुः ।

अटरुषाभयानिम्बधात्रीमुस्ताक्षकूलकैः ।
रक्तस्रावं कफं हन्ति चक्षुष्यं वासकादिकम् ॥ ४६ ॥

## वासकादि ।

वासाघनं निम्बपटोलपत्रं
तिक्तामृताचन्दनवत्सकत्वक् ।
कलिङ्गदार्वीदहनञ्च शुण्ठी-
भूनिम्बधात्र्यभयाविभीतम् ॥ ४७ ॥
श्यामायवक्वाथमथाष्टभागं
पिबेदिमं पूर्वदिने कषायम् ।

तैमिर्य्यकण्डूपटलार्वुदञ्च
शुक्रं निहन्यात् व्रणमव्रणञ्च ॥४८॥
पिलुञ्च काचञ्च महारजञ्च
नक्ताभ्यरागं श्वयथुं सशूलम् ।
निहन्ति सर्वान् नयनामयांश्च
वासादिरेषः प्रथितप्रभावः ॥४९॥

वृहद्वासादि ।

पथ्यास्तिस्रो विभीतक्यः षट् धात्रो द्वादशैव तु ।
प्रस्थार्द्धे सलिले क्वाथमष्टभागावशेषितम् ॥५०॥
पीत्वाभिष्यन्दमास्रवं खगञ्च तिमिरं जयेत् ॥५१॥
संरम्भरागशूलाश्रुनाशनं दृक्प्रसादनम् ।
नेत्रे त्वभिहते कुर्य्याच्छीतमाश्चोतनादिकम् ॥५२॥

दृष्टिप्रसादजननं विधिमाशु कुर्य्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः ।
स्वेदाग्निधूमभयशोकरुजाभितापै-
रभ्याहतामपि तथैव भिषक् चिकित्सेत् ॥५३॥
आगन्तुदोषं प्रसमीक्ष्य कार्य्यं
वक्त्रोष्मणा स्वेदितमादितस्तु ।
आश्चोतनं स्त्रीपयसा च सद्यो
यच्चापि पित्तक्षतजापहं स्यात् ॥५४॥
सूर्य्योपरागानलविद्युदादि-
विलोकनेनोपहतेक्षणस्य ।
सन्तर्पणं स्निग्धहिमादिकार्य्यं
सायं निषेव्यास्त्रिफलाप्रयोगाः ॥५५॥

निशाब्दत्रिफलादार्वीसितामधुकसंयुतम्।
अभिघाताक्षिशूलघ्नं नारीक्षीरेण पूरणम् ॥५६॥
बृहत्कण्टाङ्कुरजस्तद्वत्स्वरसो नेत्रपूरणम्।
आजं घृतं क्षीरपात्रं मधुकञ्चोत्पलानि च ॥५७॥
जीवकर्षभकौ चापि पिष्ट्वा सर्पिर्विपाचयेत्।
सर्वनेत्राभिघातेषु सर्पिरेतत् प्रशस्यते ॥५८॥
सैन्धवं दारुशुण्ठी च मातुलुङ्गी रसो घृतम्।
स्तन्योदकाभ्यां कर्त्तव्यं शुष्कपाके तदञ्जनम् ॥५९॥
वाताभिष्यन्दवच्चान्यद्वाते मारुतपर्य्यये।
पूर्वभक्तं हितं सर्पिः क्षीरञ्चाप्यथ भोजने ॥६०॥
वृक्षादन्यां कपित्थे च पञ्चमूले महत्यपि।
सक्षीरं कर्कटरसे सिद्धञ्चापि पिबेद् घृतम् ॥६१॥
अभिष्यन्दमधीमन्थं रक्तोत्थमथवार्जुनम्।
शिरोत्पातं शिराहर्षमन्यांश्चाक्षिभवान् गदान् ॥६२॥
स्निग्धस्याज्येन कौम्भेन शिराव्याधैः शमं नयेत्।
अम्लाध्युषितशान्त्यर्थं कुर्य्याल्लेपान् सुशीतलान् ॥६३॥
तैन्दुकं त्रैफलं सर्पिर्जीर्णं वा केवलं हितम्।
सिराव्यधं विना कार्य्यः पित्तस्यन्दहरो विधिः ॥६४॥
सर्पिः क्षौद्राञ्जनञ्च स्याच्छिरोत्पातस्य भेषजम्।
तद्वत्सैन्धवकाशीशं स्तन्यपिष्टञ्च पूजितम् ॥६५॥
शिराहर्षेऽञ्जनं कुर्य्यात् फाणितं मधुसंयुतम्।
मधुना तार्क्ष्यशैलं वा काशीशं वा समाक्षिकम् ॥६६॥

सर्वजेषु।

व्रणशुक्रप्रशान्त्यर्थं षडङ्गं गुग्गुलुं पिबेत्।

कतकस्य फलं शङ्खं तिन्दुकं रूप्यमेव च ॥ ६७ ॥
कांस्ये निघृष्टं स्तन्येन घृतशुक्लाक्षिरोगजित्।
चन्दनं गैरिकं लाक्षामालती कलिकासमा ॥ ६८ ॥
व्रणशुक्रहरी वर्त्तिः शोणितस्य प्रसादनी।
शिरया वा हरेत् रक्तं जलौकाभिश्च लोचनात् ॥ ६९ ॥
अजमज्जाञ्जनं सार्य्यं स्तन्येन शुक्रनाशनम्।
एकं वा पुण्डरीकञ्च छागीक्षीरावसेचितम् ॥ ७० ॥
रागास्तुवेदनां हन्यात् घृतपाकात्ययाजकाः।
तुत्थकं वारिणा युक्तं शुक्रं हन्त्यक्षिपूरणात् ॥ ७१ ॥
समुद्रफेनदक्षाक्षत्वक्सिन्धूत्थैः समाक्षिकैः।
शिग्रुवीजयुतैर्वर्त्तिः शुक्रघ्नी शीग्रुवारिणा ॥ ७२ ॥

धात्रीफलं निम्बपटोलपत्रं
यष्ट्याह्वलोध्रं खदिरन्तिलाश्च।
क्वाथः सुशीतो नयने निषिक्तः
सर्वप्रकारं विनिहन्ति शुक्रम् ॥ ७३ ॥

स्नुक्षुपुन्नागपत्रेण परिभावितवारिणा।
श्यामाक्वाथेऽम्बुना वाथ सेचनं कुसुमापहम् ॥ ७४ ॥
दक्षाक्षत्वक्शिलाशङ्खकाचचन्दनगैरिकैः।
तुल्यैरञ्जनयोगोऽयं पुष्पार्मादिविलेखनः ॥ ७५ ॥
शिरीषवीजमरिचपिप्पलीसैन्धवैरपि।
शुक्ले प्रघर्षणं कार्य्यमथवा सैन्धवेन च ॥ ७६ ॥
वहुशः पलाशकुसुमस्वरसैः परिभाविता जयत्यचिरात्।
नक्ताह्ववीजवर्त्तिः कुसुमचयं हन्तु चिरजमपि ॥ ७७ ॥
सैन्धवत्रिफलाकृष्णाकटुकाशङ्खनाभयः।

सताम्ररजसो वर्त्तिः पिष्टा शुक्रविनाशिनी ॥७८॥
चन्दनं सैन्धवं पथ्यापलाशतरुशोणितम् ।
क्रमवृद्धमिदं चूर्णं शुक्रामर्दिविलेखनम् ॥७९॥
दन्तैर्हस्तिवराहोष्ट्रगवाश्वाजखरोद्भवैः ।
सशङ्खमौक्तिकाम्भोधिफेनैर्मरिचपादिकैः ।
क्षतशुक्रमपि व्याधिं दन्तवर्त्तिर्निवर्त्तयेत् ॥८०॥

दन्तवर्त्तिः ।

शङ्खस्य भागाश्चत्वारस्ततोऽर्द्धेन मनःशिला ।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन सैन्धवम् ॥८१॥
एतच्चूर्णाञ्जनं श्रेष्ठं शुक्रयोस्तिमिरेषु च ।
पिच्चटे मधुना योज्यमर्वुदे मस्तुना तथा ॥८२॥
ताप्यं मधुकसारो वा वीजं चाक्षस्य सैन्धवम् ।
मधुनाञ्जनयोगाः स्युश्चत्वारः शुक्रशान्तये ॥८३॥
वटक्षीरेण संयुक्तं स्लक्ष्णं कर्पूरजं रजः ।
क्षिप्रमञ्जनतो हन्ति शुक्रञ्चापि घनोन्नतम् ॥८४॥
त्रिफलामज्जमञ्जिष्ठामधुकं रक्तचन्दनम् ।
पूरणं मधुसंयुक्तं क्षतशुक्राजकाशुजित् ॥८५॥
तालस्य नारीकेलस्य तथैवारुष्करस्य च ।
करीरस्य च वंशानां कृत्वा क्षारं परिस्रुतम् ॥८६॥
करभास्थिकृतं चूर्णं क्षारेण परिभावितम् ।
सप्तकृत्वोऽष्टकृत्वो वा स्लक्ष्णं चूर्णन्तु कारयेत् ॥८७॥
एतच्छुक्रेष्वसाध्येषु कृष्णीकरणमुत्तमम् ।
यानि शुक्राणि साध्यानि तेषां परममञ्जनम् ॥८८॥
पटोलं कटुकां दार्वीं निम्बं वासां फलत्रिकम् ।

सुरालभां पर्प्पटकं त्रायन्तीञ्च पलोभिताम् ॥८९॥
प्रस्थमामलकानाञ्च क्वाथयेदुल्वनेऽम्भसि।
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत् ॥९०॥
कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनैः।
सपिप्पलीकैस्तत्सिद्धं चक्षुष्यं शुक्रयोर्हितम् ॥९१॥
घ्राणकर्णाक्षिवक्त्रत्वक्मुखरोगव्रणापहम्।
कामलाज्वरवीसर्पगण्डमालाहरं परम् ॥९२॥

पटोलाद्यं घृतम्।

कृष्णाविडङ्गमधुयष्टिकसिन्धुजन्म-
विश्वौषधैः पयसि सिद्धमिदं छगल्याः।
तैलं नृणां तिमिरशुक्रशिरोऽक्षिशूल-
पाकात्ययान् जयति नस्यविधौ प्रयुक्तम् ॥९३॥

कृष्णाद्यं तैलम्।

अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम्।
व्रणं गोमयचूर्णेन पूरयेत् सर्पिषा सह ॥९४॥
सैन्धवं वाजिपादञ्च गोरोचनसमन्वितम्।
शेलुत्वक्रससंयुक्तं पूरणञ्चाजकापहम् ॥९५॥
शशकस्य शिरःकल्के शेषाङ्गक्वथिते जले।
घृतस्य कुड़वं पक्वं पूरणञ्चाजकापहम् ॥९६॥

शशकाद्यं घृतम्।

शशकस्य कषाये च सर्पिषः कुड़वं पचेत्।
यष्टीप्रपौण्डरीकस्य कल्केन पयसा समम् ॥९७॥
छगल्याः पूरणाच्छुक्रक्षतपाकात्ययाजकाः।

हन्ति भ्रुशङ्खशूलञ्च दाहरागानशेषतः ॥९८॥

शशकाद्यं घृतम्। कृष्णजेषु।

त्रिफलाघृतं मधुयवाः पादाभ्यङ्गः शतावरी मुद्गाः।
चक्षुष्यः संक्षेपाद्वर्गः कथितो भिषग्भिरयम् ॥९९॥

लिह्यात् सदा वा त्रिफलां सुचूर्णितां
मधुप्रगाढ़ां तिमिरेऽथ पित्तजे।
समीरजे तैलयुतां कफात्मके
मधुप्रगाढ़ां विदधीत युक्तितः ॥१००॥

कल्कः क्वाथोऽथवा चूर्णं त्रिफलाया निषेवितम्।
मधुना हविषा वापि समस्ततिमिरान्तकृत् ॥१०१॥

यस्त्रैफलं चूर्णमपथ्यवर्जी
सायं समश्नाति हविर्मधुभ्याम्।
स मुच्यते नेत्रगतैर्विकारै-
र्भृत्यैर्यथा क्षीणधनो मनुष्यः ॥१०२॥

सघृतं वावराक्वाथं शीलयेत्तिमिरामयी।
जाता रोगा विनश्यन्ति न भवन्ति कदाचन।
त्रिफलायाः कषायेण प्रातर्नयनधावनात् ॥१०३॥

जलगण्डूषैः प्रातर्बहुशोऽम्भोभिः प्रपूर्य मुखरन्ध्रम्।
निर्दयमुच्चन्नक्षि क्षपयति तिमिराणि ना सद्यः ॥१०४॥

भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यत् प्रदीयते।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥१०५॥

कतकस्य फलं शङ्खं त्रूषणं सैन्धवं सिता।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला।
कुक्कटाण्डकपालानि वर्त्तिरेषा व्यपोहति ॥१०६॥

तिमिरं पटलं काचमर्म्मशुक्रांस्तथैव च।
कण्डूक्लेदार्बुदं हन्ति मलञ्चाशु सुखावती ॥१०७॥

सुखावती वर्त्तिः।

हरीतकी वचा कुष्ठं पिप्पली मरिचानि च।
विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला ॥१०८॥
सर्व्वमेतत्समं कृत्वा छागक्षीरेण पेषयेत्।
नाशयेत्तिमिरं कण्डूं पटलान्यर्व्वुदानि च ॥१०९॥
अधिकानि च मांसानि यश्च रात्रौ न पश्यति।
अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत् ॥११०॥
वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिप्रसादनी ॥१११॥

चन्द्रोदया वर्त्तिः।

हरीतकी हरिद्रा च पिप्पल्यो लवणानि च।
कण्डूतिमिरजिद्वर्त्तिर्न क्वचित् प्रतिहन्यते ॥११२॥
अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलीतण्डुलाः।
जातीकुसुमपञ्चाशन्मरिचानि च षोडश।
एषा कुमारिका वर्त्तिर्गतं चक्षुर्निवारयेत् ॥११३॥

कुमारिका वर्त्तिः।

त्रिफलाकुक्कुटाण्डलक्काशीशमयसो रजः।
नीलोत्पलं विडङ्गानि फेनञ्च सरितां पतेः ॥११४॥
आजेन पयसा पिष्ट्वा भावयेत्ताम्रभाजने।
सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्त्तयेत् ॥११५॥
एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः।
चन्दनत्रिफलापूगपलाशतरुशोणितैः ॥११६॥
जलपिष्टैरियं वर्त्तिरशेषतिमिरापहा।

निशाद्वयाभयामांसीकुष्ठकृष्णाविचूर्णिता ॥११७॥
सर्वनेत्रामयान् हन्यादेतत् सौगतमञ्जनम् ।
व्योषोत्पलाभयाकुष्ठतार्क्ष्यैर्वर्त्तिः कृता हरेत् ॥११८॥
अर्वुदं पटलं काचं तिमिरार्मास्रुनिस्रुतिम् ।
तूषणं त्रिफलावक्रसैन्धवालमनःशिलाः ॥११९॥
क्लेदोपदेहकण्डूघ्नी वर्त्तिः शस्ता कफापहा ।
एकगुणा मागधिका द्विगुणा च हरीतकी ॥१२०॥
सलिलपिष्टा वर्त्तिरियं
नयनसुखार्मतिमिरपटलकाचास्रुहरी ॥१२१॥
अञ्जनं श्वेतमरिचं पिप्पली मधुयष्टिका ।
विभीतकस्य मध्यन्तु शङ्खनाभिर्मनःशिला ॥१२२॥
एतानि समभागानि अजाक्षीरेण पेषयेत् ।
छायाशुष्कां कृतां वर्त्तिं नेत्रेषु च प्रयोजयेत् ॥१२३॥
अर्वुदं पटलं काचं तिमिरं रक्तराजिकाम् ।
अधिमांसं मलञ्चैव यश्च रात्रौ न पश्यति ।
वर्त्तिश्चन्द्रप्रभा नाम जातान्ध्यमपि शोधयेत् ॥१२४॥

चन्द्रप्रभा वर्त्तिः ।

त्रिफलाव्योषसिन्धूत्थयष्टीतुत्थरसाञ्जनम् ।
प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्दश ॥१२५॥
द्रव्याण्येतानि सञ्चूर्ण्य वर्त्तिः कार्य्या नभोऽम्बुना ।
नागार्जुनेन लिखिता स्तम्भे पाटलिपुत्रके ॥१२६॥
नाशनी तिमिराणाञ्च पटलानान्तथैव च ।
सद्यः प्रकोपं स्तन्येन स्त्रिया विजयते ध्रुवम् ॥१२७॥
किंशुकस्वरसेनाथ पिलुपुष्पकरञ्जतः ।

अञ्जनाक्षौद्रतोयेन चासन्नतिमिरं जयेत् ॥१२८॥
चिरसंच्छादिते नेत्रे वस्तमूत्रेण संयुता।
उन्मीलयत्यक्ष्णोर्य्यक्षेण प्रसादं चाधिगच्छति ॥१२९॥

श्रीनागार्जुनाञ्जनम्।

पिप्पलीं सतगरोत्पलपत्रां वर्त्तयेत् समधुकां सहरिद्राम्।
एतया सततमञ्जयितव्यं यः सुपर्णसममिच्छति चक्षुः ॥१३०॥
व्योषायश्चूर्णसिन्धूत्थत्रिफलाञ्जनसंयुता।
गुड़िका जलपिष्टेयं कोकिला तिमिरापहा ॥१३१॥
त्रीणि कटूनि करञ्जफलानि द्वे रजनी सहसैन्धवकञ्च।
विल्वतरोर्वरुणस्य च मूलं वारिचरं दशमं प्रवदन्ति ॥१३२॥
हन्ति तमस्तिमिरं पटलञ्च पिच्चिटशुक्रकमथार्जुनञ्च।
अञ्जनकञ्जनरञ्जनकञ्च दृक्चन नश्यति वर्षशतञ्च ॥१३३॥
नीलोत्पलं विड़ङ्गानि पिप्पली रक्तचन्दनम्।
अञ्जनं सैन्धवञ्चैव सद्यस्तिमिरनाशनम् ॥१३४॥
पत्रगैरिककर्पूरयष्टीनीलोत्पलाञ्जनम्।
नागकेशरसंयुक्तमशेषतिमिरापहम् ॥१३५॥
शङ्खस्य चतुरो भागास्तदर्द्धेन मनःशिला।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन पिप्पली ॥१३६॥
वारिणा तिमिरं हन्ति अर्वुदं हन्ति मस्तुना।
पिच्चिटं मधुना हन्ति स्त्रीक्षीरेण तदुत्तमम् ॥१३७॥
हरिद्रानिम्बपत्राणि पिप्पल्यो मरिचानि च।
भद्रमुस्तं विड़ङ्गानि सप्तमं विश्वभेषजम् ॥१३८॥
गोमूत्रेण गुड़ी कार्य्या छागमूत्रेण चाञ्जनम्।
ज्वरांश्च निखिलान् हन्ति भूतावेशस्तथैव च ॥१३९॥

वारिणा तिमिरं हन्ति मधुना पटलन्तथा ।
नक्ताम्ध्यं भृङ्गराजेन नारीक्षीरेण पुष्पकम् ।
शिशिरेण परिस्रावमर्वुदं पिच्चिटन्तथा ॥१४०॥
संग्राह्योपरतानलक्ककरसेनामृज्य गण्डूपदान्
लाक्षारञ्जिततूलवर्त्तिनिहितान् यष्टीमधून्मिश्रितान् ।
प्रज्वाल्योत्तमसर्पिषानलशिखासन्तापजं कज्जलं
दूरासन्ननिशान्ध्यसर्वतिमिरप्रध्वंसकृत्प्रोदितम् ॥१४१॥
भूमौ निघृष्टयाङ्गुल्या अञ्जनं शमनन्तयोः ।
तिमिरकाचार्महरं धूमिकायाश्च नाशनम् ॥१४२॥
त्रिफलाभृङ्गमहौषधमध्वाज्यच्छागपयसि गोमूत्रे ।
नागं सप्तनिषिक्तं करोति गरुडोपमञ्चक्षुः ॥१४३॥
त्रिफलासलिलयोगे भृङ्गराजद्रवे च
हविषि च विषकल्के चार आजे मधूग्रे ।
प्रतिदिनमथ तप्तं सप्तधा सीसमेकं
प्रणिहितमथ पश्चात् कारयेत्तच्छलाकाम् ॥१४४॥
सवितुरुदयकाले साञ्जना व्यञ्जना वा
करकरिकसमेता नर्मपेच्चिव्यरोगान् ।
असितसितसमुत्थान् सन्धिवर्त्माभिजातान्
हरति नयनरोगान् सेव्यमाना शलाका ॥१४५॥
चिञ्चापत्ररसं निधाय विमले चौडुम्बरे भाजने
मूलं तत्र निघृष्टसैन्धवयुतं गौञ्जं विशोष्यातपे ।
तच्चूर्णं विमलाञ्जनेन सहितं नेत्राञ्जने शस्यते
काचार्माजुर्नपिच्चिटे सतिमिरे स्रावञ्च निर्वासयेत् ॥१४६॥
चित्राषष्ठीयोगे सैन्धवममलं विचूर्ण्य तेनाचिशमम् ।

अञ्जनेन तिमिरं गच्छति वर्षादसाध्यमपि ॥१४७॥
दद्यादुशीरनिर्य्यूहे चूर्णितं कणसैन्धवम् ।
तच्छुतं सघृतं भूयः पचेत् क्षौद्रं क्षिपेद्घने ॥१४८॥
शीते तस्मिन् हितमिदं सर्वजे तिमिरेऽञ्जनम् ॥१४९॥
धात्रीरसाञ्जनक्षौद्रसर्पिर्भिस्तु रसक्रिया ।
पित्तानिलाक्षिरोगघ्नी तैमिर्य्यपटलापहा ॥१५०॥
शृङ्गवेरं भृङ्गराजं यष्टीतैलेन मिश्रितम् ।
नस्यमेतेन दातव्यं महापटलनाशनम् ।१५१॥
लिङ्गनाशे कफोद्भूते यथावद्विधिपूर्वकम् ।
विद्धा दैवकृते छिद्रे नेत्रं स्तन्येन पूरयेत् ॥१५२॥
ततो दृष्टे सुरूपेषु शलाकामाहरेच्छनैः ।
नयनं सर्पिषाभ्यज्य वस्त्रपट्टेन वेष्टयेत् ॥१५३॥
ततो गृहे निराबाधे शयितोत्तान एव च ।
उद्गारकासक्षवथुष्ठीवनोत्कम्पनानि च ॥१५४॥
तत्कालं नाचरेदूर्द्ध्वं यन्त्रणास्नेहपीतवत् ।
त्र्यहात् त्र्यहाद्धारयेत् तु कषायैरनिलापहैः ॥१५५॥
वायोर्भयात् त्र्यहादूर्द्ध्वं स्नेहयेदक्षिपूर्ववत् ।
दशरात्रन्तु संयम्य हितं दृष्टिप्रसादनम् ॥१५६॥
पश्चात् कर्म च सेवेत लघ्वन्नं चापि मात्रया ।
रागस्रोषोऽर्बुदं शोथो बुद्बुदं केकराक्षिता ॥१५७॥
अधिमन्थादयश्चान्ये रोगाः स्युर्दुष्टवेधजाः ।
अहिताचारतो वापि यथास्वं तानुपाचरेत् ॥१५८॥
रुजायामक्षिरोगे वा भूयो योगान्निबोध मे ।
कल्किताः सघृता दूर्वायवगैरिकशारिवाः ॥१५९॥

मुखलेपाः प्रयोक्तव्या रुजारोगोपशान्तये ।
पयस्याशारिवापत्रमञ्जिष्ठामधुकैरपि ॥१६०॥
अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्य उच्यते ।
वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे ॥१६१॥
काकोल्यादिप्रतिवापं प्रयुञ्ज्यात् सर्वकर्मसु ।
शाम्यत्येवं न चेच्छूलं स्निग्धस्विन्नस्य मोचयेत् ॥१६२॥
ततः शिरां दहेच्चापि मतिमान् कीर्त्तितां यथा ।
दृष्टेरतः प्रसादार्थमञ्जने शृणु मे शुभे ॥१६३॥
मेषशृङ्गस्य पत्राणि शिरीषधवयोरपि ।
मालत्याश्चापि तुल्यानि मुक्तावैदूर्य्यमेव च ॥१६४॥
अजाक्षीरेण संपिष्य ताम्रे सप्ताहमावपेत् ।
प्रणिधाय तु तद्वर्त्तिं योजयेदञ्जने भिषक् ॥१६५॥
स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिला ।
मरिचानि च तद्वर्त्तिं कारयेत् पूर्ववद्भिषक् ॥१६६॥
रसाञ्जनं घृतं क्षौद्रं तालीशं स्वर्णगैरिकम् ।
गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ॥१६७॥
नलिनोत्पलकिञ्जल्कं गोशकृद्रससंयुतम् ।
गुड़िकाञ्जनमेतत् स्याद्दिनरात्र्यन्धयोर्हितम् ॥१६८॥

नदीजशङ्खत्रिकटून्यथाञ्जनं
मनःशिला द्वे च निशे गवां शकृत् ।
सचन्दनेयं गुड़िकाथ चाञ्जने
प्रशस्यते रात्रिदिनेष्वपश्यताम् ॥१६९॥

कणाच्छागयकृन्मध्ये पक्वा तद्रसपेषिता ।
अचिराद्धन्ति नक्तान्ध्यं तद्वत् सक्षौद्रमूषणम् ॥१७०॥

पचेत् तु गोधं हि यकृत्प्रयुक्तं
प्रकल्पितं मागधिकाभिरम्बुना।
निषेवितं तत् सकृदञ्जनेन
निहन्ति नक्तान्ध्यमसंशयं खलु ॥१७१॥
दध्ना निघृष्टं मरिचं रात्र्यन्ध्याञ्जनमुत्तमम्।
ताम्बूलयुक्तं खद्योतभक्षणञ्च तदर्थकृत् ॥१७२॥
शफरीमत्स्यचारी नक्तान्ध्यमञ्जनात् विनिहन्ति।
तद्वद्रामठटङ्कणकणमलञ्च कणोऽञ्जनान्मधुना ॥१७३॥
केशराजान्वितं सिद्धं मत्स्याण्डं हन्ति भक्षितम्।
नक्तान्ध्यं नियतं नृणां सप्ताहात् पथ्यसेविनाम् ॥१७४॥
त्रिफलाक्वाथकल्काभ्यां सपयस्कं शृतं घृतम्।
तिमिराण्यचिराद्धन्ति पीतमेतन्निशामुखे ॥१७५॥

त्रिफलाघृतम्।

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च।
वृषस्य च रसप्रस्थं शतावर्य्याश्च तत्समम् ॥१७६॥
अजाक्षीरं गुडूच्याश्च आमलक्या रसस्तथा।
प्रस्थं प्रस्थं समाहृत्य सर्वैरेभिर्घृतं पचेत् ॥१७७॥
कल्कः कणासिताद्राक्षात्रिफलानीलमुत्पलम्।
मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका ॥१७८॥
तत्साधुसिद्धं विज्ञाय शुभे भाण्डे निधापयेत्।
ऊर्ध्वं पानमधःपानं मध्यपानञ्च शस्यते ॥ १७९॥
यावन्तो नेत्ररोगास्तान् पानादेवापकर्षति।
सरक्ते रक्तदुष्टे च रक्ते चातिस्रुतेऽपि च ॥१८०॥
नक्तान्ध्ये तिमिरे काचे नीलिका पटलार्बुदे।

अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे सुदारुणे ॥१८१॥
नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च ।
अदृष्टिं मन्ददृष्टिञ्च कफवातप्रदूषिताम् ॥१८२॥
स्रवतो वातपित्ताभ्यां सकण्डूासन्नदूरदृक् ।
गृध्रदृष्टिकरं सद्यो बलवर्णाग्निवर्द्धनम् ।
सर्वनेत्रामयं हन्यात्त्रिफलाद्यं महद्घृतम् ॥१८३॥

महात्रिफलाद्यं घृतम् ।

त्रिफला त्र्यूषणं द्राक्षा मधुकं कटुरोहिणी ।
प्रपौण्डरीकं सूक्ष्मैला विडङ्गं नागकेशरम् ॥१८४॥
नीलोत्पलं शारिवे द्वे चन्दनं रजनीद्वयम् ।
कार्षिकैः पयसा तुल्यं त्रिगुणं त्रिफलारसम् ॥१८५॥
घृतप्रस्थं पचेदेतत् सर्वनेत्ररुजापहम् ।
तिमिरं दोषमास्रावं कामलां काचमर्वुदम् ॥१८६॥
वीसर्पं प्रदरं कण्डूं रक्तं श्वयथुमेव च ।
खालित्यं पलितञ्चैव केशानां पतनन्तथा ॥१८७॥
विषमज्वरमर्माणि शुक्रञ्चाशु व्यपोहति ।
अन्ये च बहवो रोगा नेत्रजा ये च वर्त्मजाः ।
तान् सर्वान् नाशयत्याशु भास्करस्तिमिरं यथा ॥१८८॥
न चैवास्मात् परं किञ्चिदृषिभिः काश्यपादिभिः ।
दृष्टिप्रसादनं दृष्टं यथा स्यात् त्रैफलं घृतम् ॥१८९॥

त्रैफलं घृतम् ।

फलत्रिकाभीरुकषायसिद्धं
कल्केन यष्टीमधुकस्य युक्तम् ।
सर्पिः समं क्षौद्रचतुर्थभागं

हन्यात् त्रिदोषं तिमिरं प्रवृद्धम् ॥१८०॥

त्रिफलाद्यघृतम्।

भृङ्गराजरसप्रस्थे यष्टीमधुपलेन च।
तैलस्य कुडवं पक्वं सद्यो दृष्टिं प्रसादयेत्।
नस्याद् वलीपलितघ्नं मासेनैतन्न संशयः ॥१८१॥

भृङ्गराजाद्यं तैलम्।

गवां शकृत्क्वाथविपक्वमुत्तमं
हितञ्च तैलं तिमिरेषु नस्ततः।
घृतं हितं केवलमेव पैत्तिके
तथानुतैलं पवनास्रगुल्मयोः ॥१८२॥

जीवकर्षभकौ मेदाद्राक्षांशुमती निदिग्धिका वृहती।
मधुकं बला विडङ्गं मञ्जिष्ठा शर्करा रास्ना ॥१८३॥
नीलोत्पलं श्वदंष्ट्रा प्रपौण्डरीकं पुनर्नवा लवणम्।
पिप्पल्यः सर्वेषां भागैरक्षांशिकैः पिष्टैः ॥१८४॥
तैलं वा यदि वा सर्पिर्दत्त्वा क्षीरं चतुर्गुणं पक्वम्।
तिमिरं पटलं काचं नक्तान्ध्यं चार्वुदन्तथान्यच्च ॥१८५॥
श्वेतञ्च लिङ्गनाशं नाशयति नीलिकाव्यङ्गम्।
मुखनासादौर्गन्ध्यं पलितञ्चाकालजं हनुस्तम्भम् ॥१८६॥
कासं श्वासं शोषं हिक्कां स्तम्भं तथात्ययं नेत्रे।
मुखजिह्वं मर्दभेदं रोगं बाहुग्रहं शिरःस्तम्भम्।
रोगानथोर्ध्वजत्रोः सर्वानचिरेण नाशयति ॥१८७॥
नस्यार्थं कुडवं तैलं पक्तव्यं नृपवल्लभे।
पञ्चांशैः शाणिकैः कल्कैरन्ये भृङ्गादितैलवत् ॥१८८॥

नृपवल्लभं तैलं घृतञ्च।

तैलस्य प्रचेत् कुडवं मधुकस्य पलेन कल्कपिष्टेन।
आमलकस्वरसप्रस्थं चीरप्रस्थेन संयुतम् ॥१९९॥
कृत्वाभिजितं नाम्ना तैलं तिमिरं हन्यान्मुनिप्रोक्तम्।
विमलां कुरुते दृष्टिं नष्टामप्यानयेत् तथा ॥२००॥

अभिजितं तैलम्। दृष्टिजेषु।

अर्मं तु छेदनीयं स्यात् कृष्णाप्राप्तं भवेद्यदा।
वडिशविद्धमुन्नस्य त्रिभागञ्चात्र वर्जयेत् ॥२०१॥
पिप्पलीत्रिफलालाक्षालौहचूर्णं ससैन्धवम्।
भृङ्गराजरसे पिष्टं गुडिकाञ्जनमिष्यते ॥२०२॥
अर्मं सतिमिरं काचं कण्डूं शुक्रं तदर्जुनम्।
अजकां नेत्ररोगांश्च हन्यान्निरवशेषतः ॥२०३॥

पुष्पाख्यताक्ष्यंजसितोदधिफेनशङ्ख-
सिन्धूत्थगैरिकशिलामरिचैः समांशैः।
पिष्टैश्च माक्षिकरसेन रसक्रियेयं
हन्त्यर्मकाचतिमिरार्जुनवर्त्मरोगान् ॥२०४॥

कौन्तस्य सर्पिषः पानैर्विरेकालेपसेचनैः।
स्वादुशीतैः प्रशमयेत् शुक्तिकामञ्जनैस्ततः ॥२०५॥
प्रवालमुक्तावैदूर्य्यशङ्खस्फटिकचन्दनम्।
सुवर्णरजतं चौद्रमञ्जनं शुक्तिकापहम् ॥२०६॥
शङ्खः चौद्रेण संयुक्तः कतकः सैन्धवेन वा।
सितयार्णवफेनो वा पृथगञ्जनमर्जुने ॥२०७॥
पैत्तं विधिमशेषेण कुर्य्यादर्जुनशान्तये ॥२०८॥
वैदेहीसितमरिचं सैन्धवं नागरं समम्।

मातुलुङ्गरसैः पिष्टमञ्जनं पिष्टकापहम् ॥२०९॥

शुक्लजेषु।

भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः।
विलिखेन्मण्डलाग्रेण प्रच्छयेद्वा समन्ततः ॥२१०॥
पथ्याक्षधात्रीफलमध्यबीजैस्त्रिद्व्येकभागैर्विदधीत वर्त्तिम्।
तयाञ्जयेदश्रुमतिप्रगाढमल्पाहरेत् कष्टमपि प्रकोपम् ॥२११॥
स्रावेषु त्रिफलाक्वाथं यथादोषं प्रयोजयेत्।
क्षौद्रेणाज्येन पिप्पल्या मिश्रं विध्येच्छिरां तथा ॥२१२॥
त्रिफलामरिचकासीससैन्धवैः सरसाञ्जनैः।
रसक्रिया क्रिमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम् ॥२१३॥

सन्धिजेषु।

स्विन्नां भित्त्वा विनिष्पीड्य भिन्नामञ्जननामिकाम्।
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ॥२१४॥
रसाञ्जनमधुभ्याञ्च भिन्नां वा शस्त्रकर्मवित्।
प्रतिसार्य्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः ॥२१५॥
स्वेदयेद्‌ घृष्टयाङ्गुल्या हरेद्रक्तं जलौकसा।
रोचनाक्षारतुत्थानि पिप्पल्यः क्षौद्रमेव च ॥२१६॥
प्रतिसारणमेकैकं भिन्नेन गण इष्यते।
निमिषे नासया पेयं सर्पिस्तेन च पूरणम् ॥२१७॥
स्वेदयित्वा बिसग्रन्थिं छिद्राण्यस्य निराश्रयम्।
पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत् ॥२१८॥
वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम्।
पुनः पुनर्विरेकञ्च पिल्लरोगातुरो भजेत् ॥२१९॥
पिल्ली स्निग्धो वमेत् पूर्वं शिराव्याधं स्रुतेऽसृजि।

सुरामण्डेन वर्त्तिः स्यात् श्लेष्माभिष्यन्दनाशिनी ।
पोथकीकर्ष्मोपरोधक्रिमिग्रन्थिकतूणके ॥२४२॥
चक्रं जेषु ।

इति नेत्ररोगचिकित्सा ।

## अथ शिरोरोगाधिकारः ।

वातिके शिरसो रोगे स्नेहस्वेदान् सनावनान् ।
पानान्नमुपहारांश्च कुर्य्याद्वातामयापहान् ॥१॥
कुष्ठमेरण्डतैलञ्च लेपात्काञ्जिकपेषितम् ।
शिरोर्त्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दजम् ॥२॥
पञ्चमूलीशृतं क्षीरं नस्ये दद्याच्छिरोगदे ।
आशिरोव्यायतञ्चर्म कृत्वाष्टाङ्गुलमुच्छ्रितम् ॥३॥
तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ।
निश्चलस्योपविष्टस्य तैलैरुष्णैः प्रपूरयेत् ॥४॥
धारयेदारुजः शान्तेर्यामं यामार्द्धमेव वा ।
शिरोवस्तिर्जयत्येष शिरोरोगं मरुद्भवम् ॥५॥
हनुमन्याक्षिकर्णार्त्तिमर्दितं मूर्द्धकम्पनम् ।
तैलेनापूर्य्य मूर्द्धानं पञ्चमात्राशतानि च ॥६॥
तिष्ठेत् श्लेष्मणि पित्तेऽष्टौ दशवाते शिरोगदी ।
एव एव विधिः कार्य्यस्तथा कर्णाक्षिपूरणे ॥७॥
पैत्ते घृतं पयःसेकाः शीतलेपाः सनावनाः ।
जीवनीयानि सर्पींषि पानान्नञ्चापि पित्तनुत् ॥८॥
पित्तात्मके शिरोरोगे स्निग्धं सम्यक् विरेचयेत् ।
मृद्वीकात्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि ॥९॥

अतशीतघृताभ्यङ्गः शीतवातादिसेवनम्।
शीतस्पर्शाश्च संसेव्याः सदा दाहार्त्तिशान्तये ॥१०॥
चन्दनोशीरयष्ट्याह्वबलाव्याघ्रीनखोत्पलैः।
क्षीरपिष्टैः प्रदेहः स्याच्छृतैर्वा परिषेचनम् ॥११॥
मृणालबिसशालूकचन्दनोत्पलकेशरैः।
स्निग्धशीतैः शिरो दिह्यात् तद्वदामलकोत्पलैः ॥१२॥
यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं घृतं हितम्।
नावनं शर्कराद्राक्षामधुकैर्वापि पित्तजे ॥१३॥
त्वक्पत्रशर्करापिष्टानावनं तण्डुलाम्बुना।
क्षीरसर्पिर्हितं नस्यं रसा वा जाङ्गलाः शुभाः ॥१४॥
रक्तजे पित्तवत् सर्वं भोजनालेपसेचनम्।
शीतोष्णयोश्च व्यत्यासो विशेषो रक्तमोक्षणम् ॥१५॥
कफजे लङ्घनं स्वेदो रूक्षोष्णैः पाचनात्मकैः।
तीक्ष्णावपीड़ा धूमाश्च तीक्ष्णाश्च कवड़ा हिताः ॥१६॥
अच्छञ्च पाययेत् सर्पिः पुराणं स्वेदयेत् ततः।
मधूकसारेण शिरः स्विन्नस्यास्य विरेचयेत् ॥१७॥
कृष्णाब्दशुण्ठीमधुकशताह्वोत्पलपाकलैः।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः ॥१८॥
देवदारुनतं कुष्ठं नलदं विश्वभेषजम्।
लेपः काञ्जिकसंपिष्टस्तैलयुक्तः शिरोऽर्त्तिनुत् ॥१९॥
सन्निपातभवे कार्य्या दोषत्रयहरी क्रिया।
सर्पिःपानं विशेषेण पुराणस्यादिशन्ति हि ॥२०॥
त्रिकटुकपुष्कररजनीरास्नासुरदारुतुरङ्गगन्धानाम्।
क्वाथः शिरोऽर्त्तिजालं नासापीतो निवारयति ॥२१॥

सुरामण्डेन वर्त्तिः स्यात् श्लेष्माभिष्यन्दनाशिनी ।
पोथकीवर्त्मोपरोधक्रिमिग्रन्थिकतूणके ॥२४२॥
वर्त्मजेषु ।

इति नेत्ररोगचिकित्सा ।

## अथ शिरोरोगाधिकारः ।

वातिके शिरसो रोगे स्नेहस्वेदान् सनावनान् ।
पानान्नमुपहारांश्च कुर्य्याद्वातामयापहान् ॥१॥
कुष्ठमेरण्डतैलञ्च लेपात्काञ्जिकपेषितम् ।
शिरोर्त्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दजम् ॥२॥
पञ्चमूलीशृतं क्षीरं नस्ये दद्याच्छिरोगदे ।
आशिरोव्यायतञ्चर्म्म कृत्वाष्टाङ्गुलमुच्छ्रितम् ॥३॥
तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ।
निश्चलस्योपविष्टस्य तैलैरुष्णैः प्रपूरयेत् ॥४॥
धारयेदारुजः शान्तेर्यामं यामार्द्धमेव वा ।
शिरोवस्तिर्जयत्येष शिरोरोगं मरुद्भवम् ॥५॥
हनुमन्याक्षिकर्णार्त्तिमर्दितं मूर्द्धकम्पनम् ।
तैलेनापूर्य्य मूर्द्धानं पञ्चमात्राशतानि च ॥६॥
तिष्ठेत् श्लेष्मणि पित्तेऽष्टौ दशवाते शिरोगदी ।
एष एव विधिः कार्य्यस्तथा कर्णाक्षिपूरणे ॥७॥
पैत्ते घृतं पयःसेकाः शीतलेपाः सनावनाः ।
जीवनीयानि सर्पींषि पानान्नञ्चापि पित्तनुत् ॥८॥
पित्तात्मके शिरोरोगे स्निग्धं सम्यक् विरेचयेत् ।
मृद्वीकात्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि ॥९॥

अतधौतघृताभ्यङ्गः शीतवातादिसेवनम् ।
शीतस्पर्शाश्च संसेव्याः सदा दाहार्त्तिशान्तये ॥१०॥
चन्दनोशीरयष्ट्याह्वबलाव्याघ्रीनखोत्पलैः ।
क्षीरपिष्टैः प्रदेहः स्याच्छृतैर्वा परिषेचनम् ॥११॥
मृणालबिसशालूकचन्दनोत्पलकेशरैः ।
स्निग्धशीतैः शिरो दिह्यात् तद्वदामलकोत्पलैः ॥१२॥
यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं घृतं हितम् ।
नावनं शर्कराद्राक्षामधुकैर्वापि पित्तजे ॥१३॥
त्वक्पत्रशर्करापिष्टा नावनं तण्डुलाम्बुना ।
क्षीरसर्पिर्हितं नस्यं रसा वा जाङ्गलाः शुभाः ॥१४॥
रक्तजे पित्तवत् सर्वं भोजनालेपसेचनम् ।
शीतोष्णयोश्च व्यत्यासो विशेषो रक्तमोक्षणम् ॥१५॥
कफजे लङ्घनं स्वेदो रूक्षोष्णैः पाचनात्मकैः ।
तीक्ष्णावपीड़ा धूमाश्च तीक्ष्णाश्च कवड़ा हिताः ॥१६॥
अच्छञ्च पाययेत् सर्पिः पुराणं स्वेदयेत् ततः ।
मधूकसारेण शिरः स्विन्नस्यास्य विरेचयेत् ॥१७॥
कृष्णाब्दशुण्ठीमधुकशताह्वोत्पलपाकलैः ।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः ॥१८॥
देवदारुनतं कुष्ठं नलदं विश्वभेषजम् ।
लेपः काञ्जिकसंपिष्टस्तैलयुक्तः शिरोऽर्त्तिनुत् ॥१९॥
सन्निपातभवे कार्य्या दोषत्रयहरी क्रिया ।
सर्पिःपानं विशेषेण पुराणस्यादिशन्ति हि ॥२०॥
त्रिकटुकपुष्कररजनीरास्नासुरदारुतुरङ्गगन्धानाम् ।
क्वाथः शिरोऽर्त्तिजालं नासापीतो निवारयति ॥२१॥

नागरकल्कमिश्रं क्षीरं नस्येन योजितं पुंसाम् ।
नानादोषोद्भूतां शिरोरुजां हन्ति तीव्रतराम् ॥२२॥
नतोत्पलं चन्दनकुष्ठयुक्तं शिरोरुजायां सघृतः प्रदेहः ।
प्रपौण्डरीकं सुरदारु कुष्ठं यष्ट्याह्वमेलाकमलोत्पले च ।
शिरोरुजायां सघृतः प्रदेहो लोहैरकापद्मकचोरकैश्च ॥२३॥
शताह्वैरण्डमूलञ्च शावव्याघ्रीफलैः शृतम् ।
तैलं नस्यं मरुत्श्लेष्मतिमिरोर्ध्वगदापहम् ॥२४॥

शताह्वाद्यं तैलम् ।

जीवकर्षभकौ द्राक्षासिताशष्टीबलोत्पलैः ।
तैलं नस्यं पयःपक्वं वातपित्तशिरोगदे ॥२५॥

जीवकाद्यं तैलम् ।

जीवकर्षभकौ द्राक्षामधूकं मधुकं बला ।
नीलोत्पलं चन्दनञ्च विदारी शर्करा तथा ॥२६॥
तैलप्रस्थं पचेदेभिः शनैः पयसि षड्गुणे ।
जाङ्गलस्य तु मांसस्य तुलार्द्धस्य रसेन तु ॥२७॥
सिद्धमेतद्भवेन्नस्यं तैलमर्द्धावभेदकम् ।
वाधिर्य्यं कर्णशूलञ्च तिमिरं गलशुण्ठिकाम् ॥२८॥
वातिकं पैत्तिकञ्चैव शीर्षरोगं नियच्छति ।
दन्तचालं शिरःशूलमर्दितञ्चापकर्षति ॥२९॥

वृहज्जीवकाद्यं तैलम् ।

एरण्डमूलं तगरं शताह्वा
जीवन्ति रास्नासह सैन्धवञ्च ।
भृङ्गं विडङ्गं मधुयष्टिका च
विश्वौषधं कृष्णातिलस्य तैलम् ॥३०॥

आजं पयस्तैलविमिश्रितञ्च
चतुर्गुणे भृङ्गरसे विपक्वम्।
षड्बिन्दवो नासिकया विधेयाः
शीघ्रं निहन्युः शिरसो विकारान्॥२१॥
च्युतांश्च केशांश्चलितांश्च दन्तान्
दुर्बद्धमूलांश्च दृढ़ीकरोति।
सुपर्णदृष्टिप्रतिमञ्च चक्षु-
र्बाह्वोर्बलञ्चाभ्यधिकं ददाति॥२२॥

षड्बिन्दुतैलम्।

क्षयजे क्षयमासाद्य कर्त्तव्यो बृंहणो विधिः।
पाने नस्ये च सर्पिः स्याद्वातघ्नैर्मधुरैः शृतम्॥२३॥
क्रिमिजे व्योषनक्ताह्वशिग्रुबीजैश्च नावनम्।
अजामूत्रयुतं नस्यं क्रिमिजे क्रिमिजित् परम्॥२४॥
अपामार्गफलव्योषनिशादारकरामठैः।
सविडङ्गं शृतं मूत्रे तैलं नस्यं क्रिमिं जयेत्॥२५॥

अपामार्गतैलम्।

नागरं सगुड़ं विश्वं पिप्पली वा ससैन्धवा।
भुजस्तम्भादिरोगेषु सर्वेषूर्द्ध्वगदेषु च॥२६॥
सूर्य्यावर्त्ते विधातव्यं नस्यकर्मादि भेषजम्।
पाययेत् सगुड़ं सर्पिर्घृतपूरांश्च भक्षयेत्॥२७॥
सूर्य्यावर्त्ते शिरोवेधो नावनं क्षीरसर्पिषा।
हितः क्षीरघृताभ्यासस्ताभ्याञ्चैव विरेचनम्।
क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते॥२८॥
सशर्करं कुङ्कुममाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे।

भृशङ्कुकर्णाक्षिशिरोऽर्द्धशूले दिनाभिवृद्धिप्रभवे च रोगे ॥३९॥
कृतमालपल्लवरसे खरमञ्जरिकल्कमिश्रं नवनीतम्।
नस्येन जयति नियतं सूर्य्यावर्त्तं सुदुर्वारम् ॥४०॥
दशमूलीकषायन्तु सर्पिः सैन्धवसंयुतम्।
नस्यमर्द्धावभेदघ्नं सूर्य्यावर्त्तशिरोऽर्त्तिनुत् ॥४१॥
शिरीषमूलकफलैरवपीडञ्च योजयेत्।
अपवीडो हितो वा स्यात् वचापिप्पलीभिः स्मृतः ॥४२॥
जाङ्गलानि च मांसानि कारयेदुपनाहनम्।
तेनास्य शाम्यति व्याधिः सूर्य्यावर्त्तः सुदारुणः।
एष एव विधिः कृत्स्नः कार्य्यश्चार्द्धावभेदके ॥४३॥
शारिवोत्पलकुष्ठानि मधुकं चाम्लपेषितम्।
सर्पिस्तैलयुतो लेपः सूर्य्यावर्त्तार्द्धभेदयोः ॥४४॥
पिबेत् सशर्करं क्षीरं नीरं वा नारिकेलजम्।
सुशीतं वापि पानीयं सर्पिर्वा नस्तस्तयोः ॥४५॥
अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तहितो विधिः।
शिरावेधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ॥४६॥
आहारश्च विधातव्यो वातपित्तविनाशनः।
मधुमस्तुकसंयावहविःपूरैश्च यः क्रमः ॥४७॥
सूर्य्यावर्त्ते हितं यत्तच्छङ्खके स्वेदवर्जितम्।
क्षीरसर्पिः प्रशंसन्ति नस्तपानञ्च शङ्खके ॥४८॥
शतावरीं कृष्णतिलान् मधुकं नीलमुत्पलम्।
मूर्वां पुनर्नवाञ्चापि लेपं साध्ववतारयेत् ॥४९॥
शीततोयावसेकांश्च क्षीरसेकांश्च शीतलान्।
कल्कैश्च क्षीरिवृक्षाणां शङ्खकस्य प्रलेपनम् ॥५०॥

क्रौञ्चकादम्बहंसानां शरार्या कच्छपस्य च ।
रसैः संविहितस्याथ तस्य शङ्कसन्धिजाः ॥५१॥
ऊर्द्धं तिस्रः शिराः प्राज्ञो भिन्द्यादेव न ताड़येत् ।
शिरःकम्पेऽमृतारास्नाबलास्नेहसुगन्धिभिः ॥५२॥
स्नेहस्वेदादिवातघ्नं शिरोवस्तिश्च शस्यते ।
यष्टीमधुबलारास्नादशमूलाम्बुसाधितम् ।
मधुरैश्च घृतं सिद्धमूर्ध्वजत्रुगदापहम् ॥५३॥
यष्ट्याद्यं घृतम् ।
दशमूलबलारास्नामधुकैस्त्रिपलैः सह ।
मयूरं पक्षपित्तान्त्रशकृत्पादास्यवर्जितम् ॥५४॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत् ।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम् ॥५५॥
कर्णनासाक्षिजिह्वास्यगलरोगविनाशनम् ।
मयूराद्यमिदं ख्यातमूर्द्ध्वजत्रुगदापहम् ॥५६॥
आखुभिः कुक्कुटैर्हंसैः शशैश्चापि हि बुद्धिमान् ।
कल्केनानेन विपचेत् सर्पिरूर्द्ध्वगदापहम् ॥५७॥
दशमूलादिना तुल्यो मयूर इह गृह्यते ।
अन्ये त्वाकृतिमानेन मयूरग्रहणं विदुः ॥५८॥
मयूराद्यं घृतम् ।
प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ।
सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा ।
सर्वानूर्द्ध्वगदान् हन्ति पलितानि च शीलितम् ॥५९॥
प्रपौण्डरीकाद्यं तैलम् ।
शतं मयूरमांसस्य दशमूलबलातुलाम् ।

द्रोणेऽम्भसः पचेत् क्षुण्णं तस्मिन् पादस्थिते ततः ॥६०॥
निषिच्य पयसो द्रोणं पचेत् तत्र घृताढ़कम् ।
प्रपौण्डरीकवर्गोक्तैर्जीवनीयैश्च भेषजैः ॥६१॥
मेधाबुद्धिस्मृतिकरमूर्द्धजत्रुगदापहम् ।
मायूरमेतन्निर्दिष्टं सर्वानिलहरं परम् ॥६२॥
मन्याकर्णशिरोनेत्ररुजापस्मारनाशनम् ।
विषवातामयश्वासविषमज्वरकासनुत् ॥६३॥
बृहन्मयूरं घृतम् ।
इति शिरोरोगचिकित्सा ।

## अथासृग्दराधिकारः ।

दध्ना सौवर्च्चलाजाजीमधुकं नीलमुत्पलम् ।
पिबेत् क्षौद्रयुतं नारी वातासृग्दरपीड़िता ॥१॥
पिबेदैणेयकं रक्तं शर्करामधुसंयुतम् ।
वासकस्वरसं पैत्ते गुडूच्या रसमेव वा ॥२॥
रोहीतकान्मूलकल्कं पाण्डरेऽसृग्दरे पिबेत् ।
जलेनामलकाद्वीजकल्कं वा ससितामधु ॥३॥
धातक्याश्चासमात्रं वा आमलक्या मधुद्रवम् ।
काकजानुकमूलं वा मूलं कार्पासमेव वा ॥४॥
पाण्डुप्रदरशान्त्यर्थं पिबेत् तण्डुलवारिणा ।
अशोकवल्कलक्वाथशृतं दुग्धं सुशीतलम् ।
यथाबलं पिबेत् प्रातस्तीव्रासृग्दरनाशनम् ॥५॥
दार्वीरसाञ्जनवृषाब्दकिरातविल्व-
भल्लातकैरवकृतो मधुना कषायः ।

पीतो जयत्यतिबलं प्रदरं समूलं
पीतासिताकणविलोहितनीलशुक्लम् ॥६॥
रसाञ्जनं तण्डुलीयस्य मूलं
क्षौद्रान्वितं तण्डुलतोयपीतम्।
असृग्दरं सर्वभवं निहन्ति
श्वासञ्च भार्गी सह नागरेण ॥७॥

दशमूलं समुद्धृत्य पेषयेत् तण्डुलाम्बुना।
एतत् पीत्वा त्र्यहान्नारी प्रदरात् परिमुच्यते ॥८॥
क्षौद्रयुक्तं फलरसं काष्ठोडुम्बरजं पिबेत्।
असृग्दरविनाशाय सशर्करपयोऽन्नभुक् ॥९॥
प्रदरं हन्ति बलाया मूलं दुग्धेन मधुयुतं पीतम् ॥१०
कुशवाट्यालकमूलं तण्डुलसलिलेन रक्ताख्यम्।
शमयति मदिरापानं तदुभयमपि रक्तसंज्ञशुक्लाख्यौ॥११
गुड़ेन वदरीचूर्णं मोचमामन्तथा पयः।
पीता लाक्षा च सघृता पृथक् प्रदरनाशना ॥१२॥
रक्तपित्तविधानेन प्रदरांश्चाप्युपाचरेत्।
असृग्दरे विशेषेण कुटजाष्टकमाचरेत् ॥१३॥
पाठाजम्ब्वाम्रयोर्मध्यं शिलाभेदरसाञ्जनम्।
अम्बष्ठकीमोचरसः समङ्गापद्मकेशरान् ॥१४॥
वाह्लीकातिविषामुस्तं विल्वं लोध्रं सगैरिकम्।
कट्फलं मरिचं शुण्ठी मृद्वीका रक्तचन्दनम् ॥१५॥
कट्वङ्गवत्सकानन्ताधातकीमधुकार्जुनम्।
पुष्ये णोद्धृत्य तुल्यानि श्लक्ष्णचूर्णानि कारयेत् ॥१६॥
तानि क्षौद्रेण संयुज्य पाययेत् तण्डुलाम्बुना।

असृग्दरातिसारेषु रक्तं यच्चोपवेश्यते ॥१७॥
दोषागन्तुकृता ये च बालानां तांश्च नाशयेत्।
योनिदोषं रजोदोषं श्वेतं नीलं सपीतकम् ॥१८॥
स्त्रीणां श्यावारुणं यच्च तत् प्रसह्य निवर्त्तयेत्।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥१९॥

पुष्यानुगं चूर्णम्।

मुद्गमाषस्य निर्य्यूहे रास्नाचित्रकनागरैः।
सिद्धं सपिप्पलीबिल्वैः सर्पिः श्रेष्ठमसृग्दरे ॥२०॥

मुद्गाद्यं घृतम्।

कुमुदं पद्मकोशीरं गोधूमो रक्तशालयः।
मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका ॥२१॥
बलातिबलयोर्मूलमुत्पलं तालमस्तकम्।
विदारी शतमूली च शालपर्णी सजीवका ॥२२॥
फलं त्रिपुषबीजानि प्रत्यग्रं कदलीफलम्।
एषामर्द्धपलान् भागान् गव्यं क्षीरं चतुर्गुणम् ॥२३॥
पानीयं द्विगुणं दत्त्वा घृतप्रस्थं विपाचयेत्।
प्रदरे रक्तपित्ते च रक्तगुल्मे हलीमके ॥२४॥
बहुरूपञ्च यत् पित्तं कामलावातशोणिते।
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे ॥२५॥
तरुणी चाल्पपुष्पा च या च गर्भं न विन्दति।
अहन्यहनि च स्त्रीणां भवति प्रीतिवर्द्धनम्।
शीतकल्याणकं नाम परमुक्तं रसायनम् ॥२६॥

फलं त्रिफला। शीतकल्याणकं घृतम्।

शतावरीरसप्रस्थं चोदयित्वावपीडयेत्।

घृतप्रस्थसमायुक्तं क्षीरं द्विगुणितं भिषक् ॥ २७ ॥
अत्र कल्कानिमान् दद्यात् स्वप्लोडुम्बरसम्मितान् ।
जीवनीयानि याम्यष्टौ यष्टिपद्मकचन्दने ॥ २८ ॥
श्वदंष्ट्रा चात्मगुप्ता च बला नागबला तथा ।
शालपर्णी पृश्निपर्णी विदारी शारिवाद्वयम् ॥ २९ ॥
शर्करा च समा देया काश्मर्य्याश्च फलानि च ।
सम्यक् सिद्धन्तु विज्ञाय तद्घृतञ्चावतारयेत् ॥ ३० ॥
रक्तपित्तविकारेषु वातपित्तकृतेषु च ।
वातरक्तं चयं श्वासं हिक्कां कासञ्च दुस्तरम् ॥ ३१ ॥
अङ्गदाहं शिरोदाहं रक्तपित्तसमुद्भवम् ।
असृग्दरं सर्वभवं मूत्रकृच्छ्रं सुदारुणम् ।
एतान् रोगान् शमयति भास्करस्तिमिरं यथा ॥ ३२ ॥

बृहच्छतावरीघृतम् ।

इत्यसृग्दरचिकित्सा ।

## अथ योनिव्यापदधिकारः ।

योनिव्यापत्सु भूयिष्ठं शस्यते कर्म्म वातजित् ।
वस्त्यभ्यङ्गपरिषेकप्रलेपाः पिचुधारणम् ॥ १ ॥
वचोपकुञ्चिकाजातीकृष्णावृषकसैन्धवम् ।
अजमोदां यवक्षारं चित्रकं शर्करान्वितम् ॥ २ ॥
पिष्ट्वा प्रसन्नयालोड्य खादेत्तत् घृतभर्जितम् ।
योनिपार्श्वार्त्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥ ३ ॥
गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचनम् ।
नतवार्त्ताकिनीकुष्ठसैन्धवामरदारुभिः ॥ ४ ॥

तैलात् प्रसाधितादार्य्यः पिचुर्योनौ रुजापहः ।
घितस्नानान्तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ॥ ५ ॥
शीताः पित्तहराः कार्य्याः स्नेहनार्थं घृतानि च ।
योन्यां बलासदुष्टायां सर्वं रूक्षोष्णमौषधम् ॥ ६ ॥
पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः ।
वर्त्तिस्तुल्या प्रदेशिन्या धार्य्या योनिविशोधनी ॥ ७ ॥
हिंस्राकल्कन्तु वातार्त्ता कोष्णमभ्यज्य धारयेत् ।
पञ्चवल्कस्य पित्तार्त्ता श्यामादीनां कफोत्तरा ॥ ८ ॥
मूषिकामांससंयुक्तं तैलमातपभावितम् ।
अभ्यङ्गात् हन्ति योन्यर्शः स्वेदस्तन्मांससैन्धवैः ॥ ९ ॥
गोपित्ते मत्स्यपित्ते वा क्षौमं त्रिःसप्तभावितम् ।
मधुना किण्वचूर्णं वा दद्याच्चरणापहम् ॥ १० ॥
स्रोतसां शोधनं शोथकण्डूक्लेदहरञ्च तत् ।
कामिन्याः पूतियोन्याश्च कर्त्तव्यः स्वेदनो विधिः ॥११॥
क्रमः कार्य्यस्ततः स्नेहपिचुभिस्तर्पणं भवेत् ।
शल्लकीजिङ्गिनीजम्बुधवत्वक्पञ्चवल्कलैः ॥ १२ ॥
कषायैः साधितः स्नेहः पिचुः स्याद्विप्लुतापहः ।
कर्णिन्यां वर्त्तिका कुष्ठपिप्पल्यर्काग्रसैन्धवैः ॥ १३ ॥
वस्तमूत्रकृता धार्य्या सर्वञ्च श्लेष्मनुद्धितम् ।
त्रैवृतं स्नेहनं स्वेद उदावर्त्तानिलार्त्तिषु ।
तदेव च महायोन्यां स्रस्तायाञ्च विधीयते ॥ १४ ॥
आखोर्मांसं सपदि बहुधा खण्डखण्डीकृतं यत्
तैले पाच्यं द्रवति नियतं यावदेतन्न सम्यक् ।
तत्तैलाक्तं वसनमनिशं योनिभागे दधाना ।

हन्ति पीडाकरभागफलं नात्र सन्देहबुद्धिः॥ १५॥
शतपुष्पातैललेपाद्दरीदलजास्तथा।
पेटिकामूललेपाच्च योनिभिन्ना प्रशाम्यति॥ १६॥
मुषवीमूललेपेन प्रविष्टान्तर्वहिर्भवेत्।
योनिर्मूषरसाभ्यङ्गात् निःसृता प्रविशेदपि॥ १७॥
लोध्रतुम्बीफलालेपो योनिढाढ्यं करोति च।
वेतसमूलनिःक्वाथक्षालनेन तथैव च॥१८॥
मूषिकावागुलिवसाभ्रचर्णं योनिदाढ्यंदम्।
वचानीलोत्पलं कुष्ठं मरिचानि तथैव च॥१९॥
अश्वगन्धा हरिद्रा च गाढ़ीकरणमुत्तमम्॥२०॥
मदनफलमधुकर्पूरपूरितं भवति कामिनीजनस्य।
विगलितयौवनस्य च वराङ्गमतिगाढ़ं सुकुमारम्॥२१॥
पञ्चपल्लवयष्ट्याह्वमालतीकुसुमैर्घृतम्।
रविपक्वमन्यथा वा योनिगन्धविनाशनम्॥२२॥
इक्ष्वाकुवीजदन्तीचपलागुड़मदनकिण्वयष्ट्याह्वैः।
सस्नुक्क्षीरैर्वर्त्तिर्योनिगता कुसुमसञ्जननी॥२३॥
सकाञ्जिकं जवापुष्पं भृष्टं ज्योतिष्मतीदलम्।
दूर्वापिष्टञ्च सम्प्राश्य वनिता लभ्तंव लभेत्॥२४॥
धात्र्यञ्जनाभयाचूर्णं तोयपीतं रजो हरेत्।
शैलुच्छदमिश्रपिष्टं भक्षणञ्च तदर्थकृत्॥२५॥
पुष्पोद्धृतं लक्ष्मणायाश्चशाखायास्तु कन्यया।
पिष्टं मूलं दुग्धघृतपीतमृतौ तु पुत्रदम्॥२६॥
क्वाथेन हयगन्धायाः साधितं सघृतं पयः।
ऋतुस्नाता बाला पीत्वा गर्भं धत्ते न संशयः॥२७॥

पिप्पल्यः शृङ्गवेरञ्च मरिचं केशरं तथा ।
घृतेन सह पातव्यं बन्ध्यापि लभते सुतम् ॥२८॥
सुवर्णस्य रूप्यकस्य चूर्णं ताम्रस्य चाज्यसंमिश्रे ।
पीते शुद्धे चैव भेषजयोगाङ्गवेद् गर्भः ॥२९॥
कृत्वा शुद्धौ स्नानं विलङ्घ्य दिवसान्तरे ततः प्रातः ।
स्नात्वा द्विजाय भक्त्या सम्पूज्य लोकनाथेशम् ॥३०॥
श्वेतबलाङ्घ्रिकयष्टीं कर्षं कर्षं पलन्तु शर्करायाः ।
पिष्ट्वैकवर्णजीववत्साया गोस्तु दुग्धेन ॥३१॥
समधिकघृतेन पीतं नात्र दिने देयमन्नमन्यच्च ।
क्षुधिते सदुग्धमन्नं दद्याद्‌पुरुषसन्निधेस्तस्याः ॥३२॥
समदिवसे शुभयोगे दक्षिणपार्श्वावलम्बिनी धीरा ।
त्यक्तस्त्यन्तरसङ्गप्रहृष्टमनसोऽतिवृद्धधातोश्च ।
पुरुषस्य सङ्गममात्रात् लभते पुत्रं ततो नियतम् ॥३३॥
गोष्ठजातवटकस्य प्रागुत्तरशाखजे शुभे ।
माषौ द्वौ च तथा गौरसर्षपौ दधियोजितौ ।
पुष्यापीतौ द्रुतापन्नगर्भायाः पुत्रकारकौ ॥३४॥
कानकान् राजतान् वापि लौहान् पुरुषकानमून् ।
ध्माताग्निवर्णान् पयसो दध्नो वाप्युदकस्य वा ।
क्षिप्ताञ्जलौ पिबेत् पुष्ये गर्भे पुत्रत्वकारकान् ॥३५॥
मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला ।
मेदा पयस्या काकोली मूलञ्चैवाश्वगन्धजम् ॥३६॥
अजमोदा हरिद्रे द्वे हिङ्गुकं कटुरोहिणी ।
उत्पलं कुमुदं द्राक्षाकाकोल्यौ चन्दनद्वयम् ॥३७॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ।

शतावरीरसक्षीरं घृताद्देयं चतुर्गुणम् ॥ ३८ ॥
सर्पिरेतन्नरः पीत्वा नित्यं स्त्रीषु वृषायते ।
पुत्रान् जनयते नारी मेधाढ्यान् प्रियदर्शनान् ॥ ३९ ॥
या चैव स्थिरगर्भा स्यात् या वा जनयते मृतम् ।
अल्पायुषं वा जनयेत् या च कन्यां प्रसूयते ॥ ४० ॥
योनिदोषे रजोदोषे परिस्रावे च शस्यते ।
प्रजावर्द्धनमायुष्यं सर्वग्रहनिवारणम् ॥ ४१ ॥
नाम्ना फलघृतं ह्येतत् अश्विभ्यां परिकीर्त्तितम् ।
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र चिकित्सकाः ॥ ४२ ॥
जीवद्वत्सैकवर्णाया घृतमत्र प्रशस्यते ।
आरण्यगोमयेनापि वह्निज्वाला प्रदीयते ॥ ४३ ॥

फलघृतम् ।

सहचरे द्वे त्रिफलां गुडूचीं सपुनर्नवाम् ।
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम् ॥ ४४ ॥
कल्कीकृत्य घृतप्रस्थं पचेत् क्षीरचतुर्गुणम् ।
तत्सिद्धं प्रपिबेन्नारी योनिशूलप्रपीडिता ॥ ४५ ॥
पिण्डिता चलिता या च निःसृता विवृता च या ।
पिण्डयोनिस्तु विस्रस्ता षण्ढयोनिश्च या स्मृता ॥ ४६ ॥
प्रपद्यन्ते तु ताः स्थानं गर्भं गृह्णन्ति चासकृत् ।
एतत् फलघृतं नाम योनिदोषहरं परम् ॥ ४७ ॥

फलघृतम् ।

सिद्धार्थकं वचा ब्राह्मी शङ्खपुष्पी पुनर्नवा ।
पयस्यामययष्ट्याह्वकटुकैलाफलत्रयम् ॥ ४८ ॥
शारिवे रजनी पाठा भृङ्गदाव सुवर्चला ।

मञ्जिष्ठा त्रिफला श्यामा वृषपुष्पं समेरिकम् ॥ ४९ ॥
धीमान् पन्ना घृतप्रस्थं सम्यक् मात्राभिमन्त्रितम् ।
द्विमासगर्भिणी नारी षण्मासात् न भोजयेत् ॥ ५० ॥
सर्वाङ्गं जनयेत् पुत्रं शूरं पण्डितमानिनम् ।
जडगद्गदमूकत्वं पानादेवापकर्षति ॥ ५१ ॥
सप्तरात्रप्रयोगेण नरः श्रुतिधरो भवेत् ।
नाग्निर्दहति तद्वेश्म न वज्रं हन्ति न ग्रहाः ॥ ५२ ॥
न तत्र म्रियते बालो यत्रास्ते सोमसञ्ज्ञितः ।
वन्ध्यापि लभते पुत्रं सर्वामयविवर्जितम् ।
योनिदुष्टाश्च या नार्य्यो रेतोदुष्टाश्च ये नराः ॥ ५३ ॥
अस्य प्रभावात् कुक्षिस्थः स्फुटवाग्व्याहरत्यपि ।
द्राक्षा परूषकाश्मर्य्यौ फलत्रयमुदाहृतम् ॥ ५४ ॥

ओं नमो महाविनायकायामृतं
रक्ष रक्ष मम फलसिद्धिम् ।
देहि रुद्रवचनेन स्वाहा
सप्तदूर्वाभिमन्त्रितम् ॥ ५५ ॥

सोमघृतम् ।

नीलोत्पलोशीरमधूकयष्टीद्राक्षाविदारीकुशपद्ममूलैः ।
स्याज्जीवनीयैश्च घृतं विपक्वं शतावरीकारसदुग्धमिश्रम् ॥५६॥
तच्छर्करापादयुतं प्रशस्तम् असृग्दरे मारुतरक्तपित्ते ।
क्षीणे बले रेतसि संप्रनष्टे कृच्छ्रे च रक्तप्रभवे च गुल्मे ॥५७॥

नीलोत्पलाद्यं घृतम् ।

शतावरीमूलतुलाश्चतस्रः संप्रपीड़येत् ।
रसेन क्षीरतुल्येन पचेत् तेन घृताढ़कम् ॥५८॥

जीवनीयैः शतावर्य्या मृद्वीकाभिः परूषकैः।
पिष्टैः प्रियालैश्चाश्वगन्धैर्द्दियष्टीमधुकैर्भिषक् ॥५९॥
सिद्धशीते च मधुनः पिप्पल्याश्चाष्टकं पलम्।
दत्त्वा दशपलञ्चात्र सितायास्तद्विमिश्रितम् ॥६०॥
ब्राह्मणान् प्राशयेत् पूर्वं लिह्यात् पाणितलं ततः।
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनञ्च तत् ॥६१॥
क्षतक्षयं रक्तपित्तं कासं श्वासं हलीमकम्।
कामलां वातरक्तञ्च विसर्पं हृच्छिरोग्रहम्।
उन्मादादीनपस्मारान् वातपित्तात्मकान् जयेत् ॥६२॥

बृहच्छतावरीघृतम्।

दग्ध्वा शङ्खं क्षिपेद्रम्भास्वरसे तत् तु पेषितम्।
तुल्यालं लेपतो हन्ति रोमगुह्यादिसम्भवम् ॥६३॥
रक्ताञ्जनापुष्पचूर्णं युक्तं तैलन्तु सार्षपम्।
सप्ताहं व्युषितं हन्ति मूलाद्रोमाण्यसंशयः।
कुसुम्भतैलाभ्यङ्गो वा रोम्णामुत्पाटितेऽन्ततः ॥६४॥
आरग्वधमूलपलं कर्षद्वितयं शङ्खचूर्णस्य।
हरितालस्य च खरजे मूत्रप्रस्थे कटुतैलं पक्वम् ॥६५॥
तैलं तद्दिदं शङ्खहरितालचूर्णितं लेपात्।
निर्मूलयति च रोमाण्यन्येषां सम्भवो नैव ॥६६॥

आरग्वधाद्यं तैलम्।

कर्पूरभल्लातकशङ्खचूर्णं क्षारो यवानाञ्च मनःशिला च।
तैलं विपक्वं हरितालमिश्रं रोमाणि निर्मूलयति क्षणेन ॥६७॥
शुक्तिशम्बूकशङ्खानां दीर्घवृन्तात् कम्बुकात्।
दग्ध्वा क्षारं समादाय खरमूत्रे च गालयेत् ॥६८॥

क्षाराष्टभागं विपचेत् तैलञ्च सार्षपं बुधः ।
इदमन्तःपुरे देयं तैलमात्रेयपूजितम् ॥६९॥
बिन्दुरेकः पतेद्यत्र तत्र रोमा पुनर्भवः ।
मदनादिक्रमे देयमश्विभ्याञ्च विनिर्मितम् ॥७०॥
अर्शसां कुष्ठरोगाणां पामादद्रुविचर्चिकाम् ।
क्षारतैलमिदं श्रेष्ठं सर्वक्लेदहरं परम् ॥७१॥
क्षारतैलम् ।

इति योनिव्यापच्चिकित्सा ।

## अथ स्त्रीरोगाधिकारः ।

मधुकं शाकबीजञ्च पयसा सुरदारु च ।
अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥१॥
वृक्षादनी पयस्या च तथैवोत्पलशारिवा ।
अनन्ता शारिवा रास्ना पद्मामधुकमेव च ॥२॥
बृहतीद्वयकाश्मर्य्यक्षीरिशुङ्गास्त्वचो घृतम् ।
पृथक्पर्णी बला शिग्रु श्वदंष्ट्रा मधुयष्टिका ॥३॥
शृङ्गाटकं बिसं द्राक्षा कशेरु मधुकं सिता ।
मासेषु सप्त योगाः स्युरर्द्धश्लोकास्तु सप्तसु ॥४॥
यथाक्रमं प्रयोक्तव्या गर्भस्रावे पयोऽन्विताः ।
कपित्थविल्वबृहतीपटोलेक्षुनिदिग्धिकाः ॥५॥
मूलानि क्षीरसिद्धानि दापयेत् भिषगष्टमे ।
नवमे मधुकानन्तापयस्याशारिवाः पिबेत् ॥६॥
पयस्तु दशमे शुण्ठ्या शृतशीतं प्रशस्यते ।
सक्षीरा वा हिता शुण्ठी मधुकं देवदारु च ॥७॥

एवमाप्यायते गर्भस्तीव्रा रुक् चोपशाम्यति।
कुशकाशोरुबूकानां मूलैर्गोक्षुरकस्य च।
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत् परम् ॥८॥
कशेरुशृङ्गाटकजीवनीयपद्मोत्पलैरण्डशतावरीभिः।
सिद्धं पयः शर्करया विमिश्रं संस्थापयेद्गर्भमुदीर्णशूलम् ॥९॥
कशेरुशृङ्गाटकपद्मकोत्पलं
समुद्गपर्णीमधुकं सशर्करम्।
सशूलगर्भस्रुतिपीड़िताङ्गना
पयोविमिश्रं पयसान्नभुक् पिबेत् ॥१०॥
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम्।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः।
गर्भशोषे त्वामगर्भाः प्रसहाश्च सदा हिताः ॥११॥
पाठालाङ्गलिसिंहास्यमयूरकजटैः पृथक्।
नाभिवस्तिभगालेपात् सुखं नारी प्रसूयते ॥१२॥
परूषकस्थिरामूललेपस्तद्वत् पृथक् पृथक्।
वासामूले ध्रुवं तद्वत् कटिबद्धे सूते द्रुतम् ॥१३॥
पाठायास्तु शिफां योनौ या नारी संप्रधारयेत्।
उरःप्रसवकाले च सा सुखेन प्रसूयते ॥१४॥
तुषाम्बु परिपिष्टेन मूलेन परिलेपयेत्।
लाङ्गल्याश्चरणौ सूते क्षिप्रमेतेन गर्भिणी ॥१५॥
आटरूषकमूलेन नाभिवस्तिभगालेपः कर्त्तव्यः।
तालतरूद्भवमूले मुक्तकच्छे धृते पुंसाम ॥१६॥
गृहाम्बुना गेहधूमपानं गर्भापकर्षणम् ॥१७॥
मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम्।

घृतेन सह पातव्यं सुखं नारी प्रसूयते ॥१८॥
पुटदग्धसर्पकञ्चुकमसृणमसीकुसुमसारसहिताञ्जिताक्षी ।
झटिति विशल्या जायेत गर्भवती मूढ़गर्भापि ॥१९॥
उष्णाम्बुना हिङ्गुसिन्धुपानं गर्भापकर्षणम् ॥२०॥
इहामृतञ्च सोमश्च चित्रभानुश्च भाविनि ।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥ २१ ॥
इदममृतमपां समुद्धृतं वै
भवलघुगर्भमिमं विमुञ्चतु स्त्री ।
तदनलपवनार्कवासवास्ते
सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ॥ २२ ॥
मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्य्येण रश्मयः ।
मुक्तः सर्वभयाद् गर्भ एह्येहि मारिच स्वाहा ॥ २३ ॥
जलं च्यवनमन्त्रेण सप्तवाराभिमन्त्रितम् ।
पीत्वा प्रसूयते नारी दृष्ट्वा चोभयत्रिंशकम् ।
तथोभयपञ्चदशदर्शनं सुखसूतिकृत् ॥ २४ ॥
नारी ऋतुवसुभिः सह पञ्चदिगष्टादशभिरेव च ।
अर्कभुवनाब्धिसहितैरुभयत्रिंशकमिदमाश्चर्य्यम् ।
वसुगुणाब्धरेकबाणनवषट्सप्तयुगैः क्रमात् ॥ २५ ॥
सर्वं पञ्चदशाद्दिस्तु त्रिंशकं नवकोष्ठके ।
कटुतुम्ब्यहिनिर्मोककृतवेधनसर्षपैः ॥ २६ ॥
कटुतैलान्वितो धूमो योनेः पातयतेऽमराम् ।
कचवेष्टितयाङ्गुल्या घृष्टे कण्ठे सुखं पतत्यमरा ॥२७॥
एरण्डस्य वनैः काको गङ्गातीरमुपागतः ।
इतः पिबति पानीयं विशल्या गर्भिणी भवेत् ॥ २८ ॥

अनेन समधामन्त्र्य जलं देयं विशल्यकम् ॥२९॥
मूलेन लाङ्गलिक्या वा संलिप्ते पाणिपादे च।
अमरापातनं मद्यैः पिप्पल्यादिरजः पिबेत् ॥ ३० ॥
गरीमदनदहनमूलं चिरजमपि।
गर्भंमृतममृतं वा निपातयति ॥ ३१ ॥
शालिमूलाक्षमात्रं वा मूत्रेणाम्लेन वान्वितम्।
उपकुञ्चिकां पिप्पलीञ्च मदिरां लाभतः पिबेत् ॥३२॥
सौवर्चलेन संयुक्तां योनिशूलनिवारणीम्।
सूताया हृच्छिरोवस्तिशूलं मक्कल्लसञ्ज्ञितम् ॥ ३३ ॥
यवक्षारं पिबेत् तत्र सर्पिषोष्णोदकेन वा।
पिप्पल्यादिगणक्काथं पिबेद्वा लवणान्वितम् ॥ ३४ ॥
पारावतशकृत् पीतं शालितण्डुलवारिणा।
गर्भपातान्तरोत्थे तु रक्तस्रावनिवारणम् ॥ ३५ ॥
जलपिष्टवरुणपत्रैः सघृतैरुद्दर्त्तनालेपौ तु।
किक्किशरोग हरतो गोमयघर्षादयो विहितौ ॥३६॥
ह्रीवेरारणालरक्तचन्दनबलाधन्याकवत्सादनी
मुस्तोशीरयवासपर्प्पटविषाक्काथं पिबेद्गर्भिणी।
नानादोषयुतातिसारकगदे रक्तस्रुतौ वा ज्वरे
योगोऽयं मुनिभिः पुरा निगदितः सूत्यामये शस्यते॥३७
अमृतानागरसहचरभद्रोत्कटपञ्चमूलजलदलशृतम्।
मधुसंयुक्तं निवारयति सज्वरं सूतिकातङ्कम् ॥ ३८ ॥
सहचरपुष्करवेतसमूलं वैकङ्कतं दारुकुलत्थसमम्।
जलमत्र सैन्धवहिङ्गुयुतं सद्यो घोरसूतिकाशूलहरम्॥३९
कृशमूलीकृतः क्काथः सद्यः सूतिरुजापहः।

पिप्पली पिप्पलीमूलं चव्यं शुण्ठी यमानिका । ४० ।
जीवके द्वे हरिद्रे द्वे विड़सौवर्चलं तथा ।
एतैरेवौषधैः पिष्टैरारणालं विपाचितम् ॥ ४१ ॥
आमवातहरं वृष्यं कफघ्नं वह्निदीपनम् ।
काञ्जिकं वज्रकं नाम स्त्रीणामग्निविवर्द्धनम् ॥४२॥
मक्कल्लशूलशमनं परं चीराभिमर्दनम् ।
चीरपाकविधानेन काञ्जिकस्यापि साधनम् ॥४३॥

वज्रकाञ्जिकम् ।

जीरकं हवुषा धान्यं शताह्वा सुरदारु च ।
यमानी त्र्यष्टको हिङ्गुपत्रिकाकासमर्दकम् ॥४४॥
पिप्पली पिप्पलीमूलमजमोदाथ वाष्पिका ।
चित्रकञ्च पलांशानि तथान्यच्च चतुःपलम् ॥४५॥
कशेरुकं नागरञ्च कुष्ठं दीप्यकमेव च ।
गुड़स्य च शतं दद्यात् घृतप्रस्थं तथैव च ॥४६॥
चीरद्विप्रस्थसंयुक्तं शनैर्मृद्वग्निना पचेत् ।
पञ्चजीरक इत्येष सूतिकानां प्रशस्यते ॥४७॥
गर्भार्थिनीनां नारीणां बृंहणीये समारुते ।
विंशतिं व्यापदो योनेः कासं श्वासं ज्वरं चयम् ॥४८॥
हलीमकं पाण्डुरोगं दौर्गन्ध्यं बहुमूत्रताम् ।
हन्ति पीनोन्नतकुचाः पद्मपत्रायतेक्षणाः ।
उपयोगात् स्त्रियो नित्यमलक्ष्मीमलवर्जिताः ॥४९॥

पञ्चजीरकगुड़ः ।

वनकार्पासिकेक्षूणां मूलं सौवीरकेण वा ।
विदारीकन्दं सुरया पिबेद्वा स्तन्यवर्द्धनम् ॥ ५० ॥

दुग्धेन शालितण्डुलचूर्णपानं विवर्द्धयेत्।
स्तन्यं समाहृतः क्षीरमेविन्यास्तु न संशयः ॥५१॥
हरिद्रादिं वचादिं वा पिबेत् स्तन्यविशुद्धये।
तत्र वातात्मके स्तन्ये दशमूलीजलं पिबेत् ॥५२॥
पित्तदुष्टेऽमृताभीरुपटोलं निम्बचन्दनम्।
धात्रीकुमारश्च पिबेत् क्वाथयित्वा सशारिवम् ॥५३॥
कफे वा त्रिफलामुस्ताभूनिम्बं कटुरोहिणीम्।
धात्री स्तन्यविशुद्ध्यर्थं मुद्गयूषरसाशिनी ॥५४॥
भार्गीवचादारुपाठाः पिबेत् सातिविषाः शृताः ॥५५॥
कुक्कुरामच्छुकामूलं चर्वितमास्ये विधारितं जयति।
समाहात् स्तनकीलं स्तन्यं चैकान्ततः कुरुते ॥५६॥
शोथं स्तनोत्थितमवेक्ष्य भिषक् विदध्यात्
यद्विद्रधावभिहितं त्विह भेषजानि।
आमे विदह्यति तथैव गते च पाकं
तस्याः स्तनौ सततमेव च निर्दुहीत ॥५७॥
विशालामूललेपस्तु हन्ति पीड़ां स्तनोत्थिताम्।
निशाकणकफलाभ्यां लेपश्चापि स्तनार्त्तिहा ॥५८॥
मूषिकवसया शूकरगजमहिषमांसचूर्णसंयुतया।
अभ्यङ्गमर्दनाभ्यां कठिनपीनस्तनौ भवतः ॥५९॥
महिषीभवनवनीतं व्याधिबलोग्रा तथैव नागबला।
पिष्टा मर्दनयोगात् पीनं कठिनं स्तनं कुरुते ॥६०॥
श्रीपर्णीरसकल्काभ्यां तैलं सिद्धं तिलोद्भवम्।
तत् तैलं तूलकेनैव स्तनस्योपरि धारयेत्।

पतितावुत्थितौ स्त्रीणां भवेयातां पयोधरौ ॥ ६१ ॥

श्रीपर्णीतैलम्।

काश्मीरतुरगगन्धाशारिवागजपिप्पलीविपक्केन।
तैलेन यान्ति वृद्धिं स्तनकर्णवराङ्गलिङ्गानि ॥ ६२ ॥
प्रथमर्त्तौ तण्डुलाम्भोनस्यं कुर्य्यात् स्तनौ स्थिरौ।
गोमहिषीघृतसहितं तैलं श्यामाकृताञ्जलिवचाभिः॥ ६३
सत्रिकटुनिशाभिः सिद्धं नस्यं स्तनोत्थापनं परम्।
तनूकरोति मध्यं पीतं मथितेन माधवीमूलम् ॥ ६४॥
स्याच्छिथिलापि च गाढ़ा सुरगोपाज्याभ्यङ्गतो योनिः
शरवहलस्थिरबन्धनरज्ज्वा सन्ताड़नाद्धि दयितेन ॥ ६५॥
वश्यत्यबलाद्वेषः पत्यौ सहजः कृतोऽथवा योगैः।
दत्त्वैव दुग्धभक्तं विप्रायोत्पाद्य सितबलामूलम्।
पुष्ये कन्यापिष्टं दत्तमनिच्छाहरं भक्ष्ये ॥६६॥

इति स्त्रीरोगचिकित्सा।

## अथ बालरोगाधिकारः।

कुष्ठवचाभयाब्राह्मीकणकं क्षौद्रसर्पिषा।
वर्णायुःकान्तिजननं लेहं बालस्य दापयेत्॥ १ ॥
स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत्।
तर्काधो गुड़िकां लग्नां निर्वाप्य कटुतैलके।
तत्तैलं पानतो हन्ति बालानामुल्वमुद्धतम्॥ २ ॥
व्योषशिवोग्रारजनीकल्कं वा पीतमथ पयसा।
उल्वं निःशेषं कुरुते पटुतां बालस्य चात्यन्तम् ॥३॥
घृतपिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा।

वै दयेदुत्थितां नाभिं शोथस्तेन प्रशाम्यति ॥ ४ ॥
नाभिपाके निशालोध्रप्रियङ्गुमधुकैः शृतम्।
तैलमभ्यञ्जने शस्तमेभिर्वाप्यवचूर्णनम् ॥ ५ ॥
सोमग्रहणे विधिवत् केकीशिखामूलमुद्धृतं बद्धम्।
जघनेऽथ कन्दरायां क्षपयत्यहिण्डिकां नियतम् ॥६॥
सप्तदलपुष्पं मरिचं पिष्टं गोरोचनासहितम्।
पीतं तद्वत् तण्डुलभक्तकृतो दुग्धपिष्टकप्राशः ॥ ७ ॥
जम्बूकनासावायसजिह्वानाभिर्वराहसम्भूता।
कांश्यं रसोऽथ गरलं प्रावृड्भेकस्य वामजङ्घास्थि ॥८॥
इत्येकशोथमिलितं विधृतं ग्रीवादिकटिदेशे।
अहिण्डिकाप्रशमनमभ्यङ्गो नातिपथ्यविधिः ॥ ९ ॥
अनामके घुर्घुरिकावुक्कामरिचरोचना।
नवनीतञ्च संमिश्र खादेत् तद्रोगनाशनम् ॥ १० ॥
तैलाक्तशिरस्तालुनि सप्तदलार्कस्नुहीभवं क्षीरम्।
दत्त्वा रजनीचूर्णं दत्ते नश्येदनामकाख्यः ॥ ११ ॥
लेहयेच्च शुना बालं नवनीतेन लेपितम्।
स्फुटकपवलरसोद्वर्त्तनञ्च हि तद्धितम् ॥ १२ ॥
तैलस्य भागमेकं मूत्रस्य द्वौ च शिम्बिदलरसस्य।
गव्यं पयश्चतुर्गुणमेवं दत्त्वा पचेत् तैलम्।
तेनाभ्यङ्गः सततं रोगमनामकाख्यमपहरति ॥ १३ ॥
अर्कतूलकमाविकरोमाण्यादाय केशराजस्य।
स्वरसेनाक्ते वस्त्रे कृत्वा वर्त्तिञ्च तैलाक्ताम् ॥ १४ ॥
तज्जातकज्जलाञ्जितलोचनयुगलोऽप्यलङ्कृतो बालः।
कष्टमनामकरोगं क्षपयति भूतादिकञ्चापि ॥१५॥

चालनिकातलसंस्थितपोतं संप्राश्य गव्यमूत्रे च ।
श्रीकोद्यालिकायां रजकक्षारोदकस्नानम् ॥१६॥
दासक्रयणश्रावणवराटिकारसेन्द्रपूरिता कृत्वा कण्ठे ।
नलिनीदले च शयनं सुकष्टमनामकाख्यरोगघ्नम् ॥१७॥
भैषज्यं पूर्वमुद्दिष्टं नराणां यज्ज्वरादिषु ।
देयन्तदेव बालानां मात्रा तस्य कनीयसी ॥ १८ ॥
प्रथमे मासि जातस्य शिशोर्भेषजरत्तिका ।
अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः ॥ १९ ॥
एकैकां वर्द्धयेत् तावद् यावत् संवत्सरो भवेत् ।
तदूर्द्धं मासवृद्धिः स्याद् यावत्षोड़शाब्दिका ॥ २० ॥
हरिद्राद्वययष्ट्याह्वसिंहीशक्रयवैः कृतः ।
शिशोर्ज्वरातिसारघ्नः कषायस्तस्य दोषजित् ॥२१॥

हरिद्रादिः ।

घनकृष्णारुणाशृङ्गीचूर्णं क्षौद्रेण संयुतम् ।
शिशोर्ज्वरातिसारघ्नं कासश्वासवमीहरम् ॥ २२ ॥

बालचातुर्भद्रिका ।

धातकीविल्वधन्याकलोध्रेन्द्रयवबालकैः ।
लेहः क्षौद्रेण बालानां ज्वरातीसारवान्तिजित् ॥२३॥

धातक्यादिः ।

रजनीदारुसरलश्रेयसी बृहतीद्वयम् ।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ॥ २४ ॥
ग्रहणीदीपनं हन्ति मारुतार्त्तिं सकामलाम् ।
ज्वरातीसारपाण्डुघ्नं बालानां सर्वशोथनुत् ॥ २५ ॥
मिषीकृष्णाञ्जनं लाजाशृङ्गीमरिचमाक्षिकैः ।

लेहः शिशोर्विधातव्यश्छर्दिकासज्वरापहः ॥ २६ ॥

शृङ्गीं समुस्तातिविषां विचूर्ण्य
लेहं विदध्यान्मधुना शिशूनाम्।
कासज्वरच्छर्दिभिरर्दितानां
समाक्षिकाञ्चातिविषां तथैकाम् ॥ २७ ॥

शृङ्ग्यादिः।

पीतं पीतं वमेद्यस्तु स्तन्यं तन्मधुसर्पिषा।
द्विवार्त्ताकीफलरसं पञ्चकोलञ्च लेहयेत् ॥ २८ ॥
आम्रास्थिलाजसिन्धूत्थैर्लेहः क्षौद्रेण छर्दिनुत् ॥ २९ ॥
पिप्पलीमरिचानान्तु चूर्णं समधुशर्करम्।
रसेन मातुलुङ्गस्य हिक्काच्छर्दिनिवारणम् ॥३०॥
पेटीपाठामूलाज्जम्ब्वाः सहकारवल्कलतः कल्कः।
इत्येकशश्च पिण्डो विधृतो ह्यग्राभिमध्यतालवादौ।
छर्द्यतीसारजं वेगं प्रबलं धत्ते तदेव च नियमेन ॥३१॥

बिल्वञ्च पुष्पाणि च धातकीनां
जलं सलोध्रं गजपिप्पली च।
क्काथावलेहौ मधुना विमिश्रौ
बालेषु योज्यावतिसारितेषु ॥ ३२ ॥

समङ्गाधातकीलोध्रं शारिवाभिः शृतं जलम्।
दुर्द्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम् ॥ ३३ ॥
नागरातिविषामुस्तबालकेन्द्रयवैः शृतम्।
कुमारं पाययेत् प्रातः सर्वातीसारनाशनम् ॥३४॥
समङ्गाधातकीपद्मं वयस्था कच्छुरा तथा।
पिष्टै रेतैर्यवागूः स्यात् सर्वातीसारनाशिनी ॥३५॥

बिल्वमूलकषायेण लाजाश्चैव सशर्करा: ।
आलोड्य पाययेद्‌ बालं छर्द्यतीसारनाशनम् ॥ ३६ ॥
कल्क: प्रियङ्गुकोलास्थिमध्यमुस्तरसाञ्जनै: ।
क्षौद्रलीढ: कुमारस्य छर्दितृष्णातिसारनुत् ॥ ३७ ॥
मोचरस: समङ्गा च धातकीपद्मकेशरम् ।
पिष्टैरेतैर्यवागू: स्याद्रक्तातीसारनाशिनी ॥ ३८ ॥
लेहस्तैलसिताक्षौद्रतिलयष्ट्याह्वकल्कित: ।
बालस्य हन्ध्यान्नियतं रक्तस्रावं प्रवाहिकाम् ॥ ३९ ॥
लाजासयष्टीमधुकं शर्कराक्षौद्रमेव च ।
तण्डुलोदकसंसिक्तं क्षिप्रं हन्ति प्रवाहिकाम् ॥ ४० ॥
अङ्कोठमूलमथवा तण्डुलसलिलेन वटजमूलं वा ।
पीतं हन्त्यतीसारं ग्रहणीरोगं सुदुर्वारम् ॥ ४१ ॥
सितजीरकसर्जचूर्णं बिल्वदलोत्थाम्बुमिश्रितं पीतम् ।
हन्त्यामरक्तशूलं गुडसहित: श्वेतसर्जो वा ॥ ४२ ॥
मरिचमहौषधकुटजं द्विगुणीकृतमुत्तरोत्तरं क्रमश: ।
गुडतक्रयुक्तमेतद्‌ ग्रहणीरोगं निहन्त्याशु ॥ ४३ ॥
बिल्वशक्राम्बुमोचाब्दसिद्धमाजं पय: शिशो: ।
समां सरक्तां ग्रहणीं पीतं हन्यात् त्रिरात्रत: ॥ ४४ ॥
तद्वदजाक्षीरसमो जम्बुत्वगुद्भवो रस: ।
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् ॥ ४५ ॥
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ ४६ ॥
कणोषणसिताक्षौद्रसूक्ष्मैलासैन्धवै: कृत: ।
मूत्रग्रहे प्रयोक्तव्य: शिशूनां लेह उत्तम: ॥ ४७ ॥
छर्दिन सिन्धुविश्वैलाहिङ्गुभार्गीरजो लिहन् ।

आनाहं वातिकं शूलं जयेत् तोयेन वा शिशुः ॥४८॥
हरीतकीवचाकुष्ठं कल्कं माक्षिकसंयुतम्।
पीत्वा कुमारः स्तन्येन मुच्यते तालुपातनात् ॥४९॥
मुखपाके तु बालानां साम्रसारमयोरजः।
गैरिकं क्षौद्रसंयुक्तं भेषजं सरसाञ्जनम् ॥५०॥
अश्वत्थत्वग्दलक्षौद्रैर्मुखपाके प्रलेपनम्।
दार्वीयष्ट्याभयाजातीपत्रक्षौद्रैस्तथापरम् ॥५१॥
सह जम्बीररसेन मुद्गलरसघर्षणं सद्यः।
क्षतमुपहन्ति हि पाकं मुखजं बालस्य चाश्वेव ॥५२॥
लावतित्तिरपक्षूररजः पुष्परसान्वितम्।
द्रुतं करोति बालानां पद्मकेशरवन्मुखम् ॥५३॥
दन्तोद्भवोत्थरोगेषु न बालमतियन्त्रयेत्।
स्वयमप्युपशाम्यन्ति जातदन्तस्य ते गदाः ॥५४॥
सदन्तो यस्तु वा ये तु दन्ताः प्रोथस्य चोत्तराः।
कुर्य्युस्तस्य कृतः शान्तिं बालस्यापि द्विजातयः।
दद्यात् सदक्षिणं बालं नैनमेनं प्रपूजयेत् ॥५५॥
पञ्चमूलीकषायेण सघृतेन पयः शृतम्।
सशृङ्गवेरं सगुडं शृतं हिक्कार्दितः पिबेत् ॥५६॥
सुवर्णगैरिकस्यापि चूर्णानि मधुना सह।
लीढ्वा सुखमवाप्नोति क्षिप्रं हिक्कार्दितः शिशुः ॥५७॥
चित्रकं शृङ्गवेरञ्च तथा दन्ती गवाक्ष्यपि।
चूर्णं कृत्वा तु सर्वेषां सुखोष्णेनाम्बुना पिबेत्।
श्वासं कासमथो हिक्कां कुमाराणां प्रणाशयेत् ॥५८॥
द्राक्षायासाभयाकृष्णाचूर्णं सक्षौद्रसर्पिषा।

लीढं श्वासं निहन्त्याशु कासञ्च तमकं तथा ॥५८॥
पुष्करातिविषाशृङ्गीमागधीधन्वयासकैः ।
तच्चूर्णं मधुना लीढं शिशूनां पञ्चकासनुत् ॥६०॥
दाडिमस्य च बीजानि जीरकं नागकेशरम् ।
चूर्णितं शर्कराक्षौद्रलीढं तृष्णाविनाशनम् ॥६१॥
मायूरपक्षभस्माभ्युषितजलं तेन भावितं पेयम् ।
तृष्णाघ्नं वटकाष्ठजभस्मजलं वक्त्रशोषजिद् घृतं वक्त्रे ॥६२॥
पिष्टैश्छागेन पयसा दार्वीमुस्तकगैरिकैः ।
बहिरालेपनं शस्तं शिशोर्नेत्रामयापहम् ॥६३॥
मनःशिला शङ्खनाभिः पिप्पल्योऽथ रसाञ्जनम् ।
वर्त्तिः क्षौद्रेण संयुक्ता बाले सर्वाक्षिरोगनुत् ॥६४॥
मातुस्तन्यकटुस्नेहकाञ्जिकैर्भाविता भवेत् ।
स्वे दाडीपशिखोत्तमो नेत्रामयमलक्नकः ॥६५॥
शुण्ठीभृङ्गनिशाकल्कः पुटपाकः ससैन्धवः ।
कुकूलकेऽक्षिरोगेषु भद्रमाद्यशोतनं हितम् ॥६६॥
क्रिमिशालशिलादार्वीलाक्षाकाञ्चनगैरिकैः ।
चूर्णाञ्जनं कुकूले स्याच्छिशूनां पोथकीषु च ॥६७॥
सुदर्शनामूलचूर्णादञ्जनं स्यात् कुकूलके ।६८॥
गृहधूमनिशाकुष्ठवाजिकेन्द्रयवैः शिर्मा ।
लेपस्तक्रेण हन्त्याशु सिध्मपामाविचर्च्चिकाः ॥६९॥
पादकल्केऽश्वगन्धायाः क्षीरे दशगुणे पचेत् ।
घृतं पेयं कुमाराणां पुष्टिकृद् बलवर्द्धनम् ॥७०॥

अश्वगन्धाघृतम् ।

चाङ्गेरीस्वरसे सर्पिश्छागक्षीरसमे पचेत् ।

कपित्थव्योषसिन्धूत्थसमङ्गोत्पलबालकैः ॥७१॥
सबिल्वधातकीमोचैः सिद्धं सर्व्वातीसारनुत् ।
ग्रहणीं दुस्तरां हन्ति बालानान्तु विशेषतः ॥७२॥

बालचाङ्गेरीघृतम् ।

शङ्खपुष्पी बचा ब्राह्मी कुष्ठं त्रिफलया सह ।
द्राक्षा सशर्करा शुण्ठी जीवन्ती जीरकं बला ॥७३॥
शटी दुरालभा बिल्वं दाड़िमं सुरसः स्थिरा ।
मुस्तं पुष्करमूलञ्च सूक्ष्मैला गजपिप्पली ॥७४॥
एषां कर्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ।
कषाये कण्टकार्य्याश्च क्षीरे तस्मिंश्चतुर्गुणे ॥७५॥
एतत् कुमारकल्याणं घृतरत्नं सुखप्रदम् ।
बलवर्णकरं धन्यं पुष्ट्यग्निबलवर्द्धनम् ॥७६॥
छायासर्वग्रहालक्ष्मीक्रिमिदन्तगदापहम् ।
सर्वबालामयहरं दन्तोद्भेदं विशेषतः ॥७७॥

कुमारकल्याणकं घृतम् ।

बचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि च ।
शारिवा सैन्धवञ्चैव पिप्पलीघृतमष्टमम् ॥७८॥
मेध्यं घृतमिदं सिद्धं पातव्यञ्च दिने दिने ।
दृढ़स्मृतिः क्षिप्रमेधः कुमारो बुद्धिमान् भवेत् ॥७९॥
न पिशाचा न रक्षांसि न भूता न च मातरः ।
प्रभवन्ति कुमाराणां पिबतामष्टमङ्गलम् ॥८०॥

अष्टमङ्गलकं घृतम् ।

लाक्षारससमं सिद्धं तैलं मस्तु चतुर्गुणम् ।
रास्राचन्दनकुष्ठाब्दवाजिगन्धानिशायुगैः ॥८१॥

शताह्वादारुयष्ट्याह्वमूर्वातिक्ताहरेणुभिः।
बालानां ज्वररक्षोघ्नमभ्यङ्गात् बलवर्णकृत् ॥८२॥

लाक्षादितैलम्।

सहामुण्डितिकोदीच्यक्राथस्नानं ग्रहापहम्।
सप्तच्छदनिशाकुष्ठचन्दनैश्चानुलेपनम् ॥८३॥
सर्पत्वक्लशुनं मूर्वासर्षपारिष्टपल्लवाः।
वैडालविड़जालोममेषशृङ्गीवचामधु ॥८४॥
धूपः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः।
बलिशान्तीष्टकर्माणि कार्य्याणि ग्रहशान्तये ॥८५॥
मन्त्रश्चायं प्रयोक्तव्यस्तत्रादौ सर्वकामिकः ॥८६॥

ओँ नमो भगवते गरुड़ाय त्र्यम्बकाय सद्यस्तव स्तुतः स्वाहा। ओँ कं पं टं शं वैनतेयाय नमः। ओँ ह्रीँ हूं फः। बालदेहप्रमाणेन पुष्पमालान्तु सर्वतः। प्रगृह्यमुच्छिकाभक्तवलिर्देयस्तु शान्तिकः॥ ओँकारी स्वर्णपक्षी बालकं रक्ष रक्ष स्वाहा। गरुड़बलिः। ओँ नारायणाय नमः ॥८७॥

प्रथमे दिवसे मासे वर्षे वा गृह्णाति नन्दना नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। अशुभं शब्दं मुञ्चति श्रात्कारञ्च करोति स्तन्यं न गृह्णाति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा शुक्लौदनं शुक्लपुष्पं शुक्लसप्तध्वजाः सप्तप्रदीपाः सप्तस्वस्तिकाः सप्तवटकाः सप्तशष्कुलिकाः जम्बुलिकाः सप्तमुष्टिकाः गन्धं पुष्पं ताम्बूलं मत्स्यं मांसं सुरामग्रभक्तञ्च पूर्वस्यां दिशि चतुष्पथे मध्याह्ने बलिर्देयः। ततो-

श्लक्ष्णपत्रं कुम्भे प्रक्षिप्य शान्त्युदकेन स्नापयेत्। रसोन सिद्धार्थकमेषशृङ्गनिम्बपत्रशिवनिर्माल्यैर्बालकं धूपयेत्। ओँ नमो नारायणाय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च ह्रीं फट् स्वाहा। एवं दिनत्रयं बलिं दत्त्वा चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम्॥ ८८॥

द्वितीये दिवसे मासे वर्षे वा गृह्णाति सुनन्दा नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। चक्षुरुन्मीलयति गात्रमुद्वेजयति न शेते क्रन्दति स्तन्यं न गृह्णाति आत्कारश्च भवति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। तण्डुलं हस्तपृष्ठैकं दधिगुड़घृतञ्च मिश्रितं शरावैकं गन्धताम्बूलं पीतपुष्पं पीतसप्तध्वजाः सप्तप्रदीपाः दशस्वस्तिकामत्स्यमांससुरातिलचूर्णानि पश्चिमस्यान्दिशि चतुष्पथे बलिर्देयः। दिनानि त्रीणि सन्ध्यायां ततः शान्त्युदकेन स्नापयेत्। शिवनिर्माल्यसिद्धार्थमार्जारलोम उशीरवालघृतैर्धूपं दद्यात्। ओँ नमो नारायणाय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च ह्रीं फट् स्वाहा। चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम्। ८९॥

तृतीये दिवसे मासे वर्षे वा गृह्णाति पूतना नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति स्तन्यं न गृह्णाति मुष्टिं बध्नाति क्रन्दति ऊर्द्धं निरीक्षते बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा गन्धपुष्पताम्बूलरक्तचन्दनं रक्तपुष्पं रक्तसप्तध्वजाः सप्तप्रदीपाः सप्तस्वस्तिकाः पक्षिमांससुरा अन्नभक्तञ्च दक्षिणस्यां दिशि चतु-

रात्रै चतुष्पथे बलिर्दातव्यः। शिवनिर्माल्यगुग्गुलुसर्षप-निम्बपत्रमेषशृङ्गैर्दिनत्रयं धूपयेत्। ओँ नमो नारायणाय बालस्य व्याधिं हन हन मुञ्च मुञ्च क्षासय क्षासय स्वाहा चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम्॥ ९०॥

चतुर्थदिवसे मासे वर्षे वा गृह्णाति सुखमुण्डिका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। ग्रीवां नामयति अक्षिणी उन्मीलयति स्तन्यं न गृह्णाति रोदिति स्वपिति मुष्टिं बध्नाति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा उत्पलपुष्पं गन्धताम्बूलं दशध्वजाः चत्वारः प्रदीपाः त्रयोदश स्वस्तिकाः मत्स्यमांससुरा अन्नभक्तञ्च उत्तरस्यां दिशि अपराह्णे चतुष्पथे बलिं दद्यात् आद्यमासिको धूपः ओँ नमो नारायणाय हन हन मुञ्च मुञ्च स्वाहा। चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम्॥ ९१॥

पञ्चमे दिवसे मासे वर्षे वा गृह्णाति कटपूतना नाम मातृका तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति स्तन्यं न गृह्णाति मुष्टिञ्च बध्नाति बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। कुम्भकारचक्रस्य मृत्तिकां गृहीत्वा पुत्तलिकां निर्माय गन्धताम्बूलं शुक्लौदनं शुक्लपुष्पं पञ्चध्वजाः पञ्चप्रदीपाः पञ्चवटकाः ऐशान्यां दिशि बलिर्दातव्यः। शान्त्युदकेन स्नापयेत् शिवनिर्माल्यसर्पनिर्मोक-गुग्गुलुनिम्बपत्रबालकघृतैर्धूपं दद्यात्। ओँ नमो नारायणाय अमुकस्य व्याधिं चूर्णय चूर्णय हन हन स्वाहा। चतुर्थे दिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम्॥ ९२॥

षष्ठे दिवसे मासे वर्षे वा गृह्णाति शकुनिका नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वरः । गात्रभेदञ्च दर्शयति दिवारात्रावुत्थानं भवति ऊर्द्धं निरीक्षते । बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् । पिष्टकेन पुत्तलिकां कृत्वा शुक्लपुष्पं रक्तपुष्पं पीतपुष्पं गन्धताम्बूलं दश प्रदीपा दशध्वजा दशस्वस्तिका दशमुष्टिका दशवटकाः क्षीरजम्बूड़िकामत्स्यमांससुरा आग्नेय्यां दिशि निष्क्रान्ते मध्याह्ने बलिं दापयेत् । शान्त्युदकेन स्नापयेत् । शिवनिर्माल्यरसोनगुग्गुलुसर्पनिर्मोकनिम्बपत्रघृतैर्धूपं दद्यात् । ओं नमो नारायणाय चूर्णय चूर्णय हन हन स्वाहा । चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम् ॥ ८३ ॥

सप्तमे दिवसे मासे वर्षे वा यदा गृह्णाति शुष्करेवती नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वरः । गात्रमुद्वेजयति मुष्टिं बध्नाति रोदिति । बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् । रक्तपुष्पं शुक्लपुष्पं गन्धताम्बूलं रक्तौदनं कृशरास्त्रयोदश स्वस्तिकाः मत्स्यमांससुरास्त्रयोदशध्वजाः पञ्चप्रदीपाः पश्चिमदिग्भागे ग्रामनिष्क्रामे अपराह्णे वृक्षमाश्रित्य बलिं दद्यात् । शान्त्युदकेन स्नानं गुग्गुलुमेषशृङ्गीसर्षपोशीरबालकघृतैर्धूपयेत् । ओं नमो नारायणाय दीप्ततेजसे हन हन मुञ्च मुञ्च स्वाहा । चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम् । ८४ ॥

अष्टमे दिवसे मासे वर्षे वा यदि गृह्णाति अर्य्यका नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वरः । दग्धगन्धः पूतिगन्धश्च जायते आहारञ्च न गृह्णाति उद्वेज-

यन्ति गात्राणि। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। रक्तपीतध्वजाः चन्दनं पुष्पं शष्कुल्यः पर्पटिकाः मत्स्यमांससुराजम्बूलिकाः प्रत्यूषे बलिर्देयः प्रान्तरे। मन्त्रः। ओं नमो नारायणाय चतुर्दिङ्मोक्षणाय व्याधिं हन हन मुञ्च मुञ्च दह दह ह्रीं क्रीं फट् स्वाहा। चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम्॥ ९५॥

नवमे दिवसे मासे वर्षे वा गृह्णाति भूसूतिका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। नित्यं छर्दिर्भवति गात्रभेदं दर्शयति मुष्टिं बध्नाति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां निर्माय शुक्लवस्त्रेण वेष्टयेत् शुक्लपुष्पं गन्धताम्बूलं शुक्लत्रयोदशध्वजाः त्रयोदशदीपाः त्रयोदशस्वस्तिकाः त्रयोदशपुत्तलिकाः त्रयोदशमत्स्यपुत्तलिकाः मत्स्यमांससुराः उत्तरदिग्भागे ग्रामनिष्काशे बलिं दद्यात्। शान्त्युदकेन स्नानं गुग्गुलुनिम्बपत्रगोशृङ्गश्वेतसर्षपघृतैर्धूपं दद्यात्। मन्त्रः। ओं नमो नारायणाय चतुर्भुजाय हन हन मुञ्च मुञ्च स्वाहा। चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम्॥ ९६॥

दशमे दिवसे मासे वर्षे वा गृह्णाति निर्ऋता नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति आत्कारं करोति रोदिति मूत्रं पुरीषञ्च भवति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। पारावारमृत्तिकां गृहीत्वा पुत्तलिकां निर्माय गन्धताम्बूलं रक्तपुष्पं रक्तचन्दनं पञ्चवर्णध्वजाः पञ्चप्रदीपाः पञ्चस्वस्तिकाः पञ्च-

पुत्तलिकाः मत्स्यमांससुराः वायव्यां दिशि बलिं दद्यात्। काकविष्ठागोमांसगोशृङ्गरसोनमार्ज्जारलोमनिम्बपत्रघृतैर्धूपयेत्। ओं नमो नारायणाय चूर्णितहस्ताय मुञ्च मुञ्च स्वाहा। चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सुस्थो भवति बालकः॥ ९७॥

एकादशे दिवसे मासे वर्षे वा यदि गृह्णाति पिलिपिच्छिका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। आहारं न गृह्णाति जडदृष्टिर्भवति गात्रभङ्गो भवति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। पिष्टकेन पुत्तलिकां कृत्वा रक्तचन्दनरक्ताञ्च तस्या मुखं दुग्धेन सिञ्चेत्। पीतपुष्पं गन्धताम्बूलं सप्तपीतध्वजाः सप्तप्रदीपाः अष्टौ वटकाः अष्टौ शष्कुलिकाः अष्टौ पुरिकाः मत्स्यमांससुराः पूर्वस्यां दिशि बलिर्दातव्यः। शान्त्युदकेन स्नानं शिवनिर्माल्यगुग्गुलुगोशृङ्गसर्पनिर्मोकघृतैर्धूपयेत्। ओं नमो नारायणाय मुञ्च मुञ्च स्वाहा। चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सुस्थो भवति बालकः॥ ९८॥

द्वादशे दिवसे मासे वर्षे वा यदि गृह्णाति कामुका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। विहस्य वादयति करेण तर्जयति गृह्णाति क्रामति निःश्वसिति मुहुर्मुहुराहारं न करोति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। क्षीरेण पुत्तलिकां कृत्वा गन्धं ताम्बूलं शुक्लपुष्पं शुक्लसप्तध्वजाः सप्तप्रदीपाः सप्तपूपिकाः वरस्येन दधिभक्तेन सर्वकर्मबलिं दद्यात् शान्त्युदकेन स्नापयेत्। शिवनिर्माल्यगुग्गुलुसर्पपघृतैर्धूपयेत्। ओं

लेपो जयत्याखुविषं कर्णिकायाश्च पानतः ॥१९॥
यः कासमर्दनपत्रं वदने प्रक्षिप्य कर्णे फूत्कारम् ।
मनुजो ददाति शीघ्रं जयति विषं वृश्चिकानां सः ॥२०॥
दंशे क्रमेण विधिना वृश्चिकविषहृत् कुबेरपदगुड़िका।
गुरधूपपूर्वमर्कच्छदमिव पिष्टा कृतो लेपः ॥२१॥
जीरकस्य कृतः कल्को घृतसैन्धवसंयुतः ।
सुखोष्णो वृश्चिकार्त्तानां सुलेपो वेदनापहः ॥२२॥
अमलावर्त्तणं दंशे कण्टकञ्च तदुद्धरेत् ।
करणे विषजे लेपात् फणिज्भकरसोऽथवा ॥२३॥
कुङ्कुमकुनटीकर्कटहरितालैः कुसुम्भसंमिलितैः ।
कृतगुड़िकाभ्रामणतो विदष्टगोधासरटादिविषजित् २४
अङ्कोठपत्रधूमो मीनविषं झटिति विघटयेत् शृङ्गी ।
गोधावरटीविषमिवालेपेन कुटजकपालिजटा ॥२५॥
कनकोडुम्बरफलमिव तण्डुलजलपिष्टं पीतमपहरति ।
कनकदलद्रवघृतगुड़दुग्धपलैकं शुनां गरलम् ॥२६॥
लेप इव भेकगरलं शिरीषवीजैः स्नुहीपयःसिक्तैः ।
हरति गरलं त्र्यहमसिताङ्कोठजटाकुष्ठसम्मिलिता ॥२७
मरिचमहौषधकालकनागाह्वैर्मक्षिकाविषे लेपः ।
लालाविषमपनयतो मूले मिलिते पटोलनीलिकयोः॥२८
सोमवल्कोऽश्वकर्णश्च गोजिह्वाहंसपाद्यपि ।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥२९॥
वचाहिङ्गुविड़ङ्गानि सैन्धवं गजपिप्पली ।
पाठाप्रतिविषाव्योषं काश्यपेन विनिर्मितम् ॥३०॥
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ।

कीटदष्टक्रियाः सर्वाः समानाः स्युर्जलौकसाम् ॥२१॥
मुक्ताप्रवालश्रौणेयकाञ्चीशैलेयरोचनातगरम् ।
ध्यामकं कुङ्कुमं मांसीसुरसाशैवालकुष्ठघ्नम् ॥२२॥
वृहतीशिरीषपुष्पश्रीवेष्टकपद्मचारटीविशालाः ।
सुरदारुपद्मकेशरशारवकमनःशिलाकौन्त्यः ॥२३॥
जात्यर्कपुष्पसर्षपरजनीद्वयहिङ्गुपिप्पलीद्राक्षाः ।
जलमुद्गपर्णीमधूकमदनसिन्धुवाराश्च ॥२४॥
सम्याकलोध्रमयूरकमन्धफलीलाङ्गलीविडङ्गाः
पुष्ये समुद्धृत्य समं पिष्टा गुड़िका विधेयाः स्युः ॥२५॥
सर्वविषघ्नो जयकृद्विषमृतसञ्जीवनो ज्वरनिहन्ता ।
पेयविलेपनधारणधूमग्रहणैर्गृहस्थश्च ॥२६॥
भूतविषजन्त्वलक्ष्मीकार्मणमन्त्राग्न्यशन्यरीन् हन्यात्
दुःस्वप्नस्त्रीदोषानकालमरणाम्बुचौरभयम् ॥२७॥
धनधान्यकार्यसिद्धिश्रीपुष्टिवर्णायुवर्द्धनो धन्यः ।
मृतसञ्जीवन एव प्रागमृताद् ब्रह्मणाभिहितः ॥२८॥

मृतसञ्जीवनोऽगदः ।

इति विषरोगचिकित्सा ।

## अथ रसायनाधिकारः ।

यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम् ।
पूर्वे वयसि मध्ये वा शुद्धदेहः समाचरेत् ॥१॥
नाविशुद्धशरीरस्य युक्तो रसायनो विधिः ।
नाभाति वाससि क्लिष्टे रङ्गयोग इवार्पितः ॥ २ ॥
गुड़ेन मधुना शुण्ठ्या कृष्णया लवणेन वा ।

द्वे द्वे खादन् सदा पथ्ये जीवेद्वर्षशतं सुखी ॥ ३ ॥
सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् ।
वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥ ४ ॥
त्रिफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम् ।
तमहोरात्रिकं लेपं पिबेत् क्षौद्रोदकाप्लुतम् ॥ ५ ॥
प्रभूतस्नेहमशनं जीर्णे तस्मिन् प्रयोजयेत् ।
अजरोऽरुक् समाभ्यासाज्जीवेच्चापि समाः शतम् ॥६॥
पञ्चाष्टौ सप्तदश वा पिप्पलीः क्षौद्रसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ७ ॥
तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्ताग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ॥ ८ ॥
प्रयोज्या मधुसंमिश्रा रसायनगुणैषिणा ।
जेतुं कासं क्षयं श्वासं शोषं हिक्कां गलामयम् ॥९॥
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम् ।
वैस्वर्य्यं पीनसं शोषं गुल्मं वातबलासकम् ॥ १० ॥
जरणान्तेऽभयामेकां प्राग्भक्ते द्वे बिभीतके ।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्य्यामलकानि च ॥ ११ ॥
प्रयोजयेत् समामेकां त्रिफलाया रसायनम् ।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च ॥ १२ ॥

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः
क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्प्याः
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥ १३ ॥
आयुःप्रदान्यामयनाशकानि

बलाग्निवर्णस्वरवर्द्धनानि।
मेध्यानि चैतानि रसायनानि
मेध्या विशेषेण तु शङ्खपुष्पी ॥ १४ ॥
पीताश्वगन्धा पयसार्द्धमासं
घृतेन तैलेन सुखाम्बुना वा।
कृशस्य पुष्टिं वपुषो विधत्ते
बालस्य शस्यस्य यथाम्बुवृष्टिः ॥ १५ ॥
धात्रीतिलान् भृङ्गरजोविमिश्रान्
ये भक्षयेयुर्मनुजाः क्रमेण।
ते कृष्णकेशा विमलेन्द्रियाश्च
निर्व्याधयो वर्षशतं भवेयुः ॥ १६ ॥

वृद्धदारकमूलानि श्लक्ष्णचूर्णानि कारयेत्।
शतावर्य्या रसेनैव सप्तरात्राणि भावयेत् ॥ १७ ॥
अक्षमात्रन्तु तच्चूर्णं सर्पिषा सह भोजयेत्।
मासमात्रोपयोगेन मतिमान् जायते नरः ॥१८॥
मेधावी स्मृतिमांश्चैव वलीपलितवर्ज्जितः।
हस्तिकर्णरजः खादेत् प्रातरुत्थाय सर्पिषा ॥ १९ ॥
यथेष्टाहाराचारोऽपि सहस्रायुर्भवेन्नरः।
मेधावी बलवान् कामी स्त्रीशतानि व्रजत्यसौ ॥२०॥
मधुना त्वश्ववेगः स्यात् बलिष्ठः स्त्रीसहस्रगः।
मन्त्रश्चायं प्रयोक्तव्यो भिषजा चाभिमन्त्रणे ॥२१॥

ओँ नमो महाविनायकाय अमृतं रक्ष रक्ष मम फल-सिद्धिं देहि रुद्रवचनेन स्वाहा ॥२२॥

धात्रीचूर्णस्य कर्षं स्वरसपरिगतं क्षौद्रसर्पिःसमांशं

कणामानीसिताष्टप्रसृतयुनमिदं स्थापितं भस्मराशौ ।
वर्षान्ते तत्समश्नन् भवति विपलितो रूपवर्णप्रभावै-
र्निर्व्याधिर्बुद्धिमेधास्मृतिबलवचनस्थैर्य्यसत्वैरुपेतः ॥२३॥

गुडूच्यपामार्गविड़ङ्गशङ्खिनी-
वचाभयाकुष्ठशतावरीसमा ।
घृतेन लीढ़ा प्रकरोति मानवं
त्रिभिर्दिनैः श्लोकसहस्रधारिणम् ॥२४॥

समूलपत्रमादाय ब्राह्मीं प्रचाल्य वारिणा ।
उदूखले चोदयित्वा रसं वस्त्रेण गालयेत् ॥२५॥
रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत् ।
औषधानि तु पेष्याणि तानीमानि प्रदापयेत् ॥२६॥
हरिद्रा मालती कुष्ठं त्रिवृता सहरीतकी ।
एतेषां पलिकान् भागान् शेषाणि कार्षिकाणि तु ॥२७॥
पिप्पल्योऽथ विड़ङ्गानि सैन्धवं शर्करा वचा ।
सर्वमेतत्समालोद्य शनैर्मृद्वग्निना पचेत् ॥२८॥
एतत्प्राशितमात्रेण वाग्विशुद्धिश्च जायते ।
सप्तरात्रप्रयोगेन किन्नरैः सह गीयते ॥२९॥
अर्द्धमासप्रयोगेण सोमराजीवपुर्भवेत् ।
मासमात्रप्रयोगेण श्रुतमात्रन्तु धारयेत् ॥३०॥
हन्त्यष्टादश कुष्ठानि अर्शांसि विविधानि च ।
पञ्च गुल्मान् प्रमेहांश्च कासं पञ्चविधं जयेत् ॥३१॥
वन्ध्यानाञ्चैव नारीणां नराणाञ्चाल्परेतसाम् ।
घृतं सारस्वतं नाम बलवर्णाग्निवर्द्धनम् ॥३२॥

ब्राह्मीघृतम् ।

कासश्वासातिसारज्वरपीड़ककटीकुष्ठकोठप्रकारान्
मूत्राघातोदरार्शःश्वयथुगलशिरःकर्णशूलाक्षिरोगान्।
ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो-
स्तांस्तानभ्यासयोगादपनयति पयः पीतमन्ते निशायाः॥३३
व्यङ्गवलीपलितघ्नं पीनसवैस्वर्य्यकासशोथघ्नम्।
रजनीक्षयेऽम्बु नस्यं रसायनं दृष्टिजननञ्च॥३४॥
नागार्जुनो मुनीन्द्रः शशास यल्लोहशास्त्रमतिगहनम्।
तस्यार्थस्य स्मृतये वयमेतद्विशदाक्षरैर्ब्रूमः॥३५॥
मेने मुनिः स्वतन्त्रे भूयः पाकं न पलपञ्चकादर्वाक्।
सुबहुप्रयोगदोषादूर्द्ध्वञ्च न पलत्रयोदशकात्॥३६॥
तत्रायसि पाचनीये पञ्चपलादौ त्रयोदशपलान्ते।
लौहात् त्रिगुणा त्रिफला ग्राह्या षड्भिः पलैरधिका॥३७॥
मारणपुटनस्थालीपाकास्त्रिफलैकभागसम्पाद्याः।
त्रिफलाया भागद्वितयं गृह्णीयं लौहपाकार्थम्॥३८॥
सर्वत्रायःपुटनाद्यर्थैकांशे शरावसंख्यातम्।
प्रतिपलमेव त्रिगुणं पाथश्च क्वाथार्थमादेयम्॥ ३९ ॥
सप्तपलादौ भागे पञ्चदशान्तेऽम्भसां शरावेण।
त्र्याद्येकादशकान्तैरधिकं तद्वारि कर्त्तव्यम्॥ ४० ॥
तत्राष्टमो भागः शेषः क्वाथस्य यत्नतः स्थाप्यः।
तेन हि मारणपुटनस्थालीपाका भविष्यन्ति॥ ४१ ॥
पाकार्थं तु त्रिफलाभागद्वितये शरावसंख्यातम्।
प्रतिपलमम्बु समं स्यादधिकं द्वाभ्यां शरावाभ्याम्॥४२॥
तत्र चतुर्थो भागः शेषो निपुणेन यत्नतो ग्राह्यः।
अयसः पाकार्थत्वात् स च सर्वस्मात् प्रधानतमः॥४३॥

पाकार्थमश्मसारे पञ्चपलादौ त्रयोदशपलकान्ते ।
दुग्धशरावद्वितयं पादैरेकादिकैरधिकम् ॥ ४४ ॥
पञ्चपलादिमात्रा तदभावे तदनुसारतो ग्राह्यम् ।
चतुरादिकमेकान्तं शक्रावधिकं त्रयोदशकात् ॥४५॥
त्रिफलात्रिकटुकचित्रककान्तक्रामकविडङ्गचूर्णानि ।
अन्यान्यपि देयानि पलाशस्य च वीजानि ॥४६॥
जातीफलजातीकोषैलाकक्कोलकलवङ्गानाम् ।
सितकृष्णजीरकयोरपि चूर्णान्ययसः समानि स्युः ।
त्रिफलात्रिकटुविडङ्गा नियता अन्ये यथाप्रकृति ॥४७॥
कालायसदोषहृतेर्जातीफलादेर्लवङ्गान्तस्य ।
क्षेपः प्राशानुरूपः सर्वस्योनस्य चैकाद्यैः ॥ ४८ ॥
कान्तक्रामकमेकं निःशेषं दोषमपहरत्ययसः ।
द्विगुणत्रिगुणचतुर्गुणमाज्यं ग्राह्यं यथाप्रकृति ॥ ४९ ॥
यदि भेषजभूयस्त्वं स्तोकत्वं वापि चूर्णानाम् ।
अयसा साम्यं संख्या भूयोऽल्पत्वेन भूयोऽल्पा ॥ ५० ॥
एवं धात्वनुसारात्तत्तत्कथितौषधस्य बाधेन ।
सर्वत्रैव विधेयस्तत्तदकथितस्यौषधस्योहः ॥ ५१ ॥

साध्यसाधनपरिमाणविधिः ।

कान्तादिलोहमारणविधानसर्वस्वमुच्यते तावत् ।
यस्य कृते तल्लौहं पक्तव्यं तस्य शुभे दिवसे ॥ ५२ ॥
स मृदङ्गारकवालिततनतभूभागे शिवं समभ्यर्च्य ।
वैदिकविधिना वह्निं निधाय हुत्वाहुतीस्तत्र ॥५३॥
धर्मात् सिध्यति सर्वं श्रेयस्तद्धर्मसिद्धये किमपि ।
शक्त्यनुरूपं दद्याद् द्विजाय सन्तोषिणे गुणिने ॥ ५४ ॥

सन्तोष्य कर्म्मकारं प्रसादपूगादिदानसम्मानैः ।
भ्राष्ट्रौ तदश्मसारं निर्म्मलमेकान्ततः कुर्य्यात् ॥५५॥
तदनु कुठारच्छिन्नत्रिफलागिरिकर्णिकास्थिसंहारैः ।
करिकर्णच्छदमूलशतावरिकाकेशराजाख्यैः ॥५६॥
शालिञ्च मूलकशीमूलप्राज्ञभृङ्गराजैश्च ।
लिप्ता दग्धव्यं तद् दृष्टक्रियलोहकारेण ॥५७॥
चिरजलभावितनिर्म्मलशालाङ्गारेण परित आच्छाद्य ।
कुशलाध्मापितभस्त्रानवरतमुक्तेन पवनेन ॥५८॥
वह्नेर्वाह्यज्वाला बोद्धव्या जातु नैव कुश्चिकया ।
क्षारलवणसलिलभाजा किन्तु स्वच्छाम्बुसंप्लुतया ॥५९॥
द्रव्यान्तरसंयोगात् स्वां शक्तिं भेषजानि मुञ्चन्ति ।
मलधूलीमत् सर्व्वं सर्व्वत्र विवर्जयेत् तस्मात् ॥६०॥
सन्दंशेन गृहीत्वान्तः प्रज्वालिताग्निमध्यमुपनीय ।
गलति यथायथमग्ने तथैव मृदु वर्द्धयेन्निपुणः ॥६१॥
तत्संनिहितोर्द्ध्वमुखाङ्कुशलग्नं त्रिफलाजले ।
विनिक्षिप्य निर्व्वापयेच्छेषं त्रिफलाम्बु रक्षेच्च ॥६२॥
यल्लोहं न मृतं तत् पुनरपि पक्तव्यमुक्तमार्गेण ।
यन्न मृतं तथापि तत् त्यक्तव्यमलोहमेव ततः ॥६३॥
तदनु घनलोहपात्रे कालायसो मुद्गरेण संचूर्ण्य ।
दत्त्वा बहुशः सलिलं प्रक्षाल्याङ्गारमुद्धृत्य ॥६४॥
तद्दयः केवलमग्नौ शुष्कीकृत्याथ वातपे पश्चात् ।
लौहशिलायां पिंष्यादसितेऽश्मनि वा तदप्राप्तौ ॥६५॥

इति मारणविधिः ।

अथ कृत्वायोभाण्डे दत्त्वा त्रिफलाम्बुशेषमन्यदा ।

प्रथमं स्थालीपाकं दद्यात् द्रवचयात् तदनु ॥६६॥
गजकर्णपत्रमूलशतावरीभृङ्गकेशराजरसैः ।
प्राग्वत् स्थालीपाकं कुर्य्यात् प्रत्येकमेकैकं वा ॥६७॥

इति स्थालीपाकविधिः ।

हस्तप्रमाणवदनं श्वभ्रं हस्तैकखातसममध्यम् ।
कृत्वा कटाहसदृशं तत्र करीषं तुषञ्च काष्ठञ्च ॥६८॥
अन्तर्घनतरमध्यशुषिरं परिपूर्य्य दहनमायोज्य ।
पश्चादयसश्चूर्णं श्लक्ष्णं पङ्कोपमं कुर्य्यात् ॥ ६९ ॥
त्रिफलाम्बुभृङ्गकेशरशतावरिकाकन्दमाणसहजरसैः ।
भल्लातककरिकर्णच्छदमूलपुनर्नवास्वरसैः ॥७०॥
पिष्ट्वाथ लौहपात्रे मार्दे वा लौहमार्दपात्राभ्याम् ।
तुल्याभ्यां पृष्ठेनाच्छाद्यान्ते रन्ध्रमालिप्य तत्पुटपात्रम् ७१
तत्र श्वभ्रज्वलने निधाय भूयोभिः ।
काष्ठकरीषतुषैस्तत्संछाद्याहर्निशं दहेत् प्राज्ञः ॥७२॥
एवं नवभिर्भेषजराजैः पचेत् पुटपाकम् ।
प्रत्येकमेकमेभिर्मिलितैर्वा त्रिचतुरान् वारान् ॥७३॥
प्रतिपुटनं तत् पिंष्यात् स्थालीपाकं विधाय तथैव ।
तादृशदिनं पिंष्यात् विगलद्रजसा तु युज्यते यत्र ॥७४॥
तदयश्चूर्णं पिष्टं छृष्टं घनसूक्ष्मवाससि श्लक्ष्णम् ।
यदि रजसा सदृशं स्यात् केतक्यास्तर्हि तद्भद्रम् ॥७५॥
पुटने स्थालीपाकेऽधिकृतपुरुषे स्वभावदृगधिगमात् ।
कथितमपि हेयमौषधमुचितमुपादेयमन्यदपि ॥७६॥

इति पुटनविधिः ।

अभ्यस्तकर्मविधिभिर्बालकुशाग्रीयबुद्धिभिर्लक्ष्यम् ।

लौहस्य पाकमधुना नागार्जुनशिष्टमभिदध्मः ॥७७॥
लोहारकूटताम्रजकटाहे दृढ़मृण्मये प्रणम्य शिवम्।
तदयः पचेद्यपलः काष्ठेन्धनेन वह्निना मृदुना ॥७८॥
निक्षिप्य त्रिफलाजलमुदितं यत्तद् घृतञ्च दुग्धञ्च।
संचाल्य लौहमय्या दर्व्या लग्नं समुत्पाद्य ॥७९॥
मृदुमध्यखरभावैः पाकस्त्रिविधोऽत्र वक्ष्यते।
पुंसां पित्तसमीरणश्लेष्मप्रकृतीनां मध्यमस्य समः ॥८०॥
अभ्यक्तदर्वि लोहं सुखदुःखखलनयोगिमृदुमध्यम्।
उज्झितदर्विखरं परिभाषन्ते केचिदाचार्य्याः ॥८१॥
अन्ये विहीनदार्वीप्रलेपमाखूत्कराकृतिं ब्रुवते।
मृदुमध्यमर्द्दचूर्णं सिकतापुञ्जोपमन्तु खरम् ॥८२॥
त्रिविधोऽपि पाक ईदृक् सर्वेषां गुणकृदेव न तु विफलः।
प्रकृतिविषये सूक्ष्मौ गुणदोषौ जनयतीत्यल्पम् ॥८३॥
विज्ञाय पाकमेवं द्रागवतार्य्य क्षितौ क्षणान् कियतः।
विश्राम्य तत्र लोहे त्रिफलादेः प्रक्षिपेच्चूर्णम् ॥८४॥
यदि कर्पूरप्राप्तिर्भवति ततो विगलिते तदुष्णत्वे।
चूर्णीकृतमनुरूपं क्षिपेन्न वा न यदि तल्लाभः ॥८५॥
पक्वं तदश्मसारं सुचिरघृतस्थित्यभाविरुग्णत्वे।
गोदोहनादिभाण्डे लौहभाण्डाभावे सति स्थाप्यम् ॥८६॥
यदि तु परिप्लुतिहेतोर्घृतमीक्षेताधिकं ततः।
अन्यस्मिन् भाण्डे निधाय रक्षेन्नाप्युपयोगो ह्यनेन महान्॥८७
अयसि विरुक्षीभूते स्नेहस्त्रिफलाघृतेन सम्पाद्यः।
एतत्ततो गुणोत्तरमित्यमुना स्नेहनीयं तत् ॥८८॥
अत्यन्तकफप्रकृतेर्भक्षणमयसोऽमुनैव शंसन्ति।

केवलमपीदमसितं जनयत्ययसौ गुणान् कियतः ॥८९॥

अमृतसारः ।

अथवा वक्ष्यविधिसंस्कृतकृष्णाभ्रकचूर्णमादाय ।
लौहचतुर्थांशसमद्विगुणचतुःपञ्चगुणभागम् ॥९०॥
प्रक्षिप्यायः प्राग्वत् पचेदुभाभ्यां भवेदयो यावत् ।
तावन्मानानुस्मृतिः स्यात्त्रिफलादिद्रव्यपरिमाणम् ॥९१॥
इदमप्यायिकमिदमतिपित्तनुदिदमेव कान्तिबलजननम् ।
स्वभातितद्गुणीपरममधिकमात्रया युक्तम् ॥९२॥

इति पाकविधिः ।

कृष्णाभ्रकमभेकवपुर्वज्राख्यञ्चैकपत्रकं कृत्वा ।
काष्ठमयोदूखलके चूर्णं मुषलेन कुर्वीत ॥९३॥
भूयो दृषदि च पिष्टं वासःसूक्ष्मावकाशतलगलितम् ।
मण्डूकपर्णिकायाः प्रचुररसे स्थापयेत्त्रिदिनम् ॥९४॥
उद्धृत्य तद्रसादथ पिंष्याद्वैमल्तिकधान्यभक्तस्य ।
अथोदात्यन्ताम्लस्वच्छजलेन प्रयत्नेन ॥९५॥
मण्डूकपर्णिकायाः पूर्वं स्वरसेनालोडनं कुर्य्यात् ।
स्थालीपाकं पुटनं चाद्यैरपि भृङ्गराजाद्यैः ॥९६॥
ताड़ादिपत्रमध्ये कृत्वा पिण्डं निधाय भस्माग्नौ ।
तावद्दहेद्व यावन्नीरोऽस्मिन्दृश्यते सुचिरम् ॥९७॥
निर्वापयेच्च दुग्धेन दुग्धं प्रक्षाल्य वारिणा तदनु ।
पिष्ट्वा शुष्ट्वा वस्त्रे चूर्णं निश्चन्द्रिकं कुर्य्यात् ॥९८॥

इत्यभ्रकविधिः ।

नानाविधरक्तप्रशान्त्यै पुष्ट्यै कान्त्यै शिवं समभ्यर्च्य ।
सुविशुद्धेऽहनि पुण्ये तदमलमादाय लौहाख्यम् ॥९९॥

इयमुक्तमापरिमाणं मलिनरसोभेदमाकलय्य पुनः ।
इदमधिकं तदधिकतरमियदेव न च मात्रमोदकम् ॥१००
घनमसृणामलपात्रे लौहे लौहेन मर्दयेद्गाढं भूयो भूयः ।
दत्त्वा मध्वनुरूपं तदनु घृतं योजयेदधिकम् ॥१०१॥
खल्वं गृह्णाति यथा मध्वपृथक्त्वेन पङ्कमविमिंषत् ।
इदमिह दुष्टोपकरणमेतद् दृष्टन्तु मन्त्रेण ॥१०२॥
स्वाहान्तेन विमर्दो भवति फडन्तेन लोहसंरक्षा ।
सनमस्कारेण बलिर्भक्षणमयसो हुमन्तेन ॥१०३॥

ओं अमृतोद्भवाय स्वाहा । ओं अमृते ह्रीं फट् ओं नमश्चण्डवज्रपाणये । महायक्षसेनाधिपतये सुरगुरुविद्या-महाबलाय स्वाहा । ओं अमृते हूम् ॥१०४॥

अगृध्वा तदमृतसारं नीरं वा क्षीरमेवाशु पिबेत् ।
कान्तक्रामकममलं संचर्व्य रसं पिबेन्न तु तत् ॥१०५॥
आचम्य च ताम्बूलं लाभे घनसारसहितमुपयोज्यम् ।
नात्युपविष्टो नाप्यतिभाषी नातिस्थितस्तिष्ठेत् ॥१०६॥
अत्यन्तवातशीतातपयानस्नानवेगरोधादीन् ।
जह्याच्च दिवानिद्रासहितस्त्वाकालभुक्तञ्च ॥१०७॥
वातकृतः पित्तकृतः सर्वान् कट्वम्लतिक्तकषायान्
त्तत्क्षणविनाशहेतून् मैथुनकोपश्रमान् दूरे ॥१०८॥
भक्षितं तदयः पश्चात् पततु न वा पाटवं कुरु प्रयताम् ।
भक्तिर्भवति न वान्त्रं कूजति शोणत्वमव्याजकम् ॥१०९॥
प्रथमं पीत्वा दुग्धं शाल्यन्नं विमर्दसिद्धमक्लिन्नम् ।
घृतसंप्लुतमश्नीयात् मांसैर्वैहङ्गमैः प्रायः ॥११०॥
उत्तममूषरभूचरविष्किरमांसं तथाजमेणादिकम् ।

अन्यदपि जलचराणां च्छुद्रोमापेक्षया ज्ञ्याय: ॥१११॥
मांसालाभे मत्स्या अदोषका: स्थूलमद्गुपा याह्या:।
मद्गुररोहितमकुला इत्यास्तु मलकाभनाजूना: ॥११२॥
शृङ्गाटकफलकशेरुकदलीफलतालनारिकेलादि।
अन्यदपि यच्च वृष्यं मधुरं पनसादिकं ज्ञ्याक: ॥११३॥
केवुकतालककरीरातवार्त्ताकुपटोलफलदलसमठान्।
मुद्गमसूरेक्षुरसान् शंसन्ति निरामिषेष्वेतान् ॥११४॥
शाकं प्रदेयमखिलं स्तोकं रुचये तु वास्तूकं दद्यात्।
विहितनिषिद्धादन्यन्मध्यमकोटिस्थितं विद्यात् ॥११५॥
तप्तदुग्धमनुपानं प्राय: सारयति बद्धकोष्ठस्य।
अनुपीतमम्बु यद्वा कोमलफलनारिकेलस्य ॥११६॥
यस्य न तथा सरति स यवक्षारं जलं पिबेत् कोष्णम्।
कोष्णं त्रिफलाक्काथसनाथं क्षारं ततोऽप्यधिकम् ॥११७॥
त्रीणि दिनानि समं स्यादह्नि चतुर्थे तु वर्द्धयेत् क्रमश:।
यावच्चाष्टममासं न वर्द्धयेत् पुनरितोऽप्यधिकम् ॥११८॥
आदौ रक्तिद्वितयं द्वितीयके तु रक्तिकात्रितयम्।
रक्तिमष्टकपञ्चकमत ऊर्द्धं वर्द्धयेन्नियतम् ॥११९॥
वासरिककल्पपरे दिनानि यावन्ति वर्द्धितं प्रथमम्।
तावन्ति वर्षशेषे प्रतिलोमं ह्रासयेत् तदय: ॥१२०॥
तेष्वष्टमासकेषु प्रातर्माषकत्रयमश्नीयात्।
सायञ्च तावदह्नो मध्ये मासद्वयं शेषम् ॥१२१॥
एवं तदमृतमश्नन् कान्तिं लभते चिरस्थिरं देहम्।
समाहवयमाताक्रान्तां रुजो निहन्ति किं बहुना ॥१२२॥
आर्य्याभिरिह तवया सन्नविधीनां यथावदाख्यातम्।

भ्रमति विपर्य्ययसंशयमूल्यमनुष्ठानमुपनीतम् ॥१२३॥
मुनिरचितशास्त्रपारं गत्वा सारं ततः समुद्धृत्य।
निबबन्ध बान्धवानामुपकृतये कोऽपि षट्कर्मा ॥१२४॥

इति भक्षणविधिः।

अमृतसारं लौहं समाप्तम्।

यत्र क्वचोद्भवं लौहं निःशेषं मारितं यदि।
त्रिफलाव्योषसंयुक्तं भक्षयेद् बलिनाशनम् ॥१२५॥
सामान्याद् द्विगुणक्रौञ्चं कालिङ्गोऽष्टगुणस्ततः।
तस्माच्छतगुणं भद्रं भद्राद् वज्रं सहस्रधा ॥१२६॥
वज्रात् षष्टिगुणः पाण्डिनिरविंदंशभिर्गुणैः।
ततः कोटिसहस्रं वा अयस्कान्तं महागुणम् ॥१२७॥
स्मृतस्ताम्रं द्विगुणं ताम्रात् कृष्णाभ्रकं द्विगुणम्।
पृथगेवैषां शुद्धिस्ताम्रशुद्धिस्ततो द्विविधा ॥१२८॥
पर्व्वीकृतस्य गन्धकयोगात् वा मारणं तथा सवणैः।
आर्क्के ध्मापिततास्रे निर्गुण्डीकल्ककाञ्जिकमग्ने ॥१२९॥
यत् पतति गैरिकाभं तत् पिष्टमर्द्दगन्धकं तदनु।
पुटपाकेन विशुद्धं शुद्धं स्यादभ्रकं तु पुनः ॥१३०॥
हिलमोचिमूलपिण्डे क्षिप्तं तदनु मार्दसंपुटे लिप्ते।
तीक्ष्णं दग्धं पिष्टमम्लाम्भसा साधुचन्द्रिकाविरहितम् ॥१३१॥
रेचितताम्रेण रसः खल्वशिलायां घृष्टः पिण्डिका कार्य्या।
उत्स्वेद्य महत्सलिलेन निर्गुण्डीकल्के ऽसकृच्छुद्धौ ॥१३२॥
एतन्मिलितं त्रितयं चूर्णिततास्राद्रिकैः पृथक् युक्तम्।
पिप्पलीमिश्रमरिचैः सत्वं द्विबिमासिकं भक्षम् ॥१३३॥
शूलाम्लपित्तश्वयथुग्रहणीयक्ष्मादिकुष्ठिरोगेषु।

रसायनं महदेतत् परिहारो नियमतो नात्र ॥१२४॥

ताम्रयोगः।

तनु पत्नीकृतं ताम्रं नैपालं गन्धकं समम्।
दत्त्वा चोर्द्ध मधोमध्ये स्थालिकामध्यसंस्थितम् ॥१२५॥
कृत्वा स्वल्पपिधानेन स्थालीमध्ये पिधाय च।
शर्करामल्ललेपेन लिप्त्वा सन्धिं तदूर्द्धतः ॥१२६॥
वालुकापूरितस्थाल्यां पिहितायां पुनस्तथा।
चुल्लिकायाञ्च यामैकमधोज्वालां प्रदापयेत् ॥१२७॥
तत आकृष्टताम्रस्य मृतस्य त्विह योजना।
अथ कर्षं गन्धकस्य वह्निस्थलौहपात्रगम् ॥१२८॥
शिलापुत्रेण संमर्द्य द्रुतं दृष्टं पुनः पुनः।
कृत्वा देयं मृतं ताम्रं कर्षमानं ततः पुनः ॥१२९॥
रसोऽल्पमथितः शुद्धस्तावन्मात्रः प्रदीयते।
ततस्तथैव संमर्द्य पुनराज्यं प्रदापयेत् ॥१४०॥
अष्टबिन्दुकमात्रञ्च मर्दयेन्मूर्च्छितं तथा।
सर्वं स्यात्तस्य आकृष्य शिलापुत्रादिकं दृढ़म् ॥१४१॥
संकृत्यालम्बुषरसप्रसृतेन विलोड़ितम्।
पुनस्तथैव वह्निस्थलौहपात्रे विमर्दयेत् ॥१४२॥
यावद् द्रवक्षयं पश्चादाकृष्य संप्रपेषितम्।
अलम्बुषरसेनैव गुड़कं संप्रकल्पयेत् ॥१४३॥
तत्पिण्डं वस्त्रविस्तीर्णं पिण्डे त्रिकटुके पुनः।
वसनाल्परिते दत्त्वा पोट्टलीं कारयेद् बुधः ॥१४४॥
ततस्तां पोट्टलीमाज्यमग्नां कृत्वा विधारिताम्।
सूत्रे च दण्डसंलग्नां पाचयेत् कुशलो भिषक् ॥१४५॥

यदा निष्फेनता चाज्ये पुटिता च दृढ़ा भवेत् ।
तदा पक्वं समाकृष्य पञ्चगुञ्जातुलाघृतम् ॥१४६॥
त्रिकटुत्रिफलाचूर्णं तुल्यं प्रातः प्रयोजयेत् ।
तक्रं स्यादनुपानन्तु अम्लपित्तोच्छ्रये पुनः ॥१४७॥
त्रिफलैव समादेया कोष्णं वारि पिबेदनु ।
सप्तमे दिवसे दद्याद्वृद्धिस्ताम्रात् तु माषकम् ॥१४८॥
यावत् प्रयोगश्च तथैवापकर्षः पुनर्भवेत् ।
योगोऽयं ग्रहणीयक्ष्मपित्तशूलाम्लपित्तहा ॥१४९॥
रसायनञ्चैतदिष्टं गुदकीलादिनाशनम् ।
न चात्र परिहारोऽस्ति विहाराहारकर्मणि ॥१५०॥

ताम्रयोगः ।

हेमाद्याः सूर्य्यसन्तप्ताः स्रवन्ति गिरिधातवः ।
जत्वाभं मृदुमृत्स्नाच्छं यन्मलन्तच्छिलाजतु ॥१५१॥
अनम्लञ्चाकषायञ्च कटुपाकि शिलाजतु ।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः ॥१५२॥
हेम्नोऽथ रजतात्ताम्रात् वरं कृष्णायसादपि ।
मधुरञ्च सतिक्तञ्च जवापुष्पनिभञ्च यत् ॥१५३॥
विपाके कटु तिक्तञ्च तत् सुवर्णस्य निस्रवम् ।
राजतं कटुकं श्वेतं स्वादुशीतं विपच्यते ॥१५४॥
ताम्राद्बर्हिणकण्ठाभं तीक्ष्णोष्णं पच्यते कटु ।
यत् तु गुग्गुलुसङ्काशं तिक्तकं लवणान्वितम् ॥१५५॥
विपाके कटुशीतञ्च सर्वश्रेष्ठं तदायसम् ।
गोमूत्रगन्धः सर्वेषां सर्वकर्मसु यौगिकः ॥२५६॥
रसायनप्रयोगेषु पश्चिमन्तु विशिष्यते ।

यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु ॥१५७॥
विशेषेण प्रशस्यन्ते मला हेमादिधातुजाः।
लौहकिट्टायते वह्नौ विधूमं दह्यतेऽम्भसि ॥१५८॥
तृणात्यग्रे क्षतं सर्वमधोगलति तन्तुवत्।
मलिनं यद्भवेत् तच्च चालयेत् केवलाम्भसा ॥१५९॥
लौहपात्रेषु विधिना जर्ज्जूभूतञ्च संहरेत्।
वातपित्तकफघ्नैस्तु निर्य्यूहैस्तत् सुभावितम् ॥१६०॥
वीर्य्योत्कर्षं परं याति सर्वैरेकैकशोऽपि वा।
प्रक्षिप्योद्धृतमावापं पुनस्तत् प्रक्षिपेद्द्रवे।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना ॥१६१॥
तुल्यं गिरिजेन जले चतुर्गुणे भावनौषधं क्वाथ्यम्।
ततः क्वाथे पादांशे पूतोष्णे प्रक्षिपेद्गिरिजम् ॥१६२॥
तत्समरसतां यातं संशुष्कं प्रक्षिपेद्द्रवे भूयः ॥१६३॥
पूर्वोक्तेन विधानेन लौहैश्चूर्णीकृतैः सह।
तत्पीतं पयसा दद्याद् दीर्घमायुः सुखान्वितम् ॥१६४॥
जराव्याधिप्रशमनं देहदार्ढ्यकरं परम्।
मेधास्मृतिकरं धन्यं क्षीराशी तत् प्रयोजयेत् ॥१६५॥
प्रयोगः सप्त सप्ताहास्त्रयश्चैकश्च सप्तकः।
निर्दिष्टस्त्रिविधस्तस्य परो मध्यो वरस्तथा ॥१६६॥
मात्रा पलं त्वर्द्धपलं स्यात् कर्षन्तु कनीयसी।
शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च।
वर्जयेत् सर्वकालञ्च कुलत्थान् परिवर्जयेत् ॥१६७॥

पयांसि शुक्तानि रसाः सयूषा-
स्तोयं समूत्रं विविधाः कषायाः।

आलोड़नार्थं गिरिजस्य शस्ता-
स्ते ते प्रयोज्याः प्रसमीक्ष्य कार्य्यम् ॥१६८॥
चरकोक्तशिलाजतुविधानं सोपस्कारमेतत्।
काले तु रवितापाढ्ये कृष्णायसजं शिलाजतुप्रवरम् १६९
त्रिफलारससंयुक्तं त्र्यहः शुष्कं पुनः शुष्कम्।
दशमूलस्य गुडूच्या रसे बलायास्तथा पटोलस्य ॥१७०॥
मधुकरसैर्गोमूत्रे त्र्यहं त्र्यहं भावयेत् क्रमशः।
एकाहं क्षीरेण तु तत् पुनर्भावयेत् शुष्कम्।
सप्ताहं भाव्यं स्यात् क्वाथैरेषां यथालाभम् ॥१७१॥
काकोल्यौ द्वे मेदे विदारीयुग्मं शतावरीद्राक्षा।
ऋद्धियुग्मर्षभवीरा मुण्डितिकाजीरकेऽ शूमत्यौ च ॥१७२
रास्नापुष्करचित्रकदन्तीभकणाकलिङ्गवच्याव्हाः।
कटुकाशृङ्गीपाठा एतानि पलांशिकानि कार्य्याणि॥१७३
अवद्रोणे साधितानां रसेन पादांशिकेन भाव्यानि।
गिरिजस्यैवं भावितशुद्धस्य पलानि दश षट् च ॥१७४॥
द्विपलञ्च विश्वधात्रीमागधिकाव्यमरिचानाम्।
चूर्णं पलञ्च विदार्य्यास्तालीशपलानि चत्वारि ॥१७५॥
षोड़श सिता पलानि चत्वारि घृतस्य माक्षिकस्याष्टौ।
तिलतैलस्य द्विपलं चूर्णार्द्धपलानि पञ्चानाम् ॥१७६॥
त्वक्क्षीरिपत्रत्वक्नागैलानां मिश्रयित्वा तु।
गिरिजस्य षोड़शपलैर्गुड़िकाः कार्य्यास्ततोऽक्षसमाः१७७
ताः शुष्का नवकुम्भे जातीपुष्पाधिवासिते स्थाप्याः।
तासामेका काले भक्ष्या पेयापि वा सततम् ॥१७८॥
क्षीररसदाड़िमरसाः सुरासवं मधु च शिशिरतोयानि।

आलोडनानि तासामनुपाने वा प्रशस्यते ॥१७९॥
जीर्णे सघृतपयोजाङ्गलीनिर्यूहयूषभोजी स्यात् ।
सप्ताहं यावदतः परं भवेत् सामान्यः ॥१८०॥
भुक्तापि भक्षितेयं यदृच्छया नावहेद्भयं किञ्चित् ।
निरुपद्रवा प्रयुक्ता सुकुमारकैः कामिभिश्चैव ॥१८१॥
संवत्सरप्रयुक्ता हन्त्येषा वातशोणितं प्रबलम् ।
बहुवार्षिकमपि गाढ़ं यक्ष्माणं चाढ्यवातञ्च ॥ १८२ ॥
ज्वरयोनिशुक्रदोषप्लीहार्शःपाण्डुग्रहणीरोगान् ।
ब्रध्नवमिगुल्मपीनसहिक्काकासारुचिश्वासान् ॥१८३॥
जठरं श्वित्रं कुष्ठं पाण्डुरं क्लैव्यं मदं चयशोषम् ।
उन्मादापस्मारौ वदनाक्षिशिरोगदान् सर्वान् ॥१८४॥
आनाहमतीसारं सासृग्दरं कामलाप्रमेहांश्च ।
यकृदर्बुदानि विद्रधिं भगन्दरं रक्तपित्तञ्च ॥१८५॥
अतिकार्श्यमतिस्थौल्यं स्वेदमथ श्लीपदञ्च विनिहन्ति ।
दंष्ट्राविषं समौलं गराणि बहुप्रकाराणि ॥१८६॥
मन्त्रौषधियोगान् विप्रयुक्तान् भौतिकान् भावान् ।
पापालक्ष्मी चेयं शमयेद् गुड़िका शिवा नाम्ना ॥१८७॥
बल्या वृष्या धन्या कान्तियशःप्रजाकरी चैयम् ।
दद्यान्नृपवल्लभतां जयं विवादे सुखस्था च ॥ १८८ ॥
श्रीमान् प्रकृष्टमेधःस्मृतिबुद्धिबलान्वितोऽतुलशरीरः ।
पुष्ट्योजोवर्णेन्द्रियतेजोबलसम्पदुपेतः ॥१८९॥
बलीपलितरोगरहितो जीवेच्छरदां शतद्वयं पुरुषः ।
संवत्सरप्रयोगाद् द्वाभ्यां शतानि चत्वारि ॥१९०॥
सर्वामयजित् कथितं मुनिगणभक्ष्यं रसायनरहस्यम् ॥१९१॥

समुद्रभूवामृतमन्थनोत्थः खेदः शिलाभ्योऽमृतवह्निरेः प्राक्।
यो मन्दरस्यात्मभुवा हिताय न्यस्तश्च शैलेषु शिलाजरूपी १८२
शिवागुड़िकेति रसायनमुक्तं गिरीशेन गणपतये।
शिववदनविनिर्गता यस्मान्नाम्ना तस्माच्छिवागुड़िकेति १८३
शैवसिद्धान्तोक्ता शिवागुड़िकेयम्।

शिवागुड़िका।

सुपक्वभल्लातफलानि सम्यक्
द्विधा विदार्य्याढकसम्मितानि।
विपाच्य तोयेन चतुर्गुणेन
चतुर्थशेषे व्यपनीयनानि॥ १८४॥
पुनः पचेत् क्षीरचतुर्गुणेन
घृतांशयुक्तेन घनं यथा स्यात्।
सितोपलाषोड़शभिः पलैस्तु
विमिश्र्य संस्थाप्य दिनानि सप्त॥ १८५॥
ततः प्रयोज्याग्निबलेन मात्रां
जयेद् गुदोत्थानखिलान् विकारान्।
कचान् सुनीलान् घनकुञ्चिताग्रान्
सुपर्णदृष्टिं सुकुमारताञ्च॥ १८६॥
जवं हयानाञ्च मतङ्गजं बल
स्वरं मयूरस्य हुताशदीप्तिम्।
स्त्रीवल्लभत्वं लभते प्रजाञ्च
नीरोगमब्दद्विशतानि चायुः॥ १८७॥
न चान्नपाने परिहार्य्यमस्ति
न चातपे चाध्वनि मैथुने च।

प्रयोगकाले सकलामयानां
राजा ह्ययं सर्वरसायनानाम् ॥ १९८ ॥
भल्लातकशुद्धिरिह प्रागिष्टचूर्णगुडनात् ।
घृताच्चतुर्गुणं क्षीरं घृतस्य प्रस्थ इष्यते ॥ १९९ ॥

अमृतभल्लातकी ।

इति रसायनाधिकारः ।

## अथ वृष्याधिकारः ।

पिप्पलीलवणोपेतौ वस्ताण्डौ क्षीरसर्पिषा ।
साधितौ भक्षयेद्यस्तु स गच्छेत् प्रमदाशतम् ॥१॥
वस्ताण्डसिद्धे पयसि साधितानसकृत् तिलान् ।
यः खादेत् स नरो गच्छेत् स्त्रीणां शतमपूर्ववत् ॥२॥
चूर्णं विदार्य्याः सुकृतं स्वरसेनैव भावितम् ।
सर्पिः क्षीरयुतं लीढ्वा शतं गच्छेद् वराङ्गनाः ॥३॥
एवमामलकं चूर्णं स्वरसेनैव भावितम् ।
शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत् ।
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यते ॥ ४ ॥
विदारीकन्दकल्कन्तु घृतेन पयसा नरः ।
उडुम्बरसमं खादन् वृद्धोऽपि तरुणायते ॥५॥
स्वयंगुप्तगोक्षुरयोर्बीजचूर्णं सशर्करम् ।
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत् ॥६॥
उच्चटाचूर्णमप्येवं क्षीरेणोत्तममुच्यते ।
शतावर्य्युच्चटाचूर्णं पेयमेवं सुखार्थिना ॥७॥
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ।

पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत् ॥८॥
गोक्षुरकः क्षुरकः शतमूलीवानरीनागबलातिबला च ।
चूर्णमिदं पयसा निशि पेयं यस्य गृहे प्रमदाशतमस्ति ॥९॥
घृतभृष्टो दुग्धमाषपायसो वृष्य उत्तमः ।
दध्नः सारं शरच्चन्द्रसन्निभं दोषवर्जितम् ॥१०॥
शर्कराक्षौद्रमरिचैस्तुगाक्षीर्य्या च बुद्धिमान् ।
युक्त्या युक्तं ससूक्ष्मैलं नवे कुम्भे शुचौ पटे ॥११॥
मार्जिते प्रक्षिपेच्छीते घृताढ्यं षष्टिकौदनम् ।
तद्द्यादुपरिष्टाच्च रसानं मात्रया पिबेत् ।
वर्णस्वरबलोपेतः पुमांस्तेन वृषायते ॥ १२ ॥
आर्द्राणि मत्स्यमांसानि शफरीर्वा सुभर्जिताः ।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम् ॥१३
शतावरीरजःप्रस्थं प्रस्थं गोक्षुरकस्य च ।
वाराह्या विंशतिपलं गुडूच्याः पञ्चविंशतिः ।
भल्लातकानां द्वात्रिंशच्चित्रकस्य दशैव तु ॥१४॥
तिलानाशोधितानाञ्च प्रस्थं दद्यात् सुचूर्णितम् ।
त्र्यूषणस्य पलान्यष्टौ शर्करायाश्च सप्ततिः ॥१५॥
माक्षिकं शर्करार्द्धेन माक्षिकार्द्धेन वै घृतम् ।
शतावरीसमं देयं विदारीकन्दजं रजः ॥ १६ ॥
एतदेकीकृतं चूर्णं स्निग्धे भाण्डे निधापयेत् ।
पलार्द्धमुपयुञ्जीत यथेष्टञ्चापि भोजनम् ॥१७॥
मासैकमुपयोगेन जरां हन्ति रुजामपि ।
वलीपलितखालित्यमेहपाण्ड्वाद्यपीनसान् ॥१८॥
हन्त्यष्टादश कुष्ठानि तथाष्टावुदराणि च ।

भगन्दरं मूत्रकृच्छ्रं गृध्रसीं सहलीमकम् ॥१९॥
क्षयञ्चैव महाश्वासान् पञ्चकासान् सुदारुणान्।
अशीतिं वातजान् रोगान् चत्वारिंशच्च पैत्तिकान् ॥२०॥
विंशतिं श्लैष्मिकांश्चैव संसृष्टान् सान्निपातिकान्।
सर्वानर्शोगदान् हन्ति वृक्षमिन्द्राशनिर्यथा ॥२१॥
स काञ्चनाभो मृगराजविक्रमस्तुरङ्गमञ्चाप्यनुयाति वेगतः।
स्त्रीणां शतं गच्छति सोऽतिरेकं प्रकृष्टदृष्टिश्च यथा विहङ्गः२२
पुत्रान् सञ्जनयेद्वीरान् नरसिंहनिभांस्तथा।
नारसिंहमिदं चूर्णं सर्वरोगहरं नृणाम् ॥ २३ ॥
वाराहीकन्दसञ्ज्ञस्तु चर्मकारालुको मतः।
पश्चिमे दृष्टिशब्दाख्यो वराहलोमवानिव ॥२४॥

नारसिंहचूर्णम्।

गोधूमाच्च पलशतं निःक्वाथ्य सलिलाढके।
पादावशेषे पूते च द्रव्याणीमानि दापयेत् ।२५॥
गोधूमं मुञ्जातफलं माषद्राक्षापरूषकम्।
काकोली क्षीरकाकोली जीवन्ती सशतावरी ॥२६॥
अश्वगन्धा सखर्जूरा मधुकं त्र्यूषणं सिता।
भल्लातकमात्मगुप्ता समभागानि कारयेत् ॥२७॥
घृतप्रस्थं पचेदेकं क्षीरं दत्त्वा चतुर्गुणम्।
मृदग्निना च सिद्धे ऽस्मिन् द्रव्याण्येतानि निःक्षिपेत् ॥२८॥
त्वगेलापिप्पलीधान्यकर्पूरं नागकेशरम्।
यथालाभं विनिक्षिप्य सिताक्षौद्रपलाष्टकम् ॥२९॥
दत्त्वेक्षुदण्डेनालोड्य विधिवद्विनियोजयेत्।
शाल्योदनेन भुञ्जीत पिबेन्मांसरसेन वा ॥३०॥

केवलस्य पिबेद्यस्य पलमात्रां प्रमाणतः।
न तस्य लिङ्गशैथिल्यं न च शुक्रक्षयो भवेत् ॥३१॥
वृष्यं परं वातहरं शुक्रसञ्जननं परम्।
मूत्रकृच्छ्रप्रशमनं वृद्धानाञ्चापि शस्यते ॥ ३२ ॥
पलद्वयं तदश्नीयाद् दशरात्रमतन्द्रितः।
स्त्रीणां शतञ्च भजते पीत्वा वानुपिबेत् पयः ॥३३॥
अश्विभ्यां निर्मितञ्चैतत् गोधूमाद्यं रसायनम्।
जलद्रोणे तु गोधूमक्वाथे तच्छेषमाढकम् ॥३४॥
मुञ्जातकस्य स्थाने तु तद्गुणं तालमस्तकम्।
कल्कद्रव्यसमं मानं त्वगादेः साहचर्य्यतः ॥३५॥

गोधूमाद्यं घृतम्।

घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत्।
शर्करापिप्पलीक्षौद्रयुक्तं तद् वृष्यमुच्यते ॥३६॥

शतावरीघृतम्।

कुष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम्
प्रस्थं घृतस्य तैलस्य तस्मिंस्तप्ते प्रदापयेत् ॥३७॥
त्वक्पत्रधन्याकव्योषजीरकैलाद्वयानलम्।
ग्रन्थिकं चव्यमातङ्गपिप्पलीविश्वभेषजम् ॥३८॥
शृङ्गाटकं कशेरुञ्च प्रलम्बं तालमस्तकम्।
चूर्णीकृतं पलांशञ्च गुडस्य च तुलां पचेत् ॥३९॥
शीतीभूते पलान्यष्टौ मधुनः सम्प्रदापयेत्।
कफपित्तानिलहरं मन्दाग्नीनाञ्च शस्यते ॥४०॥
कृशानां बृंहणं श्रेष्ठं वाजीकरणमुत्तमम्।
प्रमदासु प्रसक्तानां ये च स्युः क्षीणरेतसः ॥४१॥

यथेष्ट च गृहीतानां परमेतद् भिषग्जितम् ।
कासं श्वासं ज्वरं हिक्कां हन्ति छर्दिमरोचकम् ॥४२॥
गुडकुष्माण्डकं ख्यातमश्विभ्यां समुदाहृतम् ।
खण्डकुष्माण्डवत् पाकं स्निग्धकुष्माण्डकद्रवः ॥४३॥

गुडकुष्माण्डकः ।

यत् किञ्चिन्मधुरं स्निग्धं जीवनं वृंहणं गुरु ।
हर्षणं मनसश्चैव सर्वं तद्वृष्यमुच्यते ॥४४॥
भल्लातकवृहतीफलदाड़िमफलकल्कसाधितं कुरुते ।
लिङ्गं मर्दनविधिना कटुतैलं वाजिलिङ्गाभम् ॥४५॥
कनकरसमद्यवर्त्तितहयगन्धामूलविल्वपर्युषितम् ।
माहिषमिह नवनीतं गतवीजे कनकफलमध्ये ॥४६॥
गोमयगाढोद्वर्त्तितं पूर्वं पश्चादनेन संलिप्तम् ।
भवति हयलिङ्गसदृशं लिङ्गं कठिनाङ्गनादयितम् ॥४७॥
अश्वगन्धावरीकुष्ठमांसीसिंहीफलान्वितम् ।
चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत् ।
स्तनलिङ्गकर्णपालिवर्द्धनं म्रक्षणादिदम् ॥४८॥

अश्वगन्धातैलम् ।

भल्लातकवृहतीफलनलिनीदलसिन्धुजलशूकैः ।
माहिषनवनीतेन करम्बितैः सप्तदिनमुषितैः ॥४९॥
मूलेन हयगन्धाया माहिषीमलमर्दितपूर्वमथ लिप्तम् ।
भवति लघुक्तरासभलिङ्गं ध्रुवं पुंसाम् ॥५०॥
नीलोत्पलसितपङ्कजकेशरमधुकशर्करावलिप्तेन ।
सुरते सुचिरं रमते दृढ़लिङ्गो भवति नाभिविवरेण ॥५१॥
सिद्धं कुसुम्भतैलं भूमिलताचूर्णमिश्रितं कुरुते ।

चरणाभ्यङ्गेन रतेर्वीजस्तम्भाद्दृढं लिङ्गम् ॥५२॥
सप्ताहं छागभवसलिलसंस्थं करभवारुणीमूलम् ।
गाढोद्वर्त्तनविधिना लिङ्गस्तब्धं कुरुते ॥५३॥
गौरीकोमतण्डुलभवचूर्णेन धूपितं वस्त्रम् ।
परिधाय भज ललनां नैकाण्डे भवति हर्षार्त्तः ॥५४॥
समतिलगोक्षुरचूर्णं छागीक्षीरेण साधितं समधु ।
भुक्तं क्षपयति षाण्ढं यज्जनितं सुप्रयोगेण ॥५५॥
योगजवराङ्गबद्धं मथितेन स्खालित्यं हरति ।
उष्ट्रखगोशृङ्गोद्भवमूले पोखयोगजध्वजभङ्गहरः ॥५६॥
कुष्ठैलवालुकैलामुस्तकधन्याकमधुकक्कतः कवलः ।
अपहरति पूतिगन्धं रसोनमदिरादिजं गन्धम् ॥५७॥
क्षौद्रेण वीजपूरत्वक् लीढाधोवातगन्धनुत् ॥५८॥

इति वृष्याधिकारः ।

## अथ स्नेहाधिकारः ।

सर्पिस्तैलं वसामज्जा स्नेहेषु प्रवरं मतम् ।
तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्त्तनात् ॥१॥
केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम् ।
देयं बहुकफे चापि व्योषक्षारसमायुतम् ॥२॥
तथा धीस्मृतिमेधाग्निकाङ्क्षिणां शस्यते घृतम् ।
ग्रन्थिनाडीक्रिमिश्लेष्ममेदोमारुतरोगिषु ॥३॥
तैलं लाघवदार्ढ्यार्थं क्रूरकोष्ठेषु देहिषु ।
वातातपाध्वभारस्त्रीव्यायामक्षीणधातुषु ॥४॥
रुक्षक्लेशक्षमात्यग्निवाताहृतपथेषु च ।

ग्रीष्मे वसन्ते संन्यस्थिमर्मकोष्ठरुजासु च ।
तथा दग्धाहतभ्रष्टयोनिकर्णशिरोरुजि ॥ ५ ॥
तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ तु माधवे ।
साधारणे ऋतौ स्नेहं पिबेत् काय्र्यवशादिह ॥ ६ ॥
वातपित्ताधिको रात्रावुष्णे चापि पिबेन्नरः ।
श्लेष्माधिको दिवाशीते पिबेच्चामलभास्करे ॥ ७ ॥
स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः ।
वृद्धा बाला बलकृशा रुक्षक्षीणास्त्ररेतसः ॥ ८ ॥
वातार्त्तस्यन्दतिमिरदारुणप्रतिबोधिनः ।
स्नेह्या न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः ॥ ९ ॥
उरुस्तम्भातीसारामगलरोगगरोदरैः ।
मूर्च्छाच्छर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीड़िताः ॥ १० ॥
आमप्रसूता युक्ते च नस्ये वस्तौ विरेचने ।
स्नेहसात्म्यः क्लेशसहो दृढ़ः काले च शीतले ॥ ११ ॥
अच्छमेव पिबेत् स्नेहमच्छपानं हि शोभनम् ।
पिबेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षितः ॥ १२ ॥
शुद्ध्यर्थं पुनराहारे नैशे जीर्णे पिबेन्नरः ।
अहोरात्रमहःकृत्स्नं दिनार्द्धञ्च प्रतीक्षते ॥ १३ ॥
उत्तमामध्यमाह्रस्वास्नेहमात्राजरां प्रति ।
उत्तमस्य पलं मात्रात्रिभिश्चाक्षैश्च मध्यमे ॥ १४ ॥
जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च ।
जलमुष्णं घृते पेयं यूषस्तैलेऽनुशस्यते ॥ १५ ॥
वसामज्ज्ञोऽस्तु मण्डः स्यात् सर्वेषूष्णमथाम्बु वा ।
भल्लातकतौवरे स्नेहे शीतमेव जलं पिबेत् ॥ १६ ॥

स्नेहपीतस्तु तृष्णायां पिबेदुष्णोदकं नरः।
एवं चानुप्रशाम्यन्तं स्नेहमुष्णाम्बु नोद्धरेत् ॥१७॥
मिथ्याचाराद् बहुत्वाद्वा यस्य स्नेहो न जीर्य्यति।
विष्टभ्य वापि जीर्य्येत्तं वारिणोष्णेन वामयेत् ॥१८॥
ततः स्नेहं पुनर्दद्याल्लघुकोष्ठाय देहिने।
जीर्णाजीर्णविशङ्कायां पिबेदुष्णोदकं नरः ॥१९॥
तेनोद्गारो भवेच्छुद्धो रुचिश्चान्नं भवेत् प्रति।
भोज्यान्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि।
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमशङ्करम् ॥२०॥

त्र्यहावरं सप्तदिनं परन्तु
स्निग्धो नरः स्वेदयितव्य इष्टः।
नातः परं स्नेहनमादिशन्ति
सात्मी भवेत् सप्तदिनात् परन्तु ॥२१॥

मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया।
स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः ॥२२॥
स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरेत्।
स्निग्धस्त्र्यहं स्थितः कुर्य्याद्विरेकं वमनं पुनः ॥२३॥
एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः।
वातानुलोम्यं दीप्ताग्निर्वर्चःस्निग्धमसंहतम् ॥२४॥
स्नेहोद्वेगः क्लमः सम्यक् स्निग्धे रूक्षे विपर्य्ययः।
अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः ॥२५॥
रूक्षस्य स्नेहनं कार्य्यमतिस्निग्धस्य रूक्षणम्।
श्यामाककोरदूषान्नतक्रपिण्याकशक्तुभिः ॥२६॥
बालवृद्धादिषु स्नेहपरिहारास्तु शृणुषु।

योगानिमाननुद्विग्नान् सद्यः स्नेहान् प्रयोजयेत् ॥२७॥
भृष्टे मांसरसे स्निग्धा यवागूः स्वल्पतण्डुला ।
सक्षौद्रा सेव्यमाना तु सद्यः स्नेहनमुच्यते ॥२८॥
सर्पिस्तैलवसामज्जातण्डुलप्रसृतैः शृता ।
पाञ्चप्रसृतिकी पेया पेया स्नेहनमिच्छता ॥२९॥
सर्पिष्मती बहुतिला तथैव स्वल्पतण्डुला ।
सुखोष्णा सेव्यमाना तु सद्यः स्नेहनमुच्यते ॥३०॥
शर्कराम्रतसंसृष्टे दुह्याद् गां कलसेऽथवा ।
पाययेद्यमेतद्धि सद्यः स्नेहनमुच्यते ॥३१॥
ग्राम्यानूपौदकं मांसं गुडं दधि पयस्तिलान् ।
कुष्ठी शोथी प्रमेही च स्नेहनेन प्रयोजयेत् ॥३२॥
स्नेहैर्यथास्वं तान् सिद्धैः स्नेहयेदविकारिभिः ।
पिप्पलीभिर्हरीतक्या सिद्धैस्त्रिफलया सह ॥३३॥
स्नेहमग्रे प्रयुञ्जीत ततः स्वेदनमन्तरम् ।
स्नेहस्वेदोपपन्नस्य संशोधनमथान्तरम् ॥३४॥

इति स्नेहाधिकारः ।

## अथ स्वेदाधिकारः ।

वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते ।
स्निग्धरूक्षस्तथा स्निग्धो रूक्षसात्म्युपकल्पितः ॥१॥
व्याधौ शीते शरीरे च महान् स्वेदो महाबले ।
दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो ततः ॥२॥
आमाशयगते वाते कफे पक्वाशयाश्रये ।
रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च ॥३॥

कृषणो हृदयं दृष्टी स्वेदयेन्मृदु वा न वा ।
मध्यमं वङ्क्षणौ शेषमङ्गावयवमिष्टतः ।
न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ॥४॥
स्तम्भनीयक्षतक्षीणविषमद्यविकारिणः ।
तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः ॥५॥
पीतदुग्धदधिस्नेहमधून् कृतविरेचनान् ।
भ्रष्टदग्धगुदग्लानिक्रोधशोकभयार्दितान् ॥६॥
क्षुत्तृष्णाकामलापाण्डुमेहिनः पित्तपीड़ितान् ।
गर्भिणीं पुष्पितां सूतां मृदुवात्ययिके गदे ॥७॥
स्वेदो हितस्त्वनाग्नेयो वाते मेदः कफावृते ।
निवातगृहमायासो गुरुप्रावरणं भयम् ।८॥
उपनाहाहवक्रोधभूरिपानक्षुधातपाः ।
स्वेदयन्ति दशैतानि नरमग्निगुणादृते ॥९॥
शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे ।
संजाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता ॥१०॥
स्फोटोत्पत्तिः पित्तरक्तप्रकोपो
मदो मूर्च्छाभ्रमदाहौ क्लमश्च ।
अतिस्वेदे सन्धिपीड़ा तृषा च
क्रियाः शीतास्तत्र कुर्य्याद्विधिज्ञः ॥११॥
सर्वान् स्वेदान् निवाते तु जीर्णान्ने चावचारयेत् ।
येषां नस्यं विधातव्यं वस्तिश्चापि हि देहिनाम् ॥१२॥
शोधनीयास्तु ये केचित् पूर्वं स्वेद्यास्तु ते मताः ।
पश्चात् स्वेद्या हृते शल्ये मूढ़गर्भानुपद्रवाः ॥१३॥
सम्यक् प्रजाता काले च पश्चात् स्वेद्या विजानता ।

पित्तान्तमिष्टं वमनं विरेकादर्द्धं कफान्तञ्च विरेकमाहुः ।
द्वित्रान् सविट्कावपनीयवेगान् मेयं विरेके वमने तु पीतम् ॥१८॥
वमने च विरेके च तथा शोणितमोक्षणे ।
सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥१९॥
अयोगे लङ्घनं कार्य्यं पुनर्वापि विशोधनम् ।
अतिवान्तं घृताभ्यक्तमवगाह्य हिमे जले ॥२०॥
उपाचरेत्सिताक्षौद्रमिश्रैर्लेहैश्चिकित्सकः ।
वमनेऽतिप्रवृत्ते तु हृद्यं कार्य्यं विरेचनम् ॥२१॥
न वामयेत्तैमिरिकं न गुल्मिनं
न चापि पाण्डूदररोगपीड़ितम् ।
स्थूलक्षतक्षीणकृशातिवृद्धा-
नर्शोर्दितात्क्षेपकपीड़ितांश्च ॥२२॥
रूक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्द्धं रुधिरे च तीव्रे ।
दुष्टे च कोष्ठे क्रिमिभिर्मनुष्यं न वामयेदर्शसि चातिबद्धे ॥२३॥
एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः ।
अत्युल्वणकफा ये च ते च स्युर्मधुकाम्बुना ॥२४॥
इति वमनाधिकारः ।

## अथ विरेचनाधिकारः ।

स्निग्धस्विन्नाय वान्ताय दातव्यन्तु विरेचनम् ।
अन्यथा योजितं ह्येतद् ग्रहणीगदकृन्मतम् ॥ १ ॥
मृदुः पित्तेन कोष्ठः स्यात् क्रूरो वातकफाश्रयात् ।
मध्यमः समदोषत्वाद्योज्या मात्रानुरूपतः ॥२॥
शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णविचूर्णितम् ।

रेचनं सुकुमाराणां त्वक्पत्रमरिचांशिकम् ।
त्रिवृच्चूर्णं सितायुक्तं पिबेच्छ्रेष्ठं विरेचनम् ॥३॥

छित्त्वा द्विधेक्षुं परिलिप्य कल्कै-
स्त्रिभण्डिजातैः परिवेष्ट्य बद्ध्वा ।
पक्वन्तु सम्यक्पुटपाकयुक्त्या
खादेत्तु तं पित्तगदी सुशीतम् ॥ ४ ॥

पिप्पलीनागरक्षारं श्यामात्रिवृतया सह ।
लेहयेन्मधुना सार्द्धं कफव्याधौ विरेचनम् ॥५॥
हरीतकी विडङ्गानि सैन्धवं नागरं त्रिवृत् ।
मरिचानि च तत् सर्वं गोमूत्रेण विरेचनम् ॥६॥
त्रिवृत्कृष्णात्रयसमा त्रिफला तत्समानि च ।
क्षारकृष्णाविडङ्गानि तच्चूर्णं मधुसर्पिषा ॥७॥
लिह्याद् गुडेन गुडिकां कृत्वा वाप्युपयोजयेत् ।
कफवातकृतान् गुल्मान् प्लीहोदरभगन्दरान् ॥८॥
हन्त्यन्यानपि चाप्येतन्निरपायं विरेचनम् ।
अभयापिप्पलीमूलं मरिचं नागरं तथा ॥९॥
त्वक्पत्रपिप्पलीमुस्तविडङ्गामलकानि च ।
कर्षः प्रत्येकमेषान्तु दन्त्याः कर्षत्रयन्तथा ॥१०॥
षट्कर्षाश्च सितायास्तु द्विपलं त्रिवृतो भवेत् ।
सर्वं सुचूर्णितं कृत्वा मधुना मोदकं कृतम् ॥११॥
खादेत् प्रतिदिनञ्चैकं शीतञ्चानुपिबेज्जलम् ।
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते ॥१२॥
पाण्डुरोगं विषं कासं जङ्घापार्श्वरुजान्तथा ।
पृष्ठार्त्तिमूत्रकृच्छ्रञ्च दुर्नाम सभगन्दरम् ॥१३॥

# अथानुवासनाधिकारः ।

वातोल्वणेषु दोषेषु वाते वा वस्तिरिष्यते ।
यथोचितात्पादहीनं भोजयित्वानुवासयेत् ॥ १ ॥
न चाभुक्तवते स्नेहः प्रणिधेयः कथञ्चन ।
सूक्ष्मत्वाच्छून्यकोष्ठस्य क्षिप्रमूर्द्धमथोत्पतेत् ॥ २ ॥
षट्पली च भवेत् श्रेष्ठा मध्यमा त्रिपली भवेत् ।
कनीयसी सार्द्धपला त्रिधा मात्रानुवासने ॥ ३ ॥
प्रागदेयमाद्ये द्विपलं पलार्द्धवृद्धिर्द्वितीये पलमर्द्धवृद्धिः ।
कर्षद्वयं वा वसुमाषवृद्धिर्वस्तौ तृतीये क्रम एष उक्तः ॥ ४ ॥
माषमात्रं पले स्नेहे सिन्धुजन्मशताह्वयोः ।
स तु सैन्धवचूर्णेन शताह्वेन च संयुतः ॥ ५ ॥
भवेत् सुखोष्णश्च तथा निरेति सहसा सुखम् ।
विरिक्तश्चानुवास्यश्चेत् सप्तरात्रात् परं तदा ॥ ६ ॥
सुवर्णरूप्यत्रपुताम्ररीति-
कांस्यायसास्थिद्रुमवेणुदन्तैः ।
नलैर्विषाणैर्मणिभिश्च तैस्तैः
कार्य्याणि नेत्राणि सुकर्णिकानि ॥ ७ ॥
षड्द्वादशाष्टाङ्गुलसम्मितानि
षड्विंशतिद्वादशवर्षजानाम् ।
स्युर्मुद्गकर्कन्धुसतीलवाहि-
च्छिद्राणि वर्त्त्या पिहितानि चापि ॥ ८ ॥
यथा यवोऽङ्गुष्ठकनिष्ठकाभ्यां
मूलाग्रयोः स्युः परिणाहवन्ति ।

ऋजूनि गोपुच्छसमाकृतीनि
श्लक्ष्णानि च स्युर्गुडिकामुखानि ॥९॥
स्यात् कर्णिकैकाग्रचतुर्थभागे
मूलाश्रिते वस्तिनिबन्धने द्वे।
जारद्गवो माहिषहारिणौ वा
स्याच्छौकरो वस्तिरजस्य वापि ॥१०॥
दृढस्तनुर्नष्टशिरोविबन्धः कषायरक्तः सुमृदुः सुशुद्धः।
नृणां वयो वीक्ष्य यथानुरूपं नेत्रेषु योज्यस्तु सुबद्धसूत्रः ॥११॥
निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरे परम्।
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट् प्रसृतास्ततः ॥१२॥
प्रसृतं वर्द्धयेदूर्द्ध्वं द्वादशाष्टादशस्य तु।
आसप्ततेरिदं मानं दशैव प्रसृताः परम् ॥१३॥
यथायथं निरूहस्य पादो मात्रानुवासने।
कृतचङ्क्रमणं मुक्तविण्मूत्रं शयने सुखे ॥१४॥
नात्युच्छ्रिते न चोच्छीर्षे संविष्टं वामपार्श्वतः।
सङ्कोच्य दक्षिणं सक्थि प्रसार्य्य च ततोऽपरम्।
वस्तिं सव्ये करे कृत्वा दक्षिणेनावपीडयेत् ॥१५॥
तथास्य नेत्रं प्रणयेत् स्निग्धे स्निग्धमुखं गुदे।
उच्छ्वास्य वस्तेर्वदनं बद्धा हस्तमकम्पयन् ॥१६॥
पृष्ठवंशं प्रति ततो नातिद्रुतविलम्बितम्।
नातिवेगं न वा मन्दं सकृदेव प्रपीडयेत्।
सावशेषं प्रकुर्वीत वायुःशेषे हि तिष्ठति ॥१७॥
निरूहदानेऽपि विधिरयमेव समीरितः।
ततः प्रणिहिते स्नेहे उत्तानो वाक्शतं भवेत् ॥१८॥

प्रसारितैः सर्वगात्रैस्तथा वीर्य्यं प्रसर्पति ।
आकुञ्चयेत् शनैस्त्रिस्त्रिः सक्थिबाहू ततः परम् ।
ताडयेत्तलयोरेनं त्रींस्त्रीन् वारान् शनैः शनैः ॥१९॥
स्फिचोश्चैनं ततः श्रोणिं शय्यां त्रिरुत्क्षिपेच्छनैः ।
एवं प्रणिहिते वस्तौ मन्दायासोऽथ मन्दवाक् ॥२०॥
आस्तीर्णे शयने काममासीताचारिकैरतः ।
योज्यः शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन्न कार्य्यकृत् ॥२१॥
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य वै ।
विना पीड़ां त्रियामस्थः स सम्यगनुवासितः ॥२२॥
क्वाथार्द्धमात्रया प्रातर्धान्यशुण्ठीजलं पिबेत् ।
पित्तोत्तरे कदुष्णाम्भस्तावन्मात्रं पिबेदनु ॥२३॥
तेनास्य दीप्यते वह्निर्भक्ताकाङ्क्षा च जायते ।
अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दुष्यति ॥२४॥
कुर्य्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत् ।
यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः ॥२५॥
सर्वोऽल्पो वा वृतो रौक्ष्यादुपेक्ष्यः स विजानता ।
अनायान्तमहोरात्रात् स्नेहं सोपद्रवं हरेत् ॥२६॥
स्नेहवस्तावनायाते नान्यः सेको विधीयते ।
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः ॥२७॥
तदाङ्गसदनाध्मानशूलाः श्वासश्च जायते ।
पक्वाशयगुरुत्वञ्च तत्र दद्यान्निरूहणम् ॥२८॥
तीक्ष्णं तीक्ष्णौषधैरेव सिद्धञ्चाप्यनुवासनम् ।
स्नेहवस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः ॥२९॥
स्नेहवीर्य्यं तथा दत्तं स्नेहो नानुविसर्पति ।

अशुद्धमपि वातेन केवलेनाभिपीड़ितम् ॥२०॥
अहोरात्रस्य कालेषु सर्व्वेष्वेवानुवासयेत्।
अनुवासयेत्तृतीयेऽह्नि पञ्चमे वा पुनश्च तम् ॥२१॥
यथा वा स्नेहपक्तिः स्यादतोऽप्युल्वणमारुतान्।
व्यायामनित्यान् दीप्ताग्नीन् रुक्षांश्च प्रतिवासरम्॥ २२॥
इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये।
निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः ॥२३॥
विष्टब्धानिलविण्मूत्रः स्नेहो हीनेऽनुवासने।
दाहज्वरपिपासार्त्तिकरश्चात्यनुवासने ॥२४॥
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत्।
स्नेहात्पित्तकफोत्क्लेदो निरूहात्पवनाद्भयम् ॥२५॥
अनास्थाप्या येऽभिधेया नानुवास्याश्च ते मताः।
विशेषतस्त्वमी पाण्डुकामलामेहपीनसाः ॥२६॥
निरन्नप्लीहविड्भेदी गुरुकोष्ठकफोदराः।
अभिष्यन्दभृशस्थूलक्रिमिकोष्ठाढ्यमारुताः ॥२७॥
पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान्।
अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ॥२८॥
आमातिसारी वमिमान् संशुद्धो दत्तनावनः।
श्वासकासप्रसेकार्शोहिक्काध्मानाल्पवह्नयः ॥२९॥
शूलपायुः कृताहारो बद्धच्छिद्रदकोदरी।
कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ॥३०॥
न चैकान्तेन निर्दिष्टेऽप्यत्राभिनिविशेद् बुधः।
भवेत् कदाचित् कार्य्योपि विरुद्धापि मता क्रिया ॥४१॥
छर्दिहृद्रोगगुल्मार्त्ते वमनं सुचिकित्सिते।

अवस्थां प्राप्य निर्दिष्टं कुष्ठिनां वस्तिकर्म च ॥४२॥

इत्यनुवासनाधिकारः ।

## अथ निरूहाधिकारः ।

अनुवास्य स्निग्धतनुं तृतीयेऽह्नि निरूहयेत्
मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते वलिमङ्गले ॥१॥
अभ्यक्तस्वेदितोत्सृष्टमलं नातिबुभुक्षितम् ।
मधुस्नेहनकल्काख्यकषायावापतः क्रमात् ॥२॥
त्रीणि षड् द्वे दश त्रीणि पलान्यनिलरोगिषु ।
पित्ते चत्वरि चत्वारि द्वे द्विपञ्चचतुष्टयम् ॥३॥
षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम् ।
दत्त्वादौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम् ॥४॥
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतद्वयम् ।
एकीभूते ततः स्नेहे कल्कस्य प्रसृतं क्षिपेत् ॥५॥
संमूर्च्छितं कषायं तं पञ्चप्रसृतसंमितम् ।
वितरेत्तु यथावापमन्ते द्विप्रसृतोन्मितम् ॥६॥
वस्त्रपूतस्तथोष्णाम्बुकुम्भीवाष्पेण तापितः ।
एवं प्रकल्पितो वस्तिर्द्वादश प्रसृतो भवेत् ॥७॥
न धावत्यौषधं पाणिं न तिष्ठत्यवलिप्य च ।
न करोति च सीमन्तं सनिरूहः सुयोजितः ॥८॥
पूर्वोक्तेन विधानेन गुदवस्तिं निधापयेत् ।
त्रिंशन्मात्रास्थितो वस्तिस्ततस्तूत्कटुको भवेत् ॥९॥
जानुमण्डलमावेष्ट्य दत्तं दक्षिणपाणिना ।
छष्टनेत्रच्छटाशब्दशतं तिष्ठेदवेगवान् ॥१०॥

द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्थतः।
सम्यक् निरूढलिङ्गे तु प्राप्ते वस्तिं निवारयेत् ॥११॥

प्रसृष्टविण्मूत्रसमीरणत्वं
रुच्यग्निवृद्ध्याशयलाघवानि।
रोगोपशान्तिः प्रकृतिस्थता च
बलञ्च तत् स्यात् सुनिरूढलिङ्गम् ॥१२॥

अयोगश्चातियोगश्च निरूहस्य विरिक्तवत् ॥१३॥

स्निग्धोष्ण एकः पवने समांसो
द्वौ स्वादुशीतौ पयसा च पित्ते ॥१४॥

त्रयः समूत्राः कटुकोष्णरूक्षाः कफे निरूहा न परं विधेयाः।
एकोऽपकर्षत्यनिलं स्वमार्गात् पित्तं द्वितीयस्तु कफं तृतीयः॥१५॥

आमाशयान्तं मुहूर्त्तान्तं निरूहं शोधनैर्हरेत्।
निरूहैरेव मतिमान् क्षारमूत्राम्लसंयुतैः ॥१६॥

विगुणानिलविष्टब्धश्चिरं तिष्ठन्निरूहणः।
शूलारतिज्वराटोपान् मरणं वा प्रयच्छति ॥१७॥

न तु भुक्तवते देयमास्थापनमिति स्थितिः।
आमं तद्धि हरेत् भुक्तं छर्दिंदोषांश्च कोपयेत् ॥१८॥

आवस्थिकः क्रमश्चापि मत्वा कार्य्यो निरूहणे।
अतिप्रपीडितो वस्तिरतिक्रम्याशयं ततः ॥१९॥

वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते।
छर्दिहृल्लासमूर्च्छादीन् प्रकुर्य्याद्दाहमेव च ॥२०॥

तत्र तूर्णं गलापीडं कुर्य्याच्चाप्यवधूननम्।
शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान् ॥२१॥

सुनिरूढमथोष्णाम्बुस्नातं भुक्तरसौदनम्।

यथोक्तेन विधानेन योजयेत् स्नेहवस्तिना ॥२२॥
तदङ्गस्य पवनाशयं बलवदिष्यते ।
रसौदनस्तेन शस्तस्तदहस्यानुवासनम् ॥ २३ ॥
द्राक्षामूलीकषायेण शताह्वाञ्च प्रयोजयेत् ।
सैन्धवाच्च मधुनो द्विपलं द्विपलं तथा ॥ २४ ॥
तैलस्य पलमेकन्तु फलस्यैकत्र योजयेत् ।
अर्द्धमात्रकसञ्ज्ञोऽयं वस्तिर्देयो निरूहवत् ॥२५॥
न च स्नेहो न च स्वेदः परिहारविधिर्न च ।
आत्रेयानुमतो ह्येष सर्वरोगनिवारणः ॥२६॥
यक्ष्मघ्नश्च शूलघ्नश्च क्रिमिघ्नश्च विशेषतः ।
शुक्रसञ्जननो ह्येष वातशोणितनाशनः ।
बलवर्णकरो वृष्यो वस्तिः पुंसवनः परः ॥२७॥

अर्द्धमात्रकः ।

स्नेहं गुडं मांसरसं पयश्च अम्लानि मूत्रं मधुसैन्धवे च ।
एतान्यनुक्तानि च दापयेच्च निरूहयोगे मदनात् फलञ्च॥२८॥
लवणं कार्षिकं दद्यात् फलमेकन्तु मादनम् ।
वाते गुडः सिता पित्ते कफे सिद्धार्थकादयः ॥२९॥
सैन्धवाच्च समादाय शताह्वाञ्च तथैव च ।
गोमूत्रस्य पलान्यष्टौ वस्तिकायाः पलद्वयम् ॥३०॥
गुडस्य द्वे पले चैव सर्वमालोड्य यत्नतः ।
वस्त्रपूतं सुखोष्णञ्च वस्तिं दद्याद्विचक्षणः ॥३१॥
शूलं विट्सङ्गमानाहं मूत्रकृच्छ्रञ्च दारुणम् ।
क्रिम्युदावर्त्तगुल्मादीन् सद्यो हन्यान्निषेवितः ॥३२॥

क्षारवस्तिः ।

बलात्रिकर्षकुडवैरक्षीगुडसिन्धुजन्मगोमूत्रैः ।
तैलयुतोऽयं वस्तिः शूलानाहामवातहरः ॥२३॥
वैतरणः क्षारवस्तिर्मुक्तो चापि प्रदीयते ॥२४॥

वैतरणवस्तिः ।

वदर्य्यैरावतीशेलुशाल्मलीधन्वनाङ्कुराः ।
क्षीरसिद्धाः सुसिद्धाः स्युः सास्राः पिच्छिलसंगताः॥२५॥
वाराहमाहिषौरभ्रवैडालैणेयकौक्कुटम् ।
सद्यस्कमसृगाजं वा देयं पिच्छिलवस्तिषु ॥२६॥
चरकादौ समुद्दिष्टा वस्तयो ये सहस्रशः ।
व्यवहारो न तैः प्रायो निबद्धा नात्र तेन ते ॥२७॥
वस्तिर्वयः स्थापयिता सुखायुर्बलाग्निमेधास्वरवर्णकृच्च ।
सर्वार्थकारी शिशुवृद्धयूनां निरत्ययः सर्वगदापहश्च ॥२८॥

इति निरूहाधिकारः ।

## अथ नस्याधिकारः ।

प्रतिमर्षोऽवपीडश्च नस्यं प्रधमनन्तथा ।
शिरोविरेचनं चेति नस्तः कर्म च पञ्चधा ॥१॥
ईषदुच्छिङ्घनात् स्नेहो यावान् वक्त्रं प्रपद्यते ।
नस्तो निषिक्तन्तं विद्यात् प्रतिमर्षं प्रमाणतः ॥२॥
प्रतिमर्षस्तु नस्यार्थं करोति न च दोषवान् ।
नस्तः स्नेहाङ्गुलिं दद्यात् प्रातर्निशि च सर्वदा ॥३॥
न चेच्छिङ्घेदरोगाणां प्रतिमर्षः स दार्ढ्यकृत् ।
निशाहर्भुक्तवान्ताहः स्वप्नाध्वश्रमरेतसाम् ॥४॥
शिरोभ्यञ्जनगण्डूषप्रस्रावाञ्जनवर्चसाम् ।

दन्तकाष्ठस्य हास्यस्य योज्योऽन्तेऽसौ द्विबिन्दुकः ॥५॥
शोधनः स्तम्भनश्च स्यादवपीडो द्विधा मतः ।
अवपीड्य दीयते यस्मादवपीड़स्ततस्तु सः ॥६॥
स्नेहार्थं शून्यशिरसां ग्रीवास्कन्धोरसां तथा ।
बलार्थं दीयते स्नेहो नस्तः शब्दोऽत्र वर्त्तते ॥७॥
नस्यस्य स्नैहिकस्याथ देयास्त्वष्टौ तु बिन्दवः ।
प्रत्येकशो नस्तकयोर्नृणामिति विनिश्चयः ॥८॥
शुक्तिश्च पाणिशुक्तिश्च मात्रास्तिस्रः प्रकीर्त्तिताः ।
द्वात्रिंशद्विन्दवश्चात्र शुक्तिरित्यभिधीयते ॥९॥
द्वे शुक्ती पाणिशुक्तिश्च देयात्र कुशलैर्नरैः ।
तैलं कफे च वाते च केवले पवने वसाम् ॥१०॥
दद्यान्नस्तः सदा पित्ते सर्पिर्मज्जा समारुते ।
ध्मापनं रेचनश्चूर्णो युञ्ज्यात्तं मुखवायुना ॥११॥
षडङ्गुलद्विमुखया नाड्या भेषजगर्भया ।
स हि भूरितरं दोषं चूर्णत्वादपकर्षति ॥१२॥
शिरोविरेचनद्रव्यैः स्नेहैर्वातैः प्रसाधितैः ।
शिरोविरेचनं दद्यात् रोगेषु तेषु बुद्धिमान् ॥१३॥
गौरवे शिरसः शूले जाड्ये स्यन्दे गलामये ।
शोषगण्डक्रिमिग्रन्थिकुष्ठापस्मारपीनसे ॥१४॥
स्निग्धस्विन्नोत्तमाङ्गस्य प्राकृतावश्यकस्य च ।
निवातशयनस्थस्य जत्रूर्द्ध्वं स्वेदयेत् पुनः ॥१५॥
अथोत्तानार्द्धदेहस्य पाणिपादे प्रसारिते ।
किञ्चिदुन्नतपादस्य किञ्चिन्मूर्द्धनि नामिते ॥१६॥
नासापुटं पिधायैकं पर्य्यायेण निषेचयेत् ।

उष्णाम्बुतप्तं भेषज्यं प्रणाड्या पिचुना तथा ॥१७॥
दत्ते पादतलस्कन्धहस्तकर्णादि मर्दयेत्।
शनैरुच्छिङ्घ्य निष्ठीवेत्पार्श्वयोरुभयोस्ततः ॥१८॥
आभेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत्।
स्नेहं विरेचनस्यान्ते दद्याद्दोषाद्यपेक्षया ॥१९॥
त्र्यहात्त्र्यहाच्च सप्ताहं स्नेहकर्म समाचरेत्।
एकाहान्तरितं कुर्य्याद् रेचनं शिरसस्तथा ॥२०॥
सम्यक् स्निग्धे सुखोच्छ्वासस्वप्नबोधाक्षिपाटवम्।
रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्द्धशून्यता ॥२१॥
स्निग्धेऽतिकण्डूगुरुताप्रसेकारुचिपीनसाः।
सुविरिक्तेऽक्षिलघुतावक्त्रस्वरविशुद्धयः ॥२२॥
दुर्विरिक्ते गदोद्रेकः क्षामतातिविरेचिते।
तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ॥२३॥
भुक्तभक्तशिरःस्नातस्नातुकामसुतासृजाम्।
नवपीनसरोगार्त्तसूतिकाश्वासकासिनाम् ॥२४॥
शुद्धानां दत्तवस्तीनां तथाचार्त्तवदुर्द्दिने।
अन्यत्रात्ययिके व्याधौ नैषां नस्यं प्रयोजयेत् ॥२५॥
न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे।
न चोनद्वादशे धूमः कवलो नोनपञ्चमे ॥२६॥
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ।
आजन्ममरणं शस्तः प्रतिमर्षस्तु वस्तिवत् ॥२७॥

इति नस्याधिकारः।

समाप्तश्च पञ्चकर्माधिकारः।

# अथ धूमाधिकारः ।

प्रायोगिकः स्नैहिकश्च धूमो वैरेचनस्तथा ।
कासहरो वामनश्च धूमः पञ्चविधो मतः ॥१॥
ऋजुत्रिकोषफलितं कोलास्थ्यग्रप्रमाणितम् ।
वस्तिनेत्रसमद्रव्यं धूमनेत्रं प्रशस्यते ॥२॥
सार्द्धस्त्र्यंशयुतः पूर्णो ह्रस्वः प्रायोगिकादिषु ।
नेत्रे कासहरे त्र्यंशहीनः शेषे दृशाङ्गुलः ॥३॥
औषधैर्वर्त्तिकां कृत्वा शरीगर्भां विशोषिताम् ।
विगर्भामग्निसंप्लुष्टां कृत्वा धूमं पिबेन्नरः ॥४॥
वक्त्रेणैव वमेद्धूमं नस्तो वक्त्रेण वा पिबन् ।
उरःकण्ठगते दोषे वक्त्रेण धूममापिबेत् ॥५॥
नासया तु पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये ।
गन्धैरकुष्ठतगरैर्वर्त्तिः प्रायोगिके मता ॥६॥
स्नैहिके तु मधूच्छिष्टस्नेहगुग्गुलुसर्जकैः ।
शिरोविरेचनद्रव्यैर्वर्त्तिर्वैरेचने मता ॥७॥
कासघ्नैरेव कासघ्नी वामनैर्वामनी मता ।
शोष्यानपित्तरक्तार्त्तिविरिक्तोदरमेहिषु ॥८॥
तिमिरोर्द्ध्वानिलाध्मानरोहिणीदत्तवस्तिषु ।
मत्स्यमद्यदधिक्षीरक्षौद्रस्नेहविषाशिषु ॥९॥
शिरस्यभिहते पाण्डुरोगी जागरिते निशि ।
रक्तपित्तान्ध्यबाधिर्य्यतृण्मूर्च्छामदमोहकृत् ॥१०॥
धूमोऽकालेऽतिपीतो वा तत्र शीतो विधिर्हितः ।

एतद्धूमविधानन्तु लेशतः सम्प्रकाशितम् ॥११॥
इति धूमाधिकारः।

## अथ कवलगण्डूषाधिकारः।

स्निग्धोष्णैः स्नेहिको वाते स्वादुशीतैः प्रसादनः।
पित्ते कट्वम्ललवणैरूक्षैः संशोधनः कफे ॥१॥
कषायस्वादुतिक्तैश्च कवलो रोपणो व्रणे।
मुखं सञ्चार्य्यते या तु सा मात्रा कवले हिता ॥२॥
असञ्चार्य्या तु या मात्रा गण्डूषे सा प्रकीर्त्तिता।
तावच्च धारणीयोऽयं यावद्दोषप्रवर्त्तनम् ॥३॥
पुनश्चान्योऽपि दातव्यस्तथा क्षौद्रघृतादिभिः।
व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम् ॥ ४ ॥
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम्।
दाहतृष्णाव्रणान् हन्ति मधुगण्डूषधारणम् ॥५॥
धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम्।
तदेवालवणं शीतं मुखशोषहरं परम् ॥६॥
आशु क्षाराम्लगण्डूषो भिनत्ति श्लेष्मणश्चयम्।
सुखं हितं वातहरं तैलगण्डूषधारणम् ॥७॥
इति कवलगण्डूषाधिकारः।